| विषयः | पृ.सं. |
|---|---|
| मुक्तानां कर्मणि नियमाभावसमर्थनम् | २९४ |
| ॥ १९ ॥ अथानियमाधिकरणम् ॥ | २९६ |
| ब्रह्मज्ञानिनां नियमेन मोक्षो भवतीति निरूपणम् | २९६ |
| ॥ २० ॥ अथ यावदधिकरणम् ॥ | २९७ |
| उपासनायां योग्यतानियमसमर्थनम् | २९७ |
| ॥ २१ ॥ अथ इयदामननाधिकरणम् ॥ | २९९ |
| अधिकारिणां प्राणावसानत्वसमर्थनम् | २९९ |
| ॥ २२ ॥ अथ व्यतिहाराधिकरणम् ॥ | ३०० |
| प्राणाद् विष्णोरुत्तमत्वसमर्थनम् | ३०० |
| ॥ २३ ॥ अथ सत्याधिकरणम् ॥ | ३०१ |
| प्राणाद् विष्णोरेवोत्तमत्वम् | ३०१ |
| सैवेति ब्रह्मणः स्त्रीलिङ्गेन निर्देशे कारणोक्तिः | ३०२ |
| ॥ २४ ॥ अथ कामाधिकरणम् ॥ | ३०२ |
| उपासनायां श्रियोऽनधिकारित्वसमर्थनम् | ३०२ |
| ॥ २५ ॥ अथ निर्धारणाधिकरणम् ॥ | ३०४ |
| श्रवणमननध्यानरूपसमस्तोपास्तेः कर्तव्यतासमर्थनम् | ३०४ |
| ॥ २६ ॥ अथ प्रदानाधिकरणम् ॥ | ३०५ |
| उपास्तौ गुरुप्रसादरूपेतिकर्तव्यताया आवश्यकत्वोक्तिः | ३०५ |
| ॥ २७ ॥ अथ लिङ्गभूयस्त्वाधिकरणम् ॥ | ३०६ |
| गुरुप्रसादस्य बलीयस्त्वसमर्थनम् | ३०६ |
| ॥ २८ ॥ अथ पूर्वविकल्पाधिकरणम् ॥ | ३०७ |
| पश्चात्तनोऽपि गुरुः स्वीकार्य इति निरूपणम् | ३०७ |
| ॥ २९ ॥ अथ विद्याधिकरणम् ॥ | ३०९ |

| विषयः | पृ.सं. |
| --- | --- |
| ब्रह्मज्ञानमेव मोक्षसाधनम् | ३०९ |
| ॥ ३० ॥ अथ श्रुत्यधिकरणम् ॥ | ३१० |
| आक्षेपनिरासपूर्वकं ज्ञानस्य मोक्षसाधनत्वसमर्थनम् | ३१० |
| ॥ ३१ ॥ अथ अनुबन्धाधिकरणम् ॥ | ३११ |
| उपासनस्य भक्तिपूर्वकत्वसमर्थनम् | ३११ |
| ॥ ३२ ॥ अथ प्रज्ञान्तराधिकरणम् ॥ | ३१२ |
| ब्रह्मदर्शने तारतम्यसमर्थनम् | ३१२ |
| मानसक्रियात्वेनोक्तस्य ध्यानस्य प्रज्ञान्तरपदवाच्यत्वानुपपत्तिशङ्का, तत्परिहारश्च | ३१२ |
| ॥ ३३ ॥ अथ न सामान्याधिकणम् ॥ | ३१३ |
| बिम्बदर्शनमेव मुक्तिहेतुः | ३१३ |
| ॥ ३४ ॥ अथ परेणाधिकरणम् ॥ | ३१५ |
| भक्तेः स्वातन्त्र्येणापरोक्षज्ञानहेतुत्वं न सम्भवति | ३१५ |
| ॥ ३५ ॥ अथ एकाधिकरणम् ॥ | ३१६ |
| उपासनस्यानादियोग्यतासापेक्षत्वसमर्थनम् | ३१६ |
| ॥ ३६ ॥ अथ अङ्गावबद्धाधिकरणम् ॥ | ३१७ |
| अङ्गावबद्धानां चतुर्मुखब्रह्मादीनामुपास्तिः कार्या इति निरूपम् | ३१७ |
| ॥ ३७ ॥ अथ भूमाधिकरणम् ॥ | ३१८ |
| एतदधिकरणप्रतिपाद्यविषयः | ३१८ |
| सूत्रार्थः | ३१९ |
| ॥ ३८ ॥ अथ नानाधिकरणम् ॥ | ३१९ |
| भूमगुणस्य तारतम्येन सर्वोपास्यत्वकथनम् | ३१९ |
| ॥ ३९ ॥ अथ विकल्पाधिकरणम् ॥ | ३२० |
| बिम्बान्यनृसिंहाद्युपासनस्य विकल्पत्वकथनम् | ३२० |

| विषयः | पृ.सं. |
|---|---|


| | |
|---|---|
| ।। ४० ।। अथ कामाधिकरणम् ।। | ३२१ |
| एतदधिकरणप्रतिपाद्यविषयः | ३२१ |
| 'अपूर्वहेत्वभावात्' इति पदच्छेदेन कृतं भावबोधोक्तं वर्णकान्तरम् | ३२१ |
| ।। ४१ ।। अथ अङ्गाधिकरणम् ।। | ३२२ |
| 'ब्रह्मादयः भगवदङ्गाश्रिताः' इत्युपासने देवानामेवाधिकारः | ३२२ |
| सूत्रार्थः | ३२३ |
| ।। ४२ ।। अथ नवाधिकरणम् ।। | ३२४ |
| अङ्गदेवतोपासनं देवेतराणां नास्ति | ३२४ |
| **अथ तृतीयाध्यायस्य चतुर्थः पादः** | |
| ज्ञानसामर्थ्यकथनम् | ३२६ |
| ।। १ ।। पुरुषार्थाधिकरणम् ।। | ३२६ |
| ज्ञानस्य स्वर्गाद्यशेषपुरुषार्थहेतुत्वमहिमोक्तिः | ३२६ |
| ज्ञानिनां कामाभावात् कामितं ज्ञानेन प्राप्यत इत्ययुक्तमिति शङ्का तन्निरासश्च | ३२६ |
| ।। २ ।। अथ असार्वत्रिकाधिकरणम् ।। | ३३१ |
| ज्ञानाधिकारिता न सर्वनिष्ठा | ३३१ |
| ।। ३ ।। अथ अविशेषाधिकरणम् ।। | ३३२ |
| देवादीनां साम्येन न ज्ञानाधिकारः | ३३२ |
| ।। ४ ।। अथ स्तुत्यधिकरणम् ।। | ३३३ |
| ज्ञानिनोऽसत्प्रवृत्तावपि ज्ञानस्य मोक्षसाधनत्वमक्षतमेव | ३३३ |
| ।। ५ ।। अथ उभयलिङ्गाधिकरणम् ।। | ३४४ |
| अपरोक्षज्ञानस्याधिकारिमात्रप्राप्यत्वकथनम् | ३४४ |
| ।। ६ ।। अथाऽधिकारिकाधिकरणम् ।। | ३४७ |
| देवादिपदानाकाङ्क्षिभिरेव ज्ञानं प्राप्यत इति निरूपणम् | ३४७ |

| विषयः | पृ.सं. |
|---|---|


| | |
|---|---|
| ॥ ७ ॥ अथ फलश्रुत्यधिकरणम् ॥ | ३५० |
| ज्ञानस्वामिनां देवानां ज्ञानदातुराचार्यस्यापि ज्ञानं फलदमिति कथनम् | ३५० |
| ॥ ८ ॥ अथ कृत्स्नभावाधिकरणम् ॥ | ३५३ |
| ज्ञानाधिकारिणां यतीनामितराश्रमिभ्योऽतिशयवर्णनम् | ३५३ |
| ॥ ९ ॥ अथान्वयाधिकरणम् ॥ | ३५५ |
| अपरोक्षज्ञानसङ्गतपरोक्षज्ञानस्यातिगोप्यत्वोक्तिः | ३५५ |
| ॥ १० ॥ अथ ऐहिकाधिकरणम् ॥ | ३५५ |
| असति प्रतिबन्धके साधनसम्पूर्तिजन्मन्येव ज्ञानोत्पत्तिरिति निरूपणम् | ३५५ |
| ॥ ११ ॥ अथ मुक्तिफलाधिकरणम् ॥ | ३५६ |
| 'ज्ञानं स्वोत्पत्तिजन्मानन्तरमेव मुक्तिसाधनम्' इति कथनम् | ३५६ |
| **अथ चतुर्थाध्यायस्य प्रथमः पादः** | |
| ॥ १ ॥ आवृत्त्यधिकरणम् ॥ | ३५८ |
| अतःशब्दोक्तमोक्षस्वरूपकथनम् | ३५८ |
| कर्मक्षयरूपमोक्षवर्णनम् | ३५८ |
| पूर्वपक्षसिद्धान्तौ | ३५८ |
| श्रवणादित्रितयकर्तव्यतासमर्थनम् | ३५८ |
| ॥ २ ॥ अथ आत्माधिकरणम् ॥ | ३५९ |
| आत्मत्वोपासनस्य नित्यशः कर्तव्यत्ववर्णनम् | ३५९ |
| पूर्वपक्षसिद्धान्तौ | ३५९ |
| सूत्रगतपदानां साफल्योक्तिः | ३६० |
| ॥ ३ ॥ अथ न प्रतीकाधिकरणम् ॥ | ३६१ |
| पूर्वपक्षसिद्धान्तौ | ३६१ |
| ॥ ४ ॥ अथ ब्रह्माधिकरणम् ॥ | ३६१ |
| ब्रह्मत्वाख्यगुणपूर्णत्वोपास्तेरावश्यकत्वसमर्थनम् | ३६१ |

| विषयः | पृ.सं. |
|---|---|
| अधिकरणमिदं व्यर्थमिति शङ्का तत्परिहारश्च | ३६२ |
| ।। ५ ।। आदित्याधिकरणम् ।। | ३६२ |
| विष्णवङ्गाश्रितत्वेन देवतोपासनस्यावश्यकर्तव्यत्वसमर्थनम् | ३६२ |
| ।। ६ ।। अथ आसीनाधिकरणम् ।। | ३६३ |
| प्रागुक्तध्यानेऽङ्गरूपासनानियमसमर्थनम् | ३६३ |
| ।। ७ ।। अथ आप्रायणाधिकरणम् ।। | ३६५ |
| ध्यानस्य मुक्तिपर्यन्तं कर्तव्यत्वसमर्थनम् | ३६५ |
| 'आप्रायणात्' इति कथने कारणोक्तिः | ३६६ |
| ।। ८ ।। अथ तदधिगमाधिकरणम् ।। | ३६६ |
| अपरोक्षज्ञानेन कर्मक्षयलक्षणफलकथनम् | ३६६ |
| 'कर्मणोः' इत्यनुक्त्वा 'अघयोः' इति कथने कारणोक्तिः | ३६७ |
| अश्लेष इति पुनर्वचने हेतुकथनम् | ३६७ |
| पुण्यं त्वित्यकथने कारणवर्णनम् | ३६९ |
| श्रुतेरित्यनुक्त्वा 'यदेव विद्यया' इति कथने हेतूक्तिः | ३७० |
| **अथ चतुर्थाध्यायस्य द्वितीयः पादः** | |
| देहक्षय-ब्रह्मनाड्योत्क्रमणयोः निरूपणम् | ३७२ |
| वाचो मनसि लयनिरूपणम् | ३७२ |
| वाङ्मनसीत्याद्यप्रसिद्धपदोपादाने कारणोक्तिः | ३७२ |
| ।। २ ।। अथ मनःप्राणाधिकरणम् ।। | ३७३ |
| मनसः प्राणे लयसमर्थनम् | ३७३ |
| सूत्रे तदिति पदस्य वैयर्थ्यशङ्का तत्परिहारश्च | ३७३ |
| ।। ३ ।। अथ अध्यक्षाधिकरणम् ।। | ३७४ |
| प्राणशब्दोक्तचतुर्मुखस्य परमात्मनि लयसमर्थनम् | ३७४ |
| 'चक्षुरादिवत्तु' इति सूत्रेण गतार्थताशङ्का, तत्परिहारश्च | ३७४ |

| विषयः | पृ.सं. |
|---|---|


|| ४ || अथ भूताधिकरणम् || ३७५
प्राग् विशिष्योक्तान्यदेवानां भूतेषु लयकथनम् ३७५
|| ५ || अथ नैकस्मिन्नधिकरणम् || ३७६
देवानां सर्वभूतेषु लयसमर्थनम् ३७६
|| ६ || अथ समनाधिकरणम् || ३७६
श्रियः विष्णौ लयो नास्ति ३७६
असृतेरित्यनुक्त्वा उपक्रमेत्युक्तौ कारणकथनम् ३७७
'नोपमर्देन' इत्यस्य साधुत्वोपपादनम् ३७९
'शारीरात्' इति वचने कारणवर्णनम् ३८०
|| ७ || अथ पराधिकरणम् || ३८१
चतुर्मुखेतरदेवानां भगवति लयः ३८१
|| ८ || अथ अविभागाधिकरणम् || ३८१
मुक्तानां भगवदधीनत्वकथनम् ३८१
पूर्वपक्ष-सिद्धान्तौ ३८२
|| ९ || अथ तदोकोऽधिकरणम् || ३८२
मनुष्याणां मुक्त्यर्थं देहादुत्क्रमणनिरूपणम् ३८२
एतदुपरि आक्षेपः समाधानं च ३८४
'यावद्देहभावित्वात्' इति कथने कारणवर्णनम् ३८४
|| १० || अथ योग्यधिकरणम् || ३८६
विद्यागत्यनुस्मरणस्याऽवश्यकत्वसमर्थनम् ३८६
**अथ चतुर्थाध्यायस्य तृतीयः पादः**
|| १ || अर्चिराद्यधिकरणम् || ३८७
ब्रह्मनाड्योत्क्रान्तानां मार्ग-गम्ययोः निरूपणम् ३८७
|| २ || अथ वायुशब्दाधिकरणम् || ३८८

| विषयः | पृ.सं. |
|---|---|
| वायोरर्चिरनन्तरप्राप्यत्वकथनम् | ३८८ |
| ॥ ३ ॥ अथ तटिदधिकरणम् ॥ | ३८८ |
| तटिल्लोकस्य संवत्सरलोकादनन्तरप्राप्यत्वकथनम् | ३८८ |
| ॥ ४ ॥ अथ आतिवाहिकाधिकरणम् ॥ | ३८९ |
| द्वितीयप्राप्यवायोरातिवाहिकत्वसमर्थनम् | ३८९ |
| ॥ ५ ॥ अथ वैद्युताधिकरणम् ॥ ५ ॥ | ३९० |
| सूत्रे वैद्युतपदप्रयोगे कारणोक्तिः | ३९१ |
| ॥ ६ ॥ अथ कार्याधिकरणम् ॥ | ३९१ |
| गम्यनिरूपणम् | ३९१ |
| कांश्चिदित्यनुक्त्वाऽप्रतीकेति कथने कारणोक्तिः | ३९५ |
| **अथ चतुर्थाध्यायस्य चतुर्थः पादः** | |
| भोगनिरूपणम् | ३९६ |
| ॥ १ ॥ सम्पद्याधिकरणम् ॥ | ३९६ |
| ॥ २ ॥ मुक्ताधिकरणम् ॥ | ३९७ |
| ब्रह्मानतिक्रमेणैव भोगान् भुञ्जानस्य मुक्तत्वसाधनम् | ३९७ |
| ॥ ३ ॥ अथ आत्माधिकरणम् ॥ | ३९७ |
| मुक्तप्राप्यज्योतिषो ब्रह्मत्वसाधनम् | ३९७ |
| ॥ ४ ॥ अथाविभागाधिकरणम् ॥ | ३९८ |
| सायुज्यभाजां भगवद्भुक्तभोगवत्त्वसाधनम् | ३९८ |
| श्रुतेरित्यवचने कारणोक्तिः | ३९८ |
| ॥ ५ ॥ अथ ब्राह्माधिकरणम् ॥ | ३९९ |
| देहाभावप्रयुक्ताभोक्तृत्वं निरस्य मुक्तस्य भोक्तृत्वसमर्थनम् | ३९९ |
| ॥ ६ ॥ अथ सङ्कल्पाधिकरणम् ॥ | ४०१ |
| मुक्तभोगस्य केवलसङ्कल्पसाध्यत्वसमर्थनम् | ४०१ |

| विषयः | पृ.सं. |
|---|---|


| | |
|---|---|
| चशब्दस्य प्रतिषेधपरत्वं किमर्थमिति शङ्का तत्परिहारश्च | ४०१ |
| ॥ ७ ॥ अथ अनन्याधिपत्यधिकरणम् ॥ | ४०२ |
| स्वावरनियम्यत्वराहित्येन मुक्तानां भोगसाधनम् | ४०२ |
| ॥ ८ ॥ अथ अभावाधिकरणम् ॥ | ४०२ |
| मुक्तस्य भोगानुपपत्तिनिरासः | ४०२ |
| 'उभयापेक्षम्' इत्यनुक्त्वा 'अन्यतरापेक्षम्' इति वचने कारणम् | ४०५ |
| प्रकारान्तरेण अन्यतरपदस्य सार्थक्यम् | ४०६ |
| ॥ ९ ॥ अथ जगद्व्यापाराधिकरणम् ॥ | ४०८ |
| मुक्तस्य भोगेयत्तासमर्थनम् | ४०८ |
| देवमण्डलेत्यनुक्त्वा आधिकारिकमण्डलेति कथने कारणवर्णनम् | ४०९ |
| सूत्रगतचकारेण नकारानुकर्षणे प्रयोजनोक्तिः | ४१० |
| ॥ १० ॥ अथ स्थित्यधिकरणम् ॥ | ४१० |
| ॥ ११ ॥ अथ अनावृत्त्यधिकरणम् ॥ | ४१२ |
| एतदधिकरणप्रतिपाद्यविषयः | ४१२ |
| **परिशिष्टम्- १ - ब्रह्मसूत्रानुक्रमणिका** | **४१४** |
| **परिशिष्टम्- २ - प्रमाणवचनसङ्ग्रहः** | **४३८** |
| **परिशिष्टम्- ३ - ब्रह्मसूत्राणि मतत्रयरीत्या** | **४७९** |
| **परिशिष्टम्- ४ - सूत्रार्थसङ्ग्रहोदाहृतग्रन्थसूची** | **५४३** |
| **परिशिष्टम्- ५ - उपयुक्तग्रन्थसूची** | **५४४** |

# प्रस्तावना

श्री गुरुभ्यो नमः

व्यासाय भवनाशाय श्रीशाय गुणराशये ।
हृद्याय शुद्धविद्याय मध्वाय च नमोनमः ॥

## प्रथमो भागः

### आदौ किञ्चिन्निवेदना

अयि सहृदयाः विद्वद्वरेण्याः, शोधप्रबन्धोऽयं भवतां पुरतः सानन्दमुपस्थापितः, यस्मिन् श्रीबादरायणप्रणीतानां ब्रह्मसूत्राणामर्थं श्रीमदानन्दतीर्थभगवत्पादभाष्य-तट्टीकानुगुणं सरलया शैल्या वर्णयतः सूत्रार्थसङ्ग्रहाख्यस्य श्रीवेङ्कटपत्याचार्यविरचितस्य ग्रन्थस्य सम्पादनं कृतम् । सम्पादितस्यास्य ग्रन्थस्य समर्पणात् प्राक् अध्यायचतुष्टये, तत्सम्बद्धतया व्याख्यानव्याख्येयग्रन्थावधिकृत्य तथा तद्विषयं तत्कर्तारमधिकृत्य च किञ्चिदुच्यते ।

### सूत्रशब्दार्थः

ब्रह्मसूत्राणामध्ययनात् प्राक् सूत्रं नाम किम् ? 'ब्रह्मसूत्राणि' इत्यत्र सूत्रशब्दः कस्मिन्नर्थे प्रयुक्त इत्यादि प्रथमं विवेचनीयम् ।

#### व्याकरणरीत्या सूत्रशब्दनिष्पत्तिः

'षिवु तन्तुसन्ताने' (दिवादिगणपठितः धातुः) इति तन्तुसन्तानार्थकषिवुधातोः 'षिविमुच्योष्टेरूच' (वार्तिकम्) इत्यनेन ष्ट्रन्प्रत्यये टेरूत्वे च सूत्रमिति शब्दः निष्पद्यते । अथवा 'सूत्र ग्रन्थने' इति धातोः णिच् प्रत्यये 'एरच्' (पा.सू. ३.३.५६) इत्यनेनाच् प्रत्यये च सति सूत्रमिति शब्दः निष्पद्यते ।

'सूत्राणि नरि तन्तवः' (अमरकोशः-का.२,वर्ग-१०,श्लो.२८) इत्यमरसिंहरचितामरकोशरीत्या सूत्रशब्दस्तन्तुरूपे वस्त्रारम्भकेऽर्थे प्रयुज्यत इति ज्ञायते। एवं व्यवस्थायां युक्तिग्रथनात्मके प्रबन्धे यज्ञोपवीतेऽपि सूत्रशब्दः पठ्यते।

अन्यान्यकोशपरिशीलनेनेदं विदितं भवति सूचनाकारिग्रन्थेऽपि सूत्रशब्दस्य प्रयोगोऽस्तीति। अयमेवार्थोऽत्र विवक्षितः। अर्थोऽयमेव श्रीवादिराजगुरुसार्वभौमैः युक्तिमल्लिकायां 'सूचनात् सूत्रमुच्यते' (युक्तिमल्लिका- भेदसौरभम् श्लो.९३) इत्यनेनोक्तम्।

## सूत्रलक्षणम्

सूत्राणीमानि किंलक्षणकानि ? येषामर्थसङ्ग्रहरूपोऽयं ग्रन्थः इत्येतद् इदम्प्रथमतया विचारणीयम्। तत्र सूत्रलक्षणं तावत् श्रीमन्मध्वाचार्यैः ब्रह्मसूत्रभाष्ये प्रथमसूत्रव्याख्यावसरे स्कान्दपुराणाधारेण एवं कथितम् -

**'अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥'** इति।

(ब्र.सू.भा.उ. स्का. वचनम् १-१-१)

अत्र यावदक्षरतां विना विवक्षितार्थासिद्धिस्तदर्थप्रतिपादनाय ततोऽधिकाक्षारानुपादानमल्पाक्षरत्वम्। एवं च भवितुमर्हतीत्यवचनमसन्दिग्धत्वम्। विशिष्टार्थत्वं सारवत्वम्। नाम अनन्यलभ्योत्तमार्थयुक्तं सारवत् इत्यर्थः। बहुशाखानिर्णायकत्वं विश्वतोमुखत्वम्। व्यर्थाक्षरराहित्यम् अस्तोभत्वम्। अर्थाप्रतिपादकत्वेऽपि साम्नि स्तोभाक्षराणां 'हा वु हा वु' इत्यादीनामृगक्षराव्याप्तगानभागपूरणायेव प्रयोजनान्तरायाक्षराप्रयोग इत्यर्थः। शब्दार्थदोषवैधुर्यम्

अनवद्यम् । यदेतावद् विशेषणसहितं तदेव सूत्रमिति सूत्रलक्षणज्ञा अभिप्रयन्ति ।

अत्र भाष्यं, निर्णयहेतुशून्यवाक्यं, कुशलपुरुषोक्तलौकिक-वार्तादिकं, भगवन्नाममन्त्रादिकं, ऋगक्षराव्याप्तगानभागपरिपूरक-सामगतस्तोभाक्षराणि, अपशब्दोपेततादृशवाक्यं च व्यावर्तयितुं क्रमेण विशेषणानि दत्तानीति तत्त्वप्रदीपदिशाऽवगन्तव्यम् ।

यद्यप्यत्र 'अल्पाक्षरत्वे सति विश्वतोमुखत्वम्' इत्येतावदेव लक्षणम् । एतावत्येव कथितेऽप्यतिव्याप्त्याद्यभावात् । तथाऽप्यन्यानि विशेषणानि स्वरूपकथनपराणि । तानि च प्रत्येकमेकैकव्यावर्त-कानि । न तु तद्व्यतिरिक्तान्यसत्वेनातिव्याप्ति-परिहारकानि । तच्च पूर्वोक्ततत्त्वप्रदीपदिशाऽनुसन्धेयम् ।

अत्र सूत्रलक्षणे अल्पाक्षरत्वमित्यस्यानुपादाने भाष्येऽतिव्याप्तिः । असन्दिग्धत्वादिविशेषणपञ्चकस्य तत्र सत्वात् । अतोऽल्पाक्षरत्व-मिति विशेषणोपादानम् । भाष्यस्य 'स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' इत्युक्तदिशा स्वपदविवरणाद्युपेतत्वेनाल्पाक्षर-त्वाभावान्न सूत्रत्वमिति भावः । एवं सूत्रलक्षणे 'विश्वतोमुखत्वं' इत्यस्यानुपादाने हरिरित्यादिभगवन्नाम्नि अल्पाक्षरत्वादिविशेषण-पञ्चकस्य सत्वादतिव्याप्तिः । अतः 'विश्वतोमुखत्वमित्यस्योपा-दानम् । हरिरित्यादिभगवन्नाम्नि विशेषणपञ्चकस्य सत्वेऽपि 'विश्वतो-मुखत्वाभावान्नातिव्याप्तिः । तथा चाल्पाक्षरत्वे सति विश्वतोमुखत्वम् इत्येव लक्षणमवगन्तव्यम् । केचनान्ये मन्यन्ते विश्वतोमुखत्वमित्येव लक्षणं नाधिकम् । अन्यानि सर्वाण्यपि विशेषणानि स्वरूप-कथनपराणीति ।

अत्र पुनरिदं विचारणीयम्– 'अल्पाक्षरमसन्दिग्धम्'[1] इत्यत्र कथितान्यल्पाक्षरत्वादीनि किं पृथग्लक्षणान्याहोस्वित् मिलितानि । नाऽद्यः । असन्दिग्धत्वसारवत्त्वास्तोभत्वानवद्यत्वानां चतुर्णामपि विशेषणानां पुराणादौ गतत्वादतिव्याप्त्यापत्तेः । न द्वितीयः । अल्पाक्षरं विश्वतोमुखमित्येतावतैव पूर्तेः स्वरूपमात्रकथकानामितरविशेषणानां वैयर्थ्यापत्तेरिति चेत्– सत्यम् । अल्पाक्षरत्वे सति विश्वतोमुखत्वमेवात्र सूत्रलक्षणत्वेनाभिमतम् । तत्र विश्वतोमुखत्वस्य पञ्चरात्रादावतिव्याप्तत्वेन प्रथमं विशेषणम् । तावन्मात्रोक्तौ 'अप्रशिख' इत्यादिलौकिकगूढपुरुषवाक्येऽतिव्याप्तिः सम्भवति । वाक्यमिदमल्पाक्षरं सद् वर्णचतुष्टयेन पादचतुष्टयसूचकम् ।

'अनेन तव पुत्रस्य प्रसुप्तस्य वनान्तरे ।
शिखामाक्रम्य पादेन खड्गेनापहृतं शिरः ॥' (त.प्र.गु.दी.उ.व.)

इति मन्त्रिपुत्रविवक्षितार्थस्य महतः श्लोकस्यैव सूचकम् । अतो मिलितस्य लक्षणत्वे न काचिदनुपपत्तिरिति गुर्वर्थदीपिकायां श्रीवादिराजगुरुसार्वभौमैः सूपपादितम् ।

### ब्रह्मसूत्रशब्दार्थः

ब्रह्म वेदस्तत्प्रतिपाद्यं परब्रह्म वा । तस्य सूत्राणि ब्रह्मसूत्राणि । निखिलवेदार्थस्य परब्रह्मणः भगवतः विष्णोः स्वरूपनिर्णयार्थानि सूत्राणि ब्रह्मसूत्राणीत्याशयः ।

ब्रह्ममीमांसा (ब्रह्मसूत्राणि) एव शारीरकमीमांसा इत्यपि व्यवह्रियते । शरीरमेव शारीरकम् । तत्र भवः शारीरको जीवः ।

---

१. ब्र.सू.भा.उ.स्कान्दवचनम्

तमधिकृत्य रचितो ग्रन्थः शारीरक इति [1]परे व्याख्यास्यन्ति । परन्तु नैतच्चारु । ब्रह्मसूत्रशब्दार्थेन विरुद्धत्वात्, न हि जीवमधिकृत्य प्रवृत्ते ग्रन्थे परब्रह्मस्वरूपनिर्णयार्थसूत्रत्वं सम्भवति ।

ननु शारीरकस्य 'त्वं'पदार्थस्य जीवस्य 'तत्'पदार्थब्रह्मरूपता-प्रतिपादकमीमांसाया अपि शारीरकजीवमधिकृत्य प्रवृत्तत्वात्, ब्रह्म-विषयसूत्रत्वं तत्र सम्भवतीति न शङ्क्यम् । ब्रह्मसूत्राणामभेद-परत्वाभावात् । नहि जन्मादिसूत्राण्यभेदपराणि । प्रत्युत तन्निरा-सकान्येव ।

तस्मादत्र शारीरको नाम परमात्मैव विवक्षितः । यथोक्तं सप्तमे गीताभाष्ये– 'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसञ्ज्ञितः'(गी.भा.) इति । तथा च भगवतः सकलगुणपूर्णत्वमीमांसैव शारीरक-मीमांसेति ज्ञेयम् । उक्तं चैतत् [2]पुराणे । सर्वदोषविहीनत्वम्' इत्यादि । एवमेवोक्तं श्रुतप्रकाशिकायामपि (रामानुजभाष्यव्याख्यायाम्)- 'शारीरकं ब्रह्ममीमांसा । जगच्छरीरकः परमात्मा शारीरः । 'तस्यैष एव शारीर आत्मा' इति श्रुतेः । तद्विषयकं शास्त्रं शारीरकम्' इति ।

## सूत्रसङ्ख्या

ब्रह्मसूत्रसङ्ख्याविषये सङ्ख्यावत्सु नैकमत्यं दृश्यते । द्वैत-दर्शनरीत्या सूत्रसङ्ख्या चतुःषष्ट्यधिकपञ्चशतं' (५६४) इति केचन

---

१. पञ्चपादीयोक्तं व्याख्यानमेतत् ।

२. सर्वदोषविहीनत्वं गुणैस्सर्वैरुदीर्णता ।
अभेदः सर्वरूपेषु जीवभेदः सदैव च ।
विष्णोरुक्तानि सर्वेषु सर्ववेदेड्यता तथा ।। (मा.भा.ता.नि.१.४४)
इति, भारततात्पर्यनिर्णयोदाहृतपुराणे सर्वमेतदुक्तमित्यर्थः ।

विमर्शका अभिप्रयन्ति । विषयेऽस्मिन् आधारत्वेन 'ब्रह्मशब्दश्च विष्णावेव' इति माध्वभाष्यस्थं वाक्यमुदाहरिष्यन्ति । वाक्यमिदमर्थ-द्वयसूचकम् । तथा हिं । सूत्रस्थब्रह्मशब्दो गुणपूर्णविष्णुवाचको नतु हिरण्यगर्भादिपर इत्येकः । अन्यस्तु – वि, ष, ण, इति त्र्यक्षर-गुणकसङ्ख्यावाचकः तद्विवरणमेवम् । 'व' इत्यक्षरोऽवर्गीयव्यञ्जनेषु चतुर्थः । 'ष' इत्यक्षरस्तस्मिन्नेव वर्गे षष्ठः । 'ण' इत्यक्षरः 'ट'वर्गे पञ्चमः । एवमुपलब्धाङ्काः क्रमेण लिख्यन्ते चेत् ४६५ इति सङ्ख्या भवति । किन्तु अङ्कानां वामतो गतिः' इति न्यायेन सा सङ्ख्या वामतः पठ्यते चेत् ५६४ भवति । एवं सूत्रसङ्ख्या प्रमाणासिद्धा '५६४' इति ते मन्यन्ते । अन्यथा सत्स्वप्यन्येषु ब्रह्मवाचकेषु शब्देषु विष्णुशब्दमेव कुतो वा प्रयुञ्जेरन् मध्वाचार्या इति तेषां विचार-सरणी ।

एवं 'वेदारिबाणाः सूत्राणि' इति वचनेनाऽपि द्वैतमतरीत्या सूत्र-सङ्ख्या ५६४ इति ज्ञायते । तथा हि । वेदा - ४, अरयः (काम-क्रोधादयः) - ६, बाणाः - ५ (अरविन्दाशोकादयः पञ्च) तथा च ४६५ भवति । 'अङ्कानां वामतो गतिः' इति न्यायेन सा सङ्ख्या वामतः पठ्यते चेत् तदा ५६४ भवति ।

द्वैतदर्शनावलम्बिषु मध्ये केचन सूत्रसङ्ख्या ५६२ इति मन्यन्ते । तत्र कारणं तु– द्वितीयाध्यायस्य तृतीयपादस्थज्ञाधिकरणे प्रचलित-पाठे दृश्यमानं 'युक्तेश्च' (ब्र.सू. २.३.१९) इति सूत्रं तथा तृतीयाध्यायस्य प्रथमपादस्थनतृतीयाधिकरणे प्रचलितपाठे दृश्यमानं 'स्मरणाच्च' (ब्र.सू. ३.१.२३) इति सूत्रं च श्रीहृषीकेशीय-सर्वमूलपाठे भाष्यवाक्यतया परिगणितं दृश्यत इत्येतदेव । तस्माद्

हृषीकेशीयपाठरीत्या सूत्रसङ्ख्या ५६२ इत्येव ज्ञेयम् । तत्सूचकश्चाऽत्मशब्द[1] इति तेषां मतम् ।

अन्यान्यमतरीत्या सूत्रसङ्ख्या एवं ज्ञेया ।

भास्कराचार्यरीत्या - ५४४
निम्बार्काचार्यरीत्या - ५४९
विज्ञानभिक्षुरीत्या - ५५६
वल्लभाचार्यरीत्या - ५५५
श्रीकण्ठाचार्यरीत्या - ५४५ इति ।

## सूत्रगाम्भीर्यम्

ब्रह्मसूत्राणां भाष्यादिषु भगवत्पादैर्योऽर्थः कथितस्तावानेवार्थ इति पाठकैर्न भ्रमितव्यम् । यतो हि श्रीमदाचार्यैरेव ब्रह्मसूत्रगाम्भीर्यमधोनिर्दिष्टरीत्या सम्यगेवं निरूपितम् ।

'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः ।
अथवा पञ्चमूर्तिः स प्रोक्तोऽधिकरणं प्रति ॥
प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वा ।
तैस्तैर्युक्तिश्रुतिन्यायविशेषैर्योग्यता यथा ॥
बृहत्तन्त्रप्रमाणेन बह्वर्थमपि सङ्ग्रहात् ।
उच्यते नरबुद्धीनामपि किञ्चिद्ग्रहार्थतः ॥' इति ।

(अनुव्याख्यावम्- १.२४९ पृ.सं. २४)

अनेनेदमुदितं भवति । ब्रह्ममीमांसाशास्त्रे प्रत्यधिकरणं प्रतिसूत्रं, प्रतिपदं प्रत्यक्षरं च तत्तच्चेतनयोग्यतानुगुणं युक्तिश्रुतिन्यायविशेषैः

---

१. कादिनव, टादिनव, पादिपञ्चमः याद्यष्टमः इति नियमानुसारेण आत्मशब्दः ब्रह्मसूत्रसङ्ख्या ५६२ इति सूचयति ।

वासुदेवादिचतुर्मूर्तिरथवा पञ्चमूर्तिश्च भगवान् प्रतिपाद्यते । एतच्च बृहत्तन्त्रप्रमाणवचनसिद्धम् । तथाऽपि मन्दनरबुद्धीनामल्पग्राहित्वाद् अस्माभिरल्प एवार्थः कथितः । यद्यपि मन्दमतीनां नरमात्राणामल्पार्थप्रतिपादकतया भाष्यं भाति तथाऽपि शेषादीनामुत्तमाधिकारिणां महाज्ञानिनां भाष्य एवार्थविशेषा भासन्त एव । तच्चोक्तम्–

'ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ॥' इति ।

(अनुव्याख्यानम् १.२४, पृ. २४)

## सर्वाण्यपि ब्रह्मसूत्राणि सिद्धान्तसूत्राण्येव

ब्रह्मसूत्रेषु कतिचन सूत्राणि पूर्वपक्षसूत्राणि कानिचन सूत्राणि सिद्धान्तसूत्राणीत्यन्ये भाष्यकाराः भाषन्ते । परन्त्विदं न सहन्ते श्रीमन्मध्वाचार्याः । तेषां दृष्ट्या सर्वाण्यपि ब्रह्मसूत्राणि सिद्धान्तसूत्राण्येव । पूर्वपक्षसूत्राणीति विभाग एव तेषामसम्मतः ब्रह्मसूत्रेषु । एतेनैककस्यापि सूत्रस्य श्रुत्यर्थनिर्णायकत्वं कथितं भवति । अन्यथा पूर्वपक्षसूत्रत्वेन परिगणितानां सूत्राणां श्रुत्यर्थनिर्णायकत्वाभावेन सूत्रत्वमेव न स्यात् ।

किञ्च, ब्रह्मसूत्रेषु केषुचिज्जैमिन्याश्मरथ्यादीनामृषीणामुल्लेखस्तत्रतत्र दृश्यते । तदाऽध्येतॄणां मानसगर्भात् संशयशिशुः समुदेति-नायं स्याद् व्याससिद्धान्त इति । संशयोऽयं श्रीमदानन्दतीर्थभगवत्पादैः प्रमाणोदाहरणेन दूरेऽपसारितः । तच्च प्रमाणवचनम्–

'कृष्णद्वैपायनमतादेकदेशविदः परे ।
वदन्ति ते यथाप्रज्ञं न विरोधः कथञ्चन ॥' इति ।

(ब्र.सू.भा.उ. पाद्मपुराणवचनम्)

इदमत्राऽकूतम् । जैमिन्यादीनामाशयः सर्वोऽपि वेदव्यासाना-माशय एव । जैमिन्याद्या महर्षयः यथाप्रज्ञं श्रीवेदव्यासमतैकदेशं ज्ञात्वा कथयन्ति । भगवान् वेदव्यासस्तु जैमिन्यादिवात्सल्येन तेषां कीर्त्यर्थं च ब्रह्मसूत्रेषु तत्तन्नामोल्लेखपुरस्सरं तन्मतमिति प्रत्यपी-पदत् । एतच्च तस्य गुणवैशाल्यं द्योतयति । अपि, च तेषां समेषां जैमिन्यादिमतानामधिकारिभेदेन प्रवृत्तत्वान्न कोऽपि विरोधश्च । एवं 'व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् । अन्ये व्यवहरन्त्ये-तान्यूरीकृत्य गृहादिवत् ॥' इति ब्र.सू.भा.उ. स्कान्दवचनाच्च जैमिन्यादिमतानां न परस्परविरोध इत्यवगन्तव्यम् । 'सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् । स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुद्ध्यते ॥' इति ब्र.सू.भा.उ.ब्राह्मवचनमप्युपरितनमेवाऽशयं पुष्णाति ।

## सूत्रप्रामाण्यम्

अनुत्तमं प्रामाण्यं तावद् ब्रह्मसूत्राणामेव नान्येषाम् । तथा हि । लोके तावदाप्तवाक्यत्वेन, श्रुतिमूलत्वेन, युक्तिमूलत्वेन चेति त्रिविधं प्रामाण्यं दृष्टचरम् । एतत्त्रिविधप्रामाण्यस्य ब्रह्मसूत्रेषु दृष्टत्वाद् ब्रह्मतन्त्रस्य सर्वोत्तमप्रामाण्यं सिद्ध्यति । तच्चोक्तमनुव्याख्याने–

**आप्तवाक्यतया तेन श्रुतिमूलतया तथा ।**
**युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत् ॥**
**दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः ।**
**अतो नैतादृशं किञ्चित्प्रमाणतममिष्यते ॥** इति ।

(अनुव्याख्यानम् १.५.६, पृ.सं. २)

अस्याऽशयः श्रीमन्न्यायसुधायां श्रीजयतीर्थैरेवमाविष्कृतः । अनेन

'विमतं (ब्रह्ममीमांसाशास्त्रं) आप्तवाक्यमनुकूलेन वक्त्राऽनुकूलान् श्रोतॄन् प्रति तदीयहितसाधनबोधनायोपदिष्टत्वात् सम्प्रतिपन्नवत् । विमतं प्रमाणमाप्तवाक्यंत्वात् सम्प्रतिपन्नवदिति अनुमानद्वयमुदितं भवति ।

एवं च यस्माद् आप्तवाक्यतया श्रुतिमूलतया युक्तिमूलतया चेति त्रिविधं प्रामाण्यं ब्रह्मसूत्राणां दृश्यते तस्माद् ब्रह्मसूत्राणां प्रामाण्यं महद् अनुत्तममित्यवगन्तव्यम् । लोके प्रामाण्यं तावत् क्वचिदेकधा दृश्यते– यथाऽऽप्तिमूलतया लौकिकविषये पितृवाक्ये । श्रुतिसंवादेन धर्मादिविषये प्रतिवाद्युदीरितवचने । तदुक्त एव पर्वतो वह्निमानिति वाक्ये युक्तिसंवादेन । क्वचित् द्वेधा । यथाऽऽप्तिश्रुतिभ्यां मन्वादि-वाक्ये । आप्तियुक्तिभ्यां– पर्वतो वह्निमान् इत्यादौ पितृवाक्ये । श्रुतियुक्तिभ्याम्– ईश्वरः सर्वज्ञ इति प्रतिवाद्युदीरितवचसि । जैमिन्यादिवाक्ये त्रेधाऽप्यस्तीति चेत्– सत्यम् । तथाऽपि यथा ब्रह्मसूत्रेषु न तथा । एतदर्थमेव 'महत्' इत्येतत् न केवलं 'प्रामाण्यं' इत्यनेन किन्तु त्रिविधमित्यनेनाप्यन्वेतव्यम् । तथा च महत् त्रिविधं महत् प्रामाण्यं ब्रह्मसूत्राणामेव नान्येषामिति यदुक्तं तद्युक्तमेवेति सिद्धम् ।

## निर्विशेषितसूत्रत्वं ब्रह्मसूत्राणामेव

'चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा' (ब्र.सू.भा.उ. स्कान्द-वचनम्) इति ब्रह्मसूत्रभाष्योदाहृतस्कान्दवचनेन सूत्रत्वं (अञ्जसा) मुख्यतः ब्रह्मसूत्राणामेवेत्युक्तम् । तदुपरीयं शङ्का समुन्मिषति । सत्स्वप्यन्येषु सूत्रेषु मुख्यतः सूत्रत्वं (सूत्रपदप्रवृत्तिनिमित्तवत्त्वं) ब्रह्मसूत्राणामेव कुतः ? इति । एतच्छङ्कापरिहारार्थमेवोक्तम्–

'निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ॥
सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ॥
इति वेदविदः प्राहुः शब्दतत्वार्थवेदिनः ।
सूत्रेषु येषु सर्वेऽपि निर्णयाः समुदीरिताः ।
शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ॥' इति ।

(ब्र.सू.भा.उ.स्का.वचनम्.)

यतः निर्विशेषितसूत्रत्वं [१]पुराणादौ ब्रह्मसूत्राणामेवोक्तमतः सूत्रत्वं मुख्यतः ब्रह्मसूत्राणामेवेत्यवधेयम् । अत्र निर्विशेषिसूत्रत्वं नाम निरुपपदसूत्रशब्दवाच्यत्वम् । निरुपपदसूत्रशब्दो यदा श्रुतिपथं गच्छति तदा सर्वेषां झटितीदम्प्रथमतया ब्रह्मसूत्राणामेव स्फुरणं जायते । यथा गीतेति निरुपपदद्व्यक्षरशब्दश्रवणेन भगवद्गीताया एव स्फुरणं, यथा वा व्यास इत्युक्तेऽन्येषु द्रौणिव्यासादिषु सत्स्वपि वासिष्ठकृष्णस्यैव स्फुरणं नान्यस्य तथा । 'मुख्यामुख्योर्मध्ये मुख्य एव सम्प्रत्ययः' इति न्यायात् । अन्यानि सूत्राणि व्याकरणसूत्रं मीमांसासूत्रमिति सोपपदसूत्र-शब्दवाच्यानि, नैवं ब्रह्मसूत्राणीत्यर्थः ।

यद्यपि ब्रह्मसूत्राणामपि सोपपदब्रह्मसूत्रशब्दवाच्यत्वमस्ति, तथाऽपि निरुपपदसूत्रशब्दवाच्यत्वस्य न काऽपि क्षतिः । इतरेषां तु सूत्राणां निरुपपदसूत्रशब्दवाच्यत्वं नास्त्येवेति भेदो ज्ञेयः ।

अनेन- ब्रह्मसूत्राणि सूत्रशब्दमुख्यप्रवृत्तिनिमित्तवन्ति, निरुपपद-

---

१. निर्विशेषितशब्दाद् वै ब्रह्मेति हरिरुच्यते । यथा सूत्रेतिशब्देन ब्रह्मसूत्रं निगद्यते ॥ इत्यादावित्यर्थः।

सूत्रशब्दवाच्यत्वात् । यत् निरुपपदयच्छब्दवाच्यं, तत् तच्छब्दीय-मुख्यप्रवृत्तिनिमित्तवत् । यथा बादरायणः निरुपपदव्यासशब्द-वाच्यत्वाद् व्यासशब्दमुख्यप्रवृत्तिनिमित्तवान् । यत् यन्मुख्यप्रवृत्ति-निमित्तशून्यं, तत् निरुपपदशब्दवाच्यं न । यथा द्रौणिव्यासादयः मुख्यव्यासत्वशून्यत्वात् निरुपपदव्यासशब्दवाच्याः न, किन्तु सोपपदव्यासशब्दवाच्या एव इत्यनुमानमुक्तं भवति ।

## ब्रह्मसूत्राणां लक्ष्यम्

ब्रह्मसूत्रोत्पत्तितत्प्रामाण्यावगत्यनन्तरमिदमवश्यमवगन्तव्यं भवति । ब्रह्मसूत्राणां लक्ष्यं किमिति ? किमर्थमिमानि सूत्राणि प्रवृत्तानीति ? अत्रेदं वक्तुं युक्तम् । यतः वेदार्थनिर्णयार्थमेवेमानि ब्रह्मसूत्राणि प्रवृत्तानि अतः वेदार्थनिर्णय एव सूत्राणां प्रधानं लक्ष्यमिति विज्ञायते । एतदेवोक्तं युक्तिमल्लिकायां भेदसौरभे श्रीवादिराजगुरुसार्वभौमैः –

**'सर्वोपनिषदामर्थं निर्णेतुं बादरायणः ।**
**निर्ममे ब्रह्मसूत्राणि सूचानात् सूत्रमुच्यते ।'** इति ।

(युक्तिमल्लिका, भेदसौरभं श्लो. ९३.)

'पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि' (ब्र.सू.भा.उ. स्का.वचनम्) इति स्कान्दपुराणवचनं, 'तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार' इति भाष्यवाक्यमपि उपरितनमेवाऽशयं पुष्णाति (पोष-यति) । वेदार्थनिर्णायकन्यायग्रथनात्मकानि ब्रह्मसूत्राणीति निर्गलितार्थः ।

आपाततः परस्परं विरुद्धत्वेन प्रतीयमानैः वेदवाक्यैः जायमानान् संशयविपरीतज्ञानादींश्च निरसितुं ब्रह्मसूत्राणि प्रवृत्तानीति

'यथार्थवचनानां च मोहार्थानां च संशयम् ।
अपनेतुं हि भगवान् ब्रह्मसूत्रमचीक्लृपत् ।
तस्मात् सूत्रार्थमागृह्य कर्तव्यस्सर्वनिर्णयः ।'

(म.भा.ता.नि.१.४३)

इति महाभारततात्पर्यनिर्णये ब्रह्मसूत्रप्रवृत्तिकारणं सम्यङ् निरूपितम् ।

## मीमांसात्रयी[1]

पैलमहर्षिविरचिता देवमीमांसा, जैमिनिमहर्षिविरचिता पूर्वमीमांसा, व्यासमहर्षिविरचिता उत्तरमीमांसा इति तिस्रः मीमांसा आहत्य मीमांसात्रयीति व्यपदिश्यन्ते । तच्चोक्तं श्रीमदानन्दतीर्थभगवत्पादैः भागवततात्पर्ये प्रकाशिकावचनोदाहरणेन 'मिमांसा त्रिविधा प्रोक्ता ब्राह्मी दैवी च कार्मिकी' (प्रकाशिकावचनम्) इति । तत्र 'सङ्कर्षणाकाण्ड' इत्यपि प्रथिताऽऽद्या देवमीमांसाऽधुना नोपलभ्यते । तस्याः पैलतदाविष्टशेषकृतत्वेऽप्याद्यन्तभागः साक्षाद् भगवता बादरायणेन व्यरचि ।

तच्चोक्तमनुव्याख्याने –

'आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ।
मध्यं तच्छेषपैलाभ्याम् ॥' (अनुव्याख्यानम्) इति ।

---

१. प्रो. के. हयवदनपुराणिकैः कन्नडभाषायामनूदितस्य महाभारततात्पर्यनिर्णयस्य द्वितीयभागस्थविषयस्य संस्कृतानुवादोऽयम् । (पृ.४६) अखिलभारतमाध्वमहामण्डलम्, बेङ्गळूरु - १९९८

एवमेव तात्पर्यनिर्णयेऽपि –

'देवमीमांसकाद्यन्तं कृत्वा पैलमथाऽदिशत् ।
शेषं च मध्यकरणे ॥' (म.भा.ता.नि.१०.८३) इति ।

तस्या आदिभागो नाम 'अथातो दैवी मीमांसा' इत्यादिमं सूत्रम् । अन्त्यभागो नाम 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते' इति सूत्रद्वयम् इति तत्त्वप्रकाशिकाकृतः श्रीजयतीर्थश्रीमच्चरणा अभिप्रयन्ति । तत्त्वप्रदीपकृतस्त्रिविक्रमपण्डिताचार्यास्तु- 'विष्णुरेव हि' 'तच्छ्रुतेः' इत्यन्तिमं सूत्रद्वयं देवमीमांसाया अन्त्यभाग इति कथयन्ति । एवं सत्यामपि विमतौ देवमीमांसाया आद्यन्तभागः भगवता श्रीवेदव्यासेन निरमायीत्यत्र नास्ति सन्देहगन्धोऽपि । धर्ममीमांसा- कर्ममीमांसा इत्यन्यान्यशब्दैः व्यवह्रियमाणायाः पूर्वमीमांसायाः कर्तारः वेदव्यासमहर्षिणः शिष्याः श्रीजैमिनिमहर्षय इति प्रसिद्धमेव । ब्रह्ममीमांसायाः कर्ता तु स्वयं भगवान् वेदव्यास इति नितान्तं प्रसिद्धमेव । एतत्तिस्रोऽपि मीमांसाः प्रमाणभूता एव । विशिष्टाद्वैतिनस्तु– एतत्तिस्रोऽपि मीमांसा आहत्य प्रमाणभूत एको ग्रन्थ इत्यूरीकुर्वन्ति । अन्ये तु- एतत्तिस्रः पृथक् प्रमाणभूताः कृतय इति मन्यन्त इति विशेषोऽवगन्तव्यः ।

व्याख्याश्चैतास्तत्त्वप्रकाशिकाव्याख्याव्याजेन भाष्यानुगुणं टीकानुगुणं च सूत्रार्थवर्णनपरा अपि न केवलं तत्रैव व्यापृतिमत्यः किन्त्वन्यत्रापि । तस्मात् केवलं सूत्रार्थवर्णन एव कटिबद्धाः कृतयोऽन्विष्यन्ते चेत् तदाऽस्माकं पुरत उपतिष्ठते श्रीजगन्नाथविरचिता सूत्रार्थदीपिका । तथा 'सूत्रार्थरत्नावली' इति लोके प्रथिताऽपि कृतिः पूर्वपक्षसिद्धान्तानां सङ्क्षेपतः निरूपणद्वारा सूत्रार्थवर्णनपरा दृश्यते ।

एवं वेदव्यासाचार्यप्रणीता सूत्रार्थमणिमालिकाऽप्येतादृशी एव , या चैतावत्कालपर्यन्तमप्रकाशिता इदम्प्रथमतया संशोधनमन्दिरद्वारा मुद्रणाय सज्जीकृता वर्तते । तादृशग्रन्थपङ्क्तिषु नूनं प्रवेष्टुमर्हतीयं नूतनतयोपलब्धा सूत्रार्थसङ्ग्रहाख्या कृतिः ।

**सूत्रार्थसम्बन्धिनो ग्रन्थाः**

१. तन्त्रदीपिका — श्रीराघवेन्द्रतीर्थविरचिता
२. सूत्रदीपिका — श्रीजगन्नाथयतिविरचिता
३. ब्रह्मसूत्रवृत्तिः[1] — श्रीसत्यनाथतीर्थशिष्येण श्रीनृसिंहाचार्येण विरचिता
४. ब्रह्मसूत्रन्यायसङ्ग्रहः — श्रीविजयीन्द्रतीर्थविरचितः
५. ब्रह्मसूत्रार्थसङ्ग्रहः — श्रीविजयीन्द्रतीर्थविरचितः
६. ब्रह्मसूत्राधिकरणारत्नमाला — श्रीसुधीन्द्रतीर्थविरचिता
७. ब्रह्मसूत्रव्याख्यानम् — श्रीधीरेन्द्रतीर्थविरचितम्
७. ब्रह्मसूत्राधिकरणाविषयवाक्यसङ्ग्रहः श्रीधीरेन्द्रतीर्थविरचितः
८. ब्रह्मसूत्रविचारः — श्रीसत्यपराक्रमतीर्थविरचितः उत्तरादिमठ होसपेटे.
९. सूत्रार्थमञ्जरी — अप्पण्णाचार्यविरचिता (मैसूर् ओरियन्टल्, ८१ पत्र ए६५६)
१०. सूत्रार्थमञ्जरी — गूढकर्तृका (१३९) जयतीर्थहस्तलिखितग्रन्थालयः व्यासनकेरे

---

१. सत्यनाथगुरोर्नत्वा शरणौ चरणौ सताम् ।
सूत्रवृत्तिं वितनुते नृसिंहस्तत्कृपाबलात् ॥

| | |
|---|---|
| ११. सूत्रार्थमञ्जरी | शर्कराश्रीनिवासाचार्यविरचिता (पत्र ९५) |
| १२. ब्रह्मसूत्रसिद्धान्तमुक्तावली | वनमालिमिश्रविरचिता |
| १३. ब्रह्मसूत्रार्थसङ्ग्रहः | आयि नरहरि आचार्यविरचितः |
| १४. ब्रह्मसूत्रव्याख्या (मारुतमण्डनम्) | वनमालिमिश्रविरचिता (उत्तारादिमठ, होसपेटे प.सं. ५२) |
| १५. ब्रह्मसूत्रछायाविवृतिः (बालबोधिनी) | शिरोमणिकृष्णाचार्य विरचिता |
| १६. ब्रह्मसूत्रार्थप्रबन्धः | गूढकर्तृकः (प. १४२) |
| १७. सूत्रार्थसङ्ग्रहः(रत्नदीपिका) | श्रीराघवेन्द्राचार्यविरचितः (आर्. एस्. पञ्चमुखी, धारवाड) |
| १८. सूत्रार्थामृतलहरी (स्वकृतव्याख्योपेता) | श्रीकृष्णावधूतरचिता (तञ्जावूर् प्यालेस् लैब्ररी आर् नं. ५७२१) |
| १९. ब्रह्मसूत्रसङ्गत्यर्थप्रकाशः[1] | पद्मनाभसूरिविरचितः |
| २०. ब्रह्मसूत्रहरिनवरत्नमाला | अय्यण्णाचार्यविरचिता |
| २१. सूत्रार्थमञ्जरी | बिदिरहळ्ळि श्रीनिवासतीर्थविरचिता |
| २२. अधिकरणरत्नमाला | श्रीवेङ्कटाचार्य (पञ्चमुखी) कृता |
| २३. ब्रह्मसूत्रार्थसङ्ग्रहः | भगवन्तरायकृतः, (मैसूर् ओरियण्टल् लैब्ररी प.३० सि.२२५२) |

१. कृष्णरामौ सम्प्रणम्य रघुनाथगुरूनपि । व्यासोपक्रमसूत्राणां सङ्गत्यर्थौ वदाम्यहम् ॥ टीका-सुधा-चन्द्रिकासु प्रोक्तार्थः सम्प्रकाश्यते । पद्मनाभेन विदुषा विदाङ्कुर्वन्तु सूरयः ॥ तंजावूर् प्यालेस् लैब्ररि,(आर्.नं ५८८९- बि)

२४. ब्रह्मसूत्रवृत्तिः श्रीकृष्णावधूतविरचिता
२५. ब्रह्मसूत्रसिद्धान्तसङ्ग्रहः काशितिम्मण्णाचार्यविरचितः
२६. ब्रह्मसूत्रस्थश्रुत्यर्थसङ्ग्रहः गूढकर्तृकः

एवं सूत्रार्थसम्बन्धिनः बहवो ग्रन्थाः **डा. व्यासनकेरे प्रभञ्जनाचार्याणाम्** ग्रन्थालये दृश्यन्ते ।

**सूत्रसङ्ख्यावैचित्र्ये सूत्रसिद्धान्तवैचित्र्ये च कारणोक्तिः**

ब्रह्मसूत्राध्यायने प्रवृत्तैः जिज्ञासुभिरिदमादौ विचारणीयं भवति यत् ब्रह्मसूत्राणामेककर्तृकत्वात् सङ्ख्यावैचित्र्ये सिद्धान्तवैचित्र्ये च किं निमित्तमिति । किञ्च प्रचलितदर्शनत्रये भगवान् वेदव्यासः कस्य दर्शनस्य प्रवर्तकः ? अद्वैतस्य वा विशिष्टाद्वैतस्य अथवा द्वैतस्य? आहोस्वित् सर्वेषां दर्शनानाम् ? इति संशयाः समुदयन्ति ।

अत्रैवं समाधातव्यम् । ग्रन्थोऽयं परब्रह्मविचाराय प्रवृत्तः । अध्यायचतुष्टयात्मकोऽयं प्रत्यध्यायं पादचतुष्टयात्मकश्च इत्यस्मिन् विषयेऽस्त्यैकमत्यं सर्वेषां दार्शनिकानाम् । अथाप्यध्यायविभाग इव पादविभाग इव चाधिकरणविभागाभावेन तत्तद्भाष्यकृतः स्वेच्छानु-सारेण विषयकल्पनयाऽधिकरणानि व्यभजन् । ब्रह्मसूत्रेष्विदं पूर्वपक्ष-सूत्रमिदं सिद्धान्तसूत्रमित्यनिर्देशात् कैश्चिद् भाष्यकृद्भिस्तथा व्यभजीत्यूहितुं शक्यते । सकृदुच्चरितानामपि शब्दानां तन्त्रावृत्याऽ-न्वयभेदकल्पनयाऽनेकार्थावबोधकत्वं गीर्वाणवाण्यां नासम्भाविता-मित्यतिरोहितमेव । एवं पदविभागव्यत्यासेनार्थेऽपि व्यत्यासस्य सम्भावितत्वात् । अध्याहारवैचित्र्यमपि तत्रतत्रार्थव्यत्यासे कारणं भवति । तत्तद्भाष्यकृतः वेदवाक्यार्थवर्णनवेलायां स्वस्वराद्धान्तोप-

योगीनि श्रुतिस्मृतिवाक्यान्युदाहृतवन्तः । सर्वमेतत् सिद्धान्तवैचित्र्ये बीजं समजनि ।

अपि च पूर्वोक्तदर्शनत्रये सूत्रकृतः व्यासस्य सम्मतं किम् ? इति शङ्का जायते । तन्निर्णयाय यत् श्रुतिस्मृत्यनुकूलं तदेव विदुषा ग्राह्यम् । यच्च स्वकपोलकल्पितं प्रमाणविरुद्धं च तत् त्याज्यमित्येव समाधातव्यं भवति ।

**वेदापेक्षया ब्रह्मसूत्राणामेवोत्तमत्वम्**

अपौरुषेयवेदापेक्षया ब्रह्मसूत्राणामेव बादरायणप्रणीतानामुत्तम-त्वमवश्यमभ्युपगन्तव्यम् । निर्णेयवेदापेक्षया निर्णायकसूत्राणां प्रबलत्वात् । न चैतत्प्रमाणशून्यत्वादुपेक्षणीयम् । पुराणप्रमित-त्वात् । तच्चोक्तं वराहपुराणस्य चातुर्मास्यकल्पे–

**'शिष्यस्याध्यापकस्यापि संहितापाठतः फलम् ।**
**प्रत्यक्षं तु गायत्री सकृत् पाठसमं लभेत् ॥**
**मीमांसा द्विविधा प्रोक्ता कर्मणो ब्रह्मणस्तथा ।**
**वेदार्थतुल्याऽऽद्या द्वितीयायाः फलं श्रुणु ।**
**प्रत्यक्षरं तु लभते गायत्रीशतजं फलम् ॥'** (वराहपुराणवचनम्)

इति वेदपाठस्य प्रत्यक्षरं गायत्रीपाठफलं कथित्वा ब्रह्ममीमांसायाः (ब्रह्मसूत्राणां) प्रत्यक्षरं गायत्रीशतपाठफलत्वमुक्तम् । तथा **'व्यासोक्तब्रह्मसूत्राणां सकृदावर्तनात् नृप । गायत्र्याः सर्ववेदानां सहस्रावृत्तिपुण्यभाक् ॥'** इति वचनमपि ब्रह्मसूत्राणामुत्तमत्वमावेद-यति । अनेनेदं विज्ञायते वेदापेक्षया ब्रह्मसूत्राणामेवोत्तमत्वमिति । न चेदमर्थवादत्वेन व्याख्येयम् । अर्थवादानामपि अबाधिते स्वार्थे प्रामाण्यस्य सर्वैरभ्युपगमात् ।

परन्त्वद्वैतिनः 'श्रुतिसूत्रविरोधे तु गुणे त्वन्यायकल्पना' इति वदन्तः सूत्रापेक्षया श्रुतीनामेव प्राधान्यमभ्युपगच्छन्ति । अत एव ते 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' (भ.गी. १३.५) इति भगवद्गीताश्लोकव्याख्यावसरे यथाश्रुतार्थं विहाय 'ब्रह्मणः सूचकानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि पदानि उच्यन्ते । तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतमित्यनुवर्तते । 'आत्मेत्युपासीत' इत्यादिभिः ब्रह्मसूत्रैरात्मा ज्ञायते' इति शाङ्करव्याख्याने उपनिषद्वाक्यैरित्यर्थः' इति व्याख्यास्यन्ति ।

## द्वितीयो भागः

### सूत्रार्थसङ्ग्रहः

प्रकृते मया शोधकार्यार्थमुपात्तोऽयं ग्रन्थः सूत्रार्थसङ्ग्रहः । अयं च नामानुगुणं सरलया शैल्या बालानामपि विनाऽऽयासं सुलभबोधो यथा स्यात्, तथा सूत्राणामर्थं सङ्गृह्य ददाति । ग्रन्थस्यास्य कर्तारः बाहुपल्लीवेङ्कटपत्याचार्याः । एतेषां सङ्क्षिप्तपरिचयः उत्तरत्र क्रियते । एतेषां तातपादानां वंशपल्लीश्रीनिवासतीर्थानां टिप्पण्यः माध्ववाङ्मये विशिष्टं स्थानं भजन्ते । अतिक्लिष्टमपि वाक्यमेभिर्व्याख्यातं सत् ललितकोमलपरिपक्वकदलीफलमिव पुनःपुनः स्वास्वाद्यतमं भवति । विविधक्षेत्रेष्वपि स्वलेखनीं व्यापारितवतामेषां परिचयः उपरिष्टात् विधास्यते ।

बाहुपल्लि वेङ्कटपत्त्याचार्या अपि स्वपितृपादा इव माध्ववाङ्मयस्य विशिष्टसेवां व्यदधुः । ब्रह्मसूत्रसम्बन्धी 'सूत्रार्थसङ्ग्रह' नामकस्तेषां ग्रन्थः पामराणां बहूपकरोति ।

## सूत्रार्थसङ्ग्रहस्य लक्ष्यम्

सूत्रार्थसङ्ग्रहाख्यस्यास्य ग्रन्थस्याध्ययनात् प्रागिदमवश्यं चिन्तनीयमापद्यते यद् ग्रन्थस्यास्य लक्ष्यं किम् ? इति । अस्योत्तर-मेतद्ग्रन्थस्य मङ्गलाचरणश्लोके लभ्यते । मङ्गलाचरणश्लोके वेङ्कट-पत्याचार्याः एवं प्रतिजानते –

**प्रणम्य वासुदेवस्य चरणौ मद्गुरोरपि ।**
**तत्त्वप्रकाशिकासंस्थः सूत्रार्थस्तु निरूप्यते ॥** इति ।

(सू.स.१.१.१)

अनेनेदमवगम्यते– तत्त्वप्रकाशिकानुगुणं सूत्रार्थवर्णनमस्य लक्ष्यमिति । नैतावताऽत्र वेङ्कटपत्याचार्यैः केवलं सूत्रार्थ एव वर्णित इति न भ्रमितव्यम् । किन्तु, तत्त्वप्रकाशिकानुगुणं पूर्वपक्षसिद्धान्त-योर्वर्णनमपि तैः कृतं तत्र तत्र दृश्यते । तत्र तत्र तत्त्वप्रदीप-सन्न्यायरत्नावली-श्रीमन्न्यायसुधा-तात्पर्यचन्द्रिका-तन्त्रदीपिका-अभिनवचन्द्रिकादिषु चर्चिताः प्रमुखविषया अत्र प्रस्तापिताः । तथाऽप्यस्य ग्रन्थस्य प्रधानं लक्ष्यं सूत्रार्थवर्णनमेव ।

अधीतभाष्याणामधीततट्टीकातत्त्वप्रकाशिकानामपि कदाचित् झटिति सूत्रार्थः न स्फुरति । यथाऽधीतगीताभाष्य-गीतातात्पर्या-णामपि गीताश्लोकार्थः झटिति दुर्विज्ञेय इति हेतोः श्रीराघवेन्द्र-गुरुसार्वभौमैः गीतार्थसङ्ग्रहाख्यः ग्रन्थोऽकारि तथाऽधीतभाष्यादि-ग्रन्थानां सूत्रार्थस्य तत्क्षणं स्फुरणाय सूत्रार्थसङ्ग्रहः वेङ्कटपत्या-चार्यैर्व्यधायि ।

## ग्रन्थकृदभिलषितं प्रयोजनम्

सूत्रार्थसङ्ग्रस्य कर्तारः वेङ्कटपत्याचार्या एतद्ग्रन्थकरणेनापूर्वं फल-

मभिलषन्ति । तथा हि । एतद्ग्रन्थस्य प्रथमाध्यायस्यान्ते त एव वरदं हरिं वरयन्ति –

**'प्रथमाध्यायसूत्रार्थः सङ्गृहीतो मया यतः ।**
**ततस्तुष्टः प्रवक्तृत्वं दद्यात् पूर्णगुणो हरिः ॥'** (सूत्रार्थसङ्ग्रहः)

इति । तेनेदं ज्ञायते तैः प्रवक्तृत्वाख्यो वरोऽपेक्षित इति । लोके तावद् वक्तृत्वं न प्राणभृन्मात्रनिष्ठमित्यनुभवसिद्धम् । तच्चोक्तम्– 'शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु'[१] इति । अत्र वेङ्कटपत्याचार्याः न केवलं वक्तृत्वं, अपि तु प्रवक्तृत्वमभिवाञ्छन्ति । एकाक्षरकोषरीत्या 'प्र' इत्यक्षरस्य भगवद्वाचकत्वेन भगवच्छास्त्रवक्तृत्वं भगवन्महिमवक्तृत्वं च भगवति तेऽभिलषन्तीति गूढाभिप्रायोऽत्र भासते । तच्च प्रवक्तृत्वं सन्तुष्टः पूर्णगुणः परो हरिरेव दद्यान्नान्यः । तच्चोक्तम्–

'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ।' इति ।

एवमेतद्ग्रन्थस्यान्तेऽपि श्रीवेङ्कटपत्याचार्याः भगवन्तं प्रार्थयन्ति –

**तेन प्रीतोऽसि चेन्नाथ जयतीर्थार्यसन्नुत ।**
**कुरु त्वं मध्वशास्त्रस्य प्रवक्तारौ तुजौ मम ॥** (सूत्रार्थसङ्ग्रहः)

इति । तेनेदं विदितं भवति – एतद्ग्रन्थनिर्माणेन वेङ्कटपत्याचार्याणामाहत्य द्वयं फलमपेक्षितम् । एकं स्वस्य प्रवक्तृत्वमपरं स्वपुत्रयोः मध्वशास्त्रप्रवक्तृत्वमिति ।

---

१. 'शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु श्रोता (दाता) भवति वा न वा ॥' (सुभाषितम्)

## पितृपादान् अधिकृत्य

श्रीवेङ्कटपत्याचार्याणां स्वपितृपादेषु नितान्तं भक्तिरासीत् । न केवलं पितृत्वेन, किन्तु गुरुत्वेनापि श्रीनिवासतीर्थाः वेङ्कटपत्याचार्यैरादृता दृश्यन्ते । तानधिकृत्य ग्रन्थान्ते त एव एवमभाणिषत–

**यस्तूत्पाद्योपनेता मां श्रीनिवासार्यसद्गुरुः ।**
**अन्नदं ज्ञानदं स्नेहात् तं वन्दे भीतिरक्षकम् ॥** (सूत्रार्थसङ्ग्रहः)

इति । लोके तावत् स एव पितेति स्तूयते यश्च जनिता वोपनेता वा विद्यादाता वाऽन्नदाता वाऽऽहोस्विद् भयत्राता वा भवेत् । तच्चोक्तम्–

**'जनिता चोपनेता च यश्च विद्यां प्रयच्छति ।**
**अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥'** (सुभाषितम्)

इति । एतादृशपञ्चविधपितृत्वविशिष्टाः स्वतातपादा इति कृतज्ञतया तान् स्मरन्ति–

**तेषामेव प्रसादेन सूत्रार्थोऽयमनूदितः ।**
**तत्त्वप्रकाशिकासंस्थः धीशुद्ध्यै मम नान्यथा ॥** (सूत्रार्थसङ्ग्रहः)

इत्यपि कथयन्ति । अनेनेदमधिगतं भवति । अध्यात्मप्रपञ्चे गुरोर्विशिष्टं स्थानमस्ति । यश्च गुरुः सुप्रसन्नः सन् शिष्याय यां विद्यामुपदिशाति सा विद्या झटिति फलति ।

एतदेवोक्तं महाभारततात्पर्यनिर्णये श्रीमदानन्दतीर्थभगवत्पादैः –

**'सम्यग् लक्षणसम्पन्नः यद् दद्यात् सुप्रसन्नधीः ।**
**शिष्याय सत्यं भवति अर्चनीयो गुरुः सदा ॥'** इति ।

(म.भा.ता.नि. १.१२५)

अत एव 'तेषामेव प्रसादेन' इति वेङ्कटपत्याचार्यैः यत् कथितं तद्युक्तमेव ।

**वंशपल्ली श्रीनिवासतीर्थाः** (क्रि.श. १५९०-१६७४)[1]

एते 'सूत्रार्थसङ्ग्रह' कर्तृणां वेङ्कटपत्याचार्याणां पितृपादाः । द्वैतवेदान्तप्रपञ्चे समेषां विदुषामविदुषां चात्यन्तं चिरपरिचिताः रचितानेकग्रन्थजाताः 'बिदिरहळ्ळि श्रीनिवासतीर्थाः' इत्यपभ्रष्ट-भाषायां ख्याताः महनीयाः वंशपल्लीश्रीनिवासतीर्थाः । एतेषां ग्रन्थजातः द्वैतवेदान्तस्य प्राथमिकाध्ययने महतीमुपकृतिमातनोत्य-ध्येतॄणामतिरोहितमेव । सतीष्वपि नैकासु टिप्पणीषु वेदान्त-ग्रन्थाध्ययनवेलायां जिज्ञासवः प्रायः एतेषां टिप्पणीरेवाऽद्रियन्ते इत्येत् एतेषां टिप्पणीनां सरलतां विशदतां महत्तां चाऽवेदयति । एतदेवोक्तमाधुनिकसंशोधकैः डा.बि.एन्.के. शर्मामहाभागैः **'History of the Dvaita school of vedanta and its literature'** इत्याख्ये स्वीयग्रन्थे- **'They are mostly glosses and they enjoy the widest popularity among the followers of Madhva, on account of their simplicity and directness of exposition.'** इति । द्वैतवाङ्मये प्रथितस्य व्यासत्रयेऽन्यतमस्य श्रीव्यासराजयतिविरचितस्य न्यायामृताख्य-ग्रन्थरत्नस्य गूढाशयं सरलया सुललितया शैल्या प्रकाशयन्ती, प्रकाशाख्या एतेषां टिप्पणी, अशेषविदुषामविदुषां च तोषमावहन्ती कं जनं न रञ्जयेत् ।

श्रीनिवासतीर्थास्तावद् अष्टचत्वारिंशदधिकग्रन्थरत्नानि रचया-

---

१. डा.बि.एन्.के.शर्मा माहाभागास्तु एतेषां कालः १६००-१६६० इति कथयन्ति)

मासुरिति श्री श्रीनिवासतीर्थकृतिमञ्जर्याख्ये ग्रन्थे **डा. व्यासनकेरे प्रभञ्जनाचार्या** अभिप्रयन्ति । वेद-उपनिषत्-प्रकरण इत्याद्यन्यान्य-वाङ्मयप्रकारेषु कृतिभिरेतैः कृतयः कृता इत्येतद् विस्मयमावहति । एतादृशमहामहिमोपेता वंशपल्लीश्रीनिवासतीर्थाः प्राक् श्रीनिवासा-चार्या इत्येव प्रथिता आसन् । एतेषां द्वैतवाङ्मयसेवां निराडम्बरं निस्पृहं सरलं पूतमवदातं जीवितं वीक्ष्य परमसन्तुष्टास्तदानीन्तनाः 'टिप्पण्याचार्यसार्वभौम' इति प्रथिताः श्रीराघवेन्द्रगुरुसार्वभौमा अवोचन्– भवन्तः लङ्घितप्रथमाश्रमा अपि कर्मन्दिन इव जीवनं यापयन्तः नैकान् ग्रन्थान् रचितवन्तः । अतः अद्यप्रभृति भवन्तः 'श्रीनिवासतीर्थाः' इति ख्यातिं भजन्तु इत्यन्वगृह्णन् । ततः प्रभृति गृहस्थानामपि तेषां 'श्रीनिवासतीर्थाः' इत्येव नामाभूत् । विषयेऽ-स्मिन् आधारभूतं प्रमाणपत्रं श्रीराघवेन्द्रगुरुसार्वभौमैः स्वहस्त-लिखितं, तद्वंशीयानां सविधेऽद्यापि दृश्यते । एतद्वंशीया इदानीं होन्नाळिग्रामे कर्नाटकराज्यस्य शिवमोग्गाजिल्लास्थे वसन्ति । तद्वंशीयाः बिदिरहळ्ळी श्रीनिवासाचार्याः तेषां तनूजाः कृष्णाचार्याः शास्त्रपारङ्गताः सदाचारसम्पन्नास्तत्रैव इदानीं वसन्ति । ये च मम 'सूत्रार्थसङ्ग्रह'स्य मूलमातृकादानेनोपाकुर्वन् ।

वेङ्कटपत्याचार्याणां हरिगुरुषु, स्वपितृपादेषु च भक्तिरधिका ।

**'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनाम् ।'** (श्वे.उ.)

इत्युक्तादिशा तेषां न केवलं वेदे कथिताः, किन्त्वकथिताश्चार्थाः प्रकाशन्ते । तादृशमहामहिमोपेताः वेङ्कटपत्याचार्याः हरिवाय्वोरनु-

ग्रहेण , स्वपितृपादप्रसादेन चापूर्वग्रन्थरत्नानि विरचय्य '[१]सुपुत्रः कुलदीपकः' इत्युक्तरीत्या स्वकुलं प्रकाशितवन्तः ।

### श्रीवेङ्कटपत्याचार्याः

श्रीवेङ्कटपत्याचार्यास्तावत् शोधकार्यार्थं मया स्वीकृतसूत्रार्थ-सङ्ग्रहाख्यस्य ग्रन्थस्य कर्तारः । महनीया एते वंशपल्लीश्रीनिवास-तीर्थानां तनूजाः । यद्यप्येतेषां चरितमधिकृत्याद्यापि यावत् न केनापि ग्रन्थो व्यरचि । श्रीनिवासतीर्थानां चरितसम्बन्धिषु ग्रन्थेष्वेतेषा-मुल्लेखस्तत्र तत्र दृश्यते । तथा एतैः स्वीयव्याख्यानग्रन्थेषूल्लिखिता या स्वगुरुपरम्परा तावदेव । तथाऽप्येतेषां वंशीयाः शिवमोग्ग-जिल्लास्थहोन्नाळीग्रामस्थाः वयोवृद्धाः ज्ञानवृद्धाः श्रीनिवासाचार्याः तथा तेषां तनूजाः श्रीकृष्णाचार्याश्च तेषां विषये यदवोचन् तदेवात्र पाठकानां पुरत उपस्थाप्यते मया ।

### देशः

वेङ्कटपत्याचार्याणां पितरः श्रीश्रीनिवासतीर्थाः कर्नाटकराज्यस्थ-धारवाडजिल्लायाः बिदिरहळ्ळिग्रामे बहुवर्षं यावत् कृतवास्तव्याः, अन्तिमेषु कतिपयेषु वर्षेषु शिवमोग्गाजिल्लास्थहोन्नाळिग्रामे न्यवसन् ।

इतः पूर्वं कतिपयवर्षपर्यन्तं तुङ्गभद्रातीरस्थहरिहराख्यक्षेत्रे च कृत-वसतयस्ते आसन् इति तद्वंशीयैः कथ्यते । तस्माद् श्रीवेङ्कट-पत्याचार्याणां जन्म, विद्याभ्यासः, गार्हस्थ्यजीवनमित्यादिकं प्रायः

---

१. 'प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः । त्रैलोक्यदीपको धर्मः सुपुत्रः कुलदीपकः ।। इति सुभाषितम् ।

बिदरहळ्ळि ग्रामे एव सञ्जातमित्यूहितुं शक्यते । एवं हरिहरहोन्नाळिग्रामयोरपि वासः नासम्भावितः ।

परन्तु श्रीनिवासतीर्थानां निर्याणानन्तरमेते हावेरिजिल्लास्थ-रट्टिहळ्ळिनामकग्रामे न्यवसन्नित्यत्र नास्ति सन्देहगन्धोऽपि । एतेषां वासगृहं पूजास्थानादिकमद्यापि बाहुपल्ल्यां दरीदृश्यते । एतद्वंशीयास्तेषु भक्त्या तत्रैव वसन्तोऽद्यापि दृश्यन्ते ।

## कालः

वेङ्कटपत्याचार्याणां पितृपादानां श्रीनिवासतीर्थानां कालः (क्रि.श. १५८६-१६४०) इति विद्वद्वरेण्यैः डा. व्यासनकेरे प्रभञ्जनाचार्यैः स्वकृतश्रीनिवासकृतिमञ्जर्यां निरधारि । तस्मात् श्रीनिवासतीर्थानां प्रथमपुत्राः वेङ्कटपत्याचार्याः स्वपितुः पञ्चविंशति-तमेऽष्टोत्तरविंशतितमे वा वयसि सञ्जाता इत्यभ्युपगमे, क्रि.श. १७१५ तः १७१८ पर्यन्तमेतेषां जन्मकाल इत्यूहितुं शक्यते । एतद्वंशीयाः प्रायः सर्वेऽपि अशीत्यधिकवर्षायुषः इति तद्वंशीयाः कृष्णाचार्यप्रभृतयः कथयन्ति । अतः वेङ्कटपत्याचार्या अप्यशी-त्यधिकसंवत्सरं यावत् महीमिमां पावयाञ्चक्रुरिति कल्पने न कोऽपि मानविरोधः । एतेषां निर्याणातिथिस्तु- पुष्यकृष्णाषष्ठीति तद्वंशीयाः कथयन्ति । तद्दिनं गुरुसमाराधनदिनत्वेन तद्वंशीया अद्याप्याचरि-ष्यन्ति ।

## सुताः

श्रीवेङ्कटपत्याचार्याणां श्रीचिक्काचार्याः, श्रीगुराचार्याः, श्री नारप्पाचार्याः, इति त्रयः सुता आसन् इति तद्वंशीयाः कथयन्ति । परन्तु 'तेन प्रीतोऽसि चेन्नाथ जयतीर्थार्यसन्नुत । कुरु त्वं मध्वशास्त्रस्य

प्रवक्तारौ 'तुजौ[1] मम' (सूत्रार्थसङ्ग्रहः) इति ग्रन्थान्ते ते पुत्रद्वयस्य मध्वशास्त्रप्रवक्तृत्वं भगवति प्रार्थयन्ति । यदि तेषां त्रयः पुत्रास्युस्तर्हि समेषां पुत्राणां प्रवक्तृत्वं प्रार्थयेयुः । न द्वयस्यैव । तेन वेङ्कटपत्याचार्याणां पुत्रद्वयमेवाऽसीत्, न पुत्रत्रयमित्यूहनीयम् । अथवा एतद्ग्रन्थकरणसमये तेषां पुत्रद्वयमेवाऽसीदित्यूहनीयम् ।

**वेङ्कटपत्याचार्याणां ग्रन्थाः**

वेङ्कटपत्याचार्यैस्तावदाहृत्य पञ्च ग्रन्थाः प्रणीताः ।

**१. सूत्रार्थसङ्ग्रहः**

प्रकृतशोधकार्ये सविमर्शसम्पादनाय मयोपात्ता कृतिः ।

**२. गुर्वर्थदीधितिः**

श्रीमन्मध्वाचार्यविरचितस्य तन्त्रसारसङ्ग्रहाख्यग्रन्थस्यापूर्वा टीका । एतावत्पर्यन्तमप्रकाशिता । बेङ्गळूरुनगरस्थपूर्णप्रज्ञविद्यापीठस्य अलङ्कारप्राध्यापकेन तिरुमल कुलकर्णि महोदयेन विद्यावारिध्युपाध्यर्थं स्वीकृता कृतिरियम् ।

**३. तारतम्यनवश्लोकी मुक्तामालाव्याख्या - (भावदीपिका)**

श्रीमन्मध्वाचार्यप्रतिपादिततारतम्यप्रकाशिकायाः, वेङ्कटपत्याचार्याणां तातपादैः श्रीश्रीनिवासतीर्थैः विरचितायाः, नवश्लोकात्मकस्तुतेः विस्तृता व्याख्येयं भावदीपिका । ग्रन्थोऽयं 'समाचार प्रेस् बेल्गाम्'तः १९०६ तमक्रिस्ताब्दे प्रकाशितः । अधुना बेङ्गळूरुनगरस्थपूर्णप्रज्ञसंशोधनमन्दिरद्वारा प्रकाशिते, डा. ए.वि.नागसम्पिगे महाभागैः सम्पादिते **'तारतम्यप्रबन्धः'** इत्यस्मिन् ग्रन्थेऽप्ययं निवेशितो वर्तते ।

---

१. 'तुक् तोकस्तनयश्च नन्दन इति प्राज्ञैरपत्यं स्मृतम् ।' इति हलायुधकोशरीत्या तुक्शब्दः पुत्रवाची ।

**४. नखस्तुतिव्याख्या**

श्रीमन्मध्वाचार्यकृतायाः श्लोकद्वयात्मकनरसिंहनखस्तुतेः व्याख्येयम् । (वेदेशग्रन्थमाला, मण्णूरु, गुल्बर्गा, कर्नाटक) तः प्रकाशिता ।

**५. श्रीश्रीनिवासस्तुतिः**

पितृस्थानीयान् तथा गुरुस्थानीयान् स्वपितृपादान् श्रीनिवास-तीर्थानधिकृत्य भक्त्या रचिता स्तुतिरियम् । इयमपि कृतिः 'वेदेशग्रन्थमाला मण्णूरु , गुल्बर्गा, कर्नाटक' तः १९८१तम क्रिस्ताब्दे प्रकाशतां नीता ।

हरिगुरुकृपापात्रैरेतैः स्वहस्तलिखिताः श्रीनिवासतीर्थकृतयोऽ-द्यापि होन्नाळिग्रामस्थश्रीबिदिरहळ्ळिश्रीनिवासाचार्याणां गृहे, तथा बाहुपल्लीस्थराघवेन्द्राचार्याणां च गृहेऽद्यापि दृश्यन्ते ।

**द्वितीये द्वितीये द्वितीयेऽद्वितीयः**

श्रीवेङ्कटपत्याचार्याः नानाशास्त्रेषु कृतभूरिपरिश्रमा अपि हरिगुरुषु विशेषभक्तिमन्तः श्रद्धावन्तश्च, आसन् । न केवलं तेष्वप्रतिमवैदुष्यं, अपि तु, शमदमादिसम्पच्चाऽसीत् । ते तावत् तन्त्रशास्त्रोक्तरीत्या नैकमन्त्राणामुपदेशमभिलषन्तः, सत्स्वपि समर्थेषु योग्येषु स्वतात-पादेषु, महातपस्विवरेण्येभ्य यतिवरेण्येभ्य एव उपदेशः प्राप्तव्य इत्या-शयेन स्वपितृपादैराज्ञप्ताः तदानीन्तनेभ्यः, महातपस्विभ्यः,अभिनव-चन्द्रिकाद्युद्ग्रन्थकर्तृभ्यः, उत्तरादिमठाधिपतिभ्यः श्रीसत्यनाथतीर्थेभ्यः मन्त्रोपदेशं स्वीचक्रुः ।

कदाचिद् वेङ्कटपत्याचार्याः श्रीसत्यनाथतीर्थश्रीचरणान् दिदृक्षवः

मठमयान् । यदा तेऽयान् तदा एकादशी तिथिरागता । माध्वास्तावदेकादश्यां , न केवलमाहारं, किन्तु जलमपि तद्दिने न स्वीकुर्वन्ति । तादृशी गरिष्ठा निष्ठा तद्व्रताचरणे माध्वानाम् । तद्दिने नक्तं जागरणमपि ते कुर्वन्ति । तद्दिने सायङ्काले श्रीचरणैराज्ञप्ताः पुराणचूडामणेः श्रीमद्भागवतस्य व्याख्याने श्रीवेङ्कटपत्याचार्या उद्यताः ।

तत्र ते-

**'शब्दस्य हि ब्रह्मण एष पन्थाः यन्नामभिर्ध्यायति धीरपार्थैः ।**
**परिभ्रमंस्तत्र न विन्दतेऽर्थान् मायामये वासनया शयानः ॥'**

(भागवतम्.२.२.२)

इति श्लोकं व्याख्यानार्थं स्वीकृतवन्तः । मायामयादिशब्द-विशिष्टतयाऽपाततोऽद्वैतप्रतिपादकमिमं श्लोकं स्वाप्रतिमवैदुष्येन सप्रमाणविमर्शं द्वैतपरतया व्याचक्रुः । तेषां व्याख्यानमेकादशी-सायङ्कालाद् द्वादश्याः ब्राह्मीमुहूर्तं यावत् सम्पन्नम् । तेषामप्रतिम-मन्यत्रादृष्टं व्याख्यानकौशलं दृष्ट्वा सन्तुष्टाः शमदमादिनिष्ठाः विद्वद्वरिष्ठाः यतिश्रेष्ठाः **श्रीसत्यनाथतीर्थश्रीपादाः 'द्वितीये द्वितीये द्वितीयेऽद्वितीयः'** इत्युपाधिना तानन्वगृह्णन् । तस्यार्थस्तु-श्रीमद्भागवतद्वितीयस्कन्धस्य द्वितीयाध्यायस्य द्वितीयश्लोकस्य व्याख्याने भवद्भिरप्रतिमं वैदुष्यमाविष्कृतमिति ।

### योगसिद्धिमन्तः वेङ्कटपत्याचार्याः

श्रीवेङ्कटपत्याचार्याः अनेकवर्षपर्यन्तं प्रतिदिनं रट्टिहळ्ळितः पञ्चाशत्किलोमीटर्दूरस्थितं हुब्बळ्ळिनगरं प्रति गतागतं कुर्वन्ति स्म पाठार्थम् । एकस्मिन्नेव दिने तावद्दूरं गत्वा पुनरागमनस्याशक्यतया,

ते वायुमार्गेण योगसिद्ध्या सञ्चेरुरिति तद्वंशीयेषु प्रथा प्रचलति । हावेरीजिल्लास्थसवणूरुवासी कश्चनश्रीखण्डेराव्नामा भक्तः श्रीवेङ्कट-पत्याचार्यान् बहुधा सम्प्रार्थ्य तेषां योगशक्तिं साक्षादपश्यत् । तदेव चरमं दिनं जातं यद्दिने सोऽपश्यत् । ततः प्रभृति तैर्न तथा कृतम् । इत्याद्यनेके विषयास्तच्चरितसम्बन्धिनः गुर्वर्थदीधितिव्याख्यायाः प्रस्तावनायां विदुषा तिरुमलकुलकर्णिना सूपपादितम् ।

## मातृकाप्राप्तिप्रकारः

मातृकेयमिदम्प्रथमतया बेङ्गळूरुनगरस्थश्रीनगरप्रदेशवासिना ए. बि. जहागीर् इति सुगृहीतनामधेयेन गृहस्थेन मयाऽऽसादिता । अन्यन्मातृकाद्वयमपि तेन गौरवपूर्वकं मे प्रदत्तम् । तत्रैका वंशपल्ली-श्रीनिवासतीर्थैर्विरचिता ऋगर्थोद्धाराख्या, या च पूर्णप्रज्ञसंशोधन-मन्दिरेण मम सम्पादकत्व एव प्रकाशिता । अन्या श्रीवेङ्कट-पत्याचार्यैर्विरचिता तन्त्रसारव्याख्या गुर्वर्थदीधित्याख्या, या च विद्यावारिध्युपाध्यर्थं विदुषा तिरुमलकुलकर्णिमहोदयेनोपात्ता । अवशिष्टाऽन्या मातृकैव[1] विद्यावारिध्युपाध्यर्थं मया स्वीकृता सूत्रार्थसङ्ग्रहाख्याऽपूर्वा कृतिः ।

प्रथमं कुतूहलेन वीक्षितेयं मातृका । तत्त्वप्रकाशिकासंस्थं सूत्रार्थं सरलयाऽऽबालमनोहारिण्याऽनितरसाधारणया शैल्या प्रतिपाद-यन्त्याऽनयाऽऽकृष्टोऽहं झटिति निरधारयं विद्यावाध्युपाध्यै शोधप्रबन्धार्थम् उपादातव्येयं मातृकेति । परन्तु इयं न मूलमातृका किन्तु मूलमातृकां वीक्ष्य लिखिता मातृकेति ग्रन्थावलोकनेन मयाऽवगतम् । मूलमातृकां वीक्ष्य लिखितायामस्यां व्याकरणदोषाः

१. इयमेव मातृका 'क.' इति सङ्केतिता ।

लेखकप्रमादागताः बहवः तत्र तत्र समदृश्यन्त । तदाऽहं 'अस्याः मूलमातृका कुत्रास्ति ?' इति तानेवापृच्छं, ये ममैतन्मातृकाप्रदानेन उपाकुर्वन् । तदा ते प्रावोचन् 'अस्याः मूलमातृका प्रायः एतद्वंशीयानां श्रीवंशपल्लीकृष्णाचार्याणां सविधे स्यात्' इति । झटित्यहं होन्नाळि-वासिनस्तान् दूरवाण्यां विचारयितुमुद्यतः । परन्तु ते दूरवाण्यां न लब्धाः । पश्चादहं एतद्ग्रन्थमूलमातृका यत्र कुत्रापि लभ्येत इत्याशाया मैसूरुप्राच्यसंशोधनालये तथाऽन्यान्यसंशोधनालयेषु विचारितवान् । परन्तु न फलितं मन्मनोरथद्रुमेण ।

एतन्मध्ये कदाचिद् वंशपल्लिकृष्णाचार्या एव मम पुण्यवशात् पूर्णपज्ञसंशोधनमन्दिरं प्रत्यायाताः । एतद्ग्रन्थमूलमातृकाविषये पृष्टास्तेऽकथयन्– एतद्ग्रन्थमूलमातृकाऽस्माकं गृहेऽस्ति । अतिशीघ्रं प्रेषयिष्य इति । गतेषु कतिपयेषु दिनेषु तैः प्रेषिता मूलमातृका मम करकमलमुपगता । झटिति आमूलाग्रं वीक्षितेयं मातृका[1] । तदा मया व्यज्ञायीयं मातृकाऽपूर्णेति । अस्यां तृतीयाध्यायस्य तृतीयपादस्य कानिचन पत्राणि नाऽसन् । न केवलमेतावत् । किन्तु तृतीयाध्यायस्य चतुर्थपादः चतुर्थाध्यायश्च सम्पूर्णतया लुप्त आसीत् । पुनः वितथ-मनोरथेन मया बिदिरहळ्ळिकृष्णाचार्याः दूरवाण्यां विचारिताः । ते स्वगृहेऽन्विष्यापि एतन्मातृकासम्बन्धीनि लुप्तपत्राणि नाविन्दन् ।

एतस्मिन्नेव काले एतद्ग्रन्थकर्तॄणां श्रीवेङ्कटपत्याचार्याणा-माराधनदिनमागतम् । एतेषामाराधनं तद्वंशीयैः बाहुपल्लीग्रामे सभक्तिश्रद्धमाचर्यते । पुष्यमासीयकृष्णपक्षषष्ठ्यां प्रचलिष्यमाणे तस्मिन्नाराधनदिनेऽन्यान्यप्रदेशात बहवः विद्वांस आगत्य तत्र

१. इयमेव मातृकाऽस्मिन् ग्रन्थे 'ख.' इति सङ्केतिता ।

सर्वमूलग्रन्थपारायणादिकं कुर्वन्ति । विदुषां प्रवचनानि च तदा सम्पत्स्यन्ते । पश्चाद् भूरिभोजनादिना ब्राह्मणसुवासिनीसमाराधनं च भवति । विद्यापीठस्य युवविद्वान् तिरुमलकुलकर्णिमहोदयः प्रतिवर्षं प्रायस्तस्मिन् समारम्भे भागं स्वीकरोति । तद्वर्षे कारणान्तरतस्तत्र भागं वोढुमसमर्थः मम सपीपे आगत्यावोचत्– 'आचार्याः ! अस्मिन् वर्षे भवन्तः प्रवचनार्थं बाहुपल्लीग्रामं गच्छन्तु । तत्रत्याः तद्वंशीयाः श्रीराघवेन्द्राचार्या अतीवसरलाः विद्वत्सु साभिमाना इति । अपि च भवतामपेक्षिता सूत्रर्थसङ्ग्रहस्य मूलमातृका तेषां गृहे लभ्येतापीति । तन्त्रसारस्य व्याख्यायाः गुर्वर्थदीधितेः मातृका मया तत्रैवाऽसादितेति ।

तदनु, तद्वंशीया श्रीराघवेन्द्राचार्याः मम दूरवाणीं कृत्वाऽऽराधनामहोत्सवे भागं वोढुमाह्वयामासुः । सद्यस्तेषामाह्वानमङ्गीकृत्य बाहुपल्लीग्राममहमगच्छं या चापभ्रष्टभाषायां रट्टिहळ्ळीति व्यपदिश्यते । तदा तत्र तद्वंशीयाः श्रीवंशपल्लीकृष्णाचार्याश्चाऽगता आसन् । तैः सह श्रीराघवेन्द्राचार्याणां गृहे मया मूलमातृकान्वेषणमकारि । परन्तु मम दौर्भाग्येण तत्पुस्तकं नाऽलाभि । खिन्नोऽहं विना गत्यन्तरं एतद्ग्रन्थकर्तॄन् श्रीवेङ्कटपत्याचार्यानेव मार्गदर्शनाय शरणं गतः ।

तदनु तस्मिन्नाराधनदिनेऽहं यथाशक्ति प्रवचनसेवां विधाय गुरूणां दर्शनेन कृतार्थःसन् प्रसादं स्वीकृत्य बेङ्गळूरुनगरं प्रति परावृत्तः । गतेषु द्वित्रेषु दिनेषु एकदा श्रीकृष्णाचार्याः दूरवाणीं कृत्वाऽकथयन्– भवताऽपेक्षितः मातृकायाः लुप्तभागो लब्ध इति । एतत्सर्वं श्रीवेङ्कटपत्याचार्याणां दर्शनफलमिति । कतिपयदिनेष्वेव तैः

प्रेषिता मातृका मम हस्तमुप-गता । परन्तु सा पूर्णाऽपि जीर्णा क्वचिद् क्वचित् त्रुटिता क्वचिद् जलबिन्दुपातेन लुप्तवर्णा चाऽसीत् । तथाऽपि शुद्धपाठनिर्णये महत्साहाय्यमकारि तया मातृकयेत्यत्र नास्ति सन्देहगन्धोऽपि ।

**एतद्ग्रन्थस्थः कश्चन नूतनविषयः**

ग्रन्थोऽयं प्रायः तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्राहकोऽपि तत्र तत्र प्राचीनैरनुक्तानपूर्वान् नूतनविषयानप्याविष्करोति । स्थालीपुलाक-न्यायेन उदाहरणतया एकः विषयः निरूप्यते ।

अध्यायचतुष्टयात्मना विभक्तेषु ब्रह्मसूत्रेषु प्रथमाध्यायः समन्वया-ध्यायः । पादचतुष्टयविशिष्टेऽस्मिन् प्रथमः पादोऽन्यत्रप्रसिद्धानाम-पादः । तत्र नवमाधिकरणं प्राणाधिकरणम् । अधिकरणेऽस्मिन् 'तद्वै त्वं प्राणोऽभवः' (तै.आ.३.१४) इति तैत्तिरीयश्रुत्युक्तः प्राणः विष्णुरेव न वायुरिति प्रबलाल्लिङ्गात्समर्थितम् । तच्च प्रबलं लिङ्गं श्रीलक्ष्मीपतित्वाख्यम् । तत्प्रतिपादिका श्रुतिः **'श्रीश्च ते लक्ष्मीश्च पत्न्यौ'** इति तैत्तिरीयश्रुतिः । अत्र **'वक्षःस्थलाश्रिता श्रीरिति सम्प्रदायविदः'** इति तत्त्वप्रकाशिकायां श्रीमज्जयतीर्थाः कथयन्ति । अन्यथा रमायाः श्री-भू-दुर्गाख्यरूपत्रयसद्भावात् श्रीलक्ष्मीरिति रूपद्वयाभावात् पत्न्याविति द्विवचनानुपपत्तिरिति शङ्का स्यात् । तेषामभिप्रायस्तु वक्षःस्थलाश्रिता श्रीः, लक्ष्मीस्त्वङ्कगता इति । एवं च स्थानभेदेन तस्याः रूपद्वयसत्त्वात् न द्विवचनानुपपत्तिशङ्का । किञ्च श्रियः वक्षःस्थलस्थितत्वानङ्गीकारे भगवल्लिङ्गस्य 'श्रीवत्स' इत्येव नाम कथं वा स्यात् ? प्रत्युत 'लक्ष्मीवत्स' इत्येव नाम स्यात् ।

**'को नाम विष्णवनुपजीवक आस यस्य नित्याश्रया-दभिहिताऽपि सा सदा श्रीः ।'** (म.भा.ता.नि. १५.५) इति महाभारततात्पर्यनिर्णये रमाऽपि यस्य वक्षसि नित्याश्रयात् सदा श्रीरित्याभिहिता इति सम्प्रदायप्रवर्तकश्रीमदाचार्यैरेव कथितत्वात् 'सम्प्रदायः' इति टीकायामुक्तमिति **गुर्वर्थदीपिकायां श्रीवादिराज-गुरुसार्वभौमा अभिप्रयन्ति ।**

'वक्षःस्थलाश्रिता श्रीः' इत्यनेन 'श्रयते इति श्रीः' इति श्रीशब्दनिर्वचनपूर्वकं लक्ष्मीशब्देन पौनरुक्त्यं परिहृतं भवति । लक्ष्म्या अङ्गतत्वप्रसिद्धेरिति **भावबोधकृतः श्रीरघूत्तमतीर्थाः ।**

विष्णोरेकपत्नीकत्वप्रसिद्धेः पत्न्याविति कथं द्विचनमित्यत स्थान-भेदस्थरूपविशेषाभिप्रायेण तथोक्तिरित्यभ्युपगम्य 'वक्षःस्थला-श्रिता श्रीः, लक्ष्मीस्त्वङ्कगता' इत्युक्तम् । नन्वेवं तर्हि तत्वप्रदीपे त्रिविक्रमपण्डिताचार्यैः 'अङ्काश्रिता श्रीः वक्षसि लक्षणभूता लक्ष्मीः' इति कथमुक्तमित्यस्योत्तरत्वेन स्वोक्तार्थे सम्मतित्वेन श्रीजयतीर्थ-श्रीमच्चरणैः 'इति सम्प्रदायविदः' इत्युक्तम् । तथा चोदाहरन्ति–

**'तस्याः श्रियः स जगतो जनको जनन्या**<br>
**वक्षोऽधिवासमकरोत् परमं विभूतेः ।**<br>
**श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन**<br>
**यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥'** (भाग. ८.८.२४)

इत्याद्यष्टमस्कन्धादिस्थानि वाक्यानि । इति भावदीपकृतः **श्रीराघवेन्द्रगुरुसार्वभौमाः ।**

यद्यपि **'वक्षःस्थलाश्रिता श्रीः, लक्ष्मीस्त्वङ्कगता'** इत्यस्य **'अङ्काश्रिता श्रीः वक्षसि लक्षणभूता लक्ष्मीः'** इति तत्त्वप्रदीपोक्तं

विरुद्धम् । तथाऽप्ययं स्वोपदेशकाचार्यसम्प्रदाय इति श्रीमज्जय-तीर्थानामाशय इति **वाक्यार्थमुक्तावलीकाराः श्रीताम्रपर्णी-श्रीनिवासाचार्याः** मन्यन्ते ।

'लक्ष्म्या वक्षःस्थितायाः' इति विष्णुस्तुतौ त्रिविक्रमपण्डिताचार्यैः वक्षःस्थलाश्रितत्वं लक्ष्म्याः स्पष्टमुक्तमस्ति । अतः **'वक्षःस्थलाश्रिता श्रीः'** इति स्वसम्प्रदायः श्रीमज्जयतीर्थश्रीमच्चरणैरभिहितः । लक्ष्मीस्तु समीपे स्थित्वा सेवादिकारिणी' इति सूत्रार्थसङ्ग्रहकृतः, **श्रीवेङ्कट-पत्याचार्यस्य पितरः श्रीनिवासतीर्थाः ।**

रमायाः रूपविशेषयोः स्थानविशेषाकाङ्क्षायां **'वक्षःस्थलाश्रिता श्रीः'** इत्युक्तं श्रीमज्जयतीर्थश्रीमच्चरणैः । अङ्कगतत्वं तु लक्ष्म्याः प्रसिद्धमेव' इत्याशयः ।

ननु विषयोऽयं कथं निरणायि । **'तस्याः श्रियः...'** (भागवतम्-८.८.२४) इति भागवतवचनादिति चेत् । न । **'न केवलं मेऽङ्कगायाः श्रियोऽहम्'** (म.भा.ता.नि.२०.७२) इति भगवत्पादैः ।

श्रियोऽङ्कगतत्वस्याभिहितत्वात् । न च 'श्रयते वक्षःस्थलमिति श्रीः' इति निर्वचनेन निर्णयोऽस्तु इति वाच्यम् । श्रयतेऽङ्कमित्यपि निर्वचनसम्भवेन **'वक्षसि लक्षणभूता लक्ष्मीः'** इति तत्वप्रदीपोक्त-वचनानुसारेण वैपरीत्यस्यापि सम्भवात् । तस्मात् कथमयं श्रियो वक्षःस्थलाश्रितत्वनिर्णय इत्याशङ्कापरिहाराय श्रीमज्जयतीर्थ-श्रीमच्चरणैः **'इति सम्प्रदायविदः'** इत्युक्तम् । तथा च विषयेऽस्मिन् सम्प्रदाय एव निर्णायकप्रमाणमित्युक्तं भवति । अत एव भगवल्लिङ्गस्य श्रीवत्स इत्येव नाम न लक्ष्मीवत्स इति । व्यामिश्रोक्तिस्तु 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इति

पर्यायत्वाद् युक्ता । **'स्मरणीयमुरो विष्णोः इन्दिरावासमुत्तमम्'** (द्वा. स्तोत्रम्.१.९) इत्यादिवत् । इति **वाक्यार्थमञ्जरीकृतः श्रीशार्करा-श्रीनिवासाचार्याः** ।

नन्वथापि **'वक्षःस्थलाश्रिता श्रीः'** इति श्रीमज्जयतीर्थ-श्रीमच्चरणोक्तस्य **'न केवलं मेऽङ्कगायाः श्रियोऽहम्'** (म.भा.ता.नि. २०.७२) इति भगवत्पादकृतमहभारततात्पर्यनिर्णयेन विरोधः कथं परिहरणीय इति न ज्ञायते । प्राक्तनैः व्याख्यानकृद्भिरयं प्रश्नः नोद्धृत्य परिहृतः । तथाऽपि सूत्रार्थसङ्ग्रहाख्येऽस्मिन् ग्रन्थे प्रश्नोऽयं श्रीवेङ्कट-पत्याचार्यैः समुचितोत्तरदानेनाधोनिर्दिष्टरीत्या एवं परिहृतम् ।

'ननु तथाऽपि **'मेऽङ्कगायाः श्रियोऽहम्'** (म.भा.ता.नि.२०.७२) इति भारततात्पर्यनिर्णयविरोधः । तत्र श्रियोऽङ्कस्थित्वाभिधानाद् इति चेन्न । तत्र श्रीशब्दस्य यज्ञनामकलक्ष्मीरूपविशेषाभिधायकत्वेन श्रीनामकरूपानभिधायकत्वात् । तथा हि । 'न केवलं मेऽङ्कगायाः श्रियोऽहम्' (म.भा.तानि.२०.७२) इति श्लोकात्पूर्वश्लोके-

**'विष्णवाविष्टा यज्ञनाम्नी तदङ्कस्थिता सोचे केशवो ह्युत्तमोऽलम् ।'** (म.भा.ता.नि.२०.७१)

इति यज्ञनामकलक्ष्म्या एव प्रस्तुतत्वात् । व्याख्यातं च तथैव वरदराजीयादौ **'मेऽङ्कगायाः श्रियोऽहम्'** (म.भा.ता.नि.२०.७२) इति श्लोकव्याख्याने - 'मे ममाङ्कस्थितायाः यज्ञनाम्न्याः श्रिय उत्तमः' इत्यादि ।

**व्याकरणविचारः–**

ग्रन्थेऽस्मिन् तत्र तत्र व्याकरणविषया अपि चर्चिता दृश्यन्ते ।

प्रथमाध्यायस्य प्रथमपादे आनन्दमयाधिकरणे आनन्दमयो विष्णुरेवेति समर्थितम् । तत्र मयट्प्रत्ययविषये व्याकरण-विचारोऽधोनिर्दिष्टरीत्या वर्तते ।

ननु 'मयड् वैतयोर्विभाषायाम्'[१] इत्यादिना विकारावयवयोरर्थ-योर्भाषायां मयड्विधानाद् वेदे विकारार्थे कथं तेन मयट्प्राप्तिरिति चेन्न । 'द्व्यचश्छन्दसि' (पा.सू. ४.३.१५०) इति वेदेऽपि विकारार्थे मयटो विधानात् । न च विकारार्थकमयटः छन्दसि द्व्यचो विधानाद् विज्ञानानन्दयोश्च त्र्यच्कत्वेन विकारार्थकमयट्प्रत्ययायोग इति वाच्यम् । तयोरपि व्याङोः पार्थक्यविवक्षया द्व्यच्कत्वोपपत्तिरिति चेत् । न । **प्राचुर्यात्**- मयटः प्राचुर्यार्थकत्वादित्यर्थः । व्याङोः पार्थक्यविवक्षायाश्चागतिकागतित्वादिति हृदयम् ।' इत्युक्तम् ।

तथा **वैश्वानराधिकरणे** वैश्वानरशब्दस्य साधुत्वमधोनिर्दिष्टरीत्या सूपपादितम् ।

ननु विश्वनरशब्दात् 'तस्येदम्' (पा.सू. ४.३.१२०) इत्यण्प्रत्यये 'अचो ञ्णिति' (पा.सू. ७.१.११५) (इति) वृद्धौ वैश्वनर इत्येव स्याद् दीर्घः कथमिति चेत् । इत्थम् । 'विश्वस्य वसुराटोः' (पा.सू. ६.३.१२६) 'मित्रे चर्षौ' (पा.सू. ६.३.१२७) (इत्यत्र) विश्वशब्दस्य वसुराट्शब्दयोः परतः मित्रशब्दे च परे नरशब्दे च परे दीर्घः स्यात् । विश्वाराट् विश्वावसुः विश्वामित्रः इत्यादि यथा (तथा) प्रकृतेऽपि विश्वानरशब्दाद् अण्प्रत्यये वृद्धौ च वैश्वानर इति भवतीति बोध्यम् । अत्र विश्वशब्दात् परे नरशब्दस्य विद्यमानत्वाद् दीर्घः । इति ।

---

१. मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः (पा.सू.४.३.१४३)

एवं व्याकरणसम्बद्धाः अनेके विषया अत्र निरूपिताः ।

**पाठान्तराणामुल्लेखः**

ग्रन्थेऽस्मिन् तत्र तत्र पाठान्तराणामुल्लेखो दृश्यते । 'नरे सञ्ज्ञायां' (पा.सू.६.३.१२८) 'तदापीतेः संसारव्यपदेशात्' (ब्र.सू. ४.२.८) इत्यत्र 'तदपीतेः' 'तदापीतेः' इति पाठद्वयं दृश्यते । तत्राऽदिमः पाठः तत्त्वप्रकाशिकाकृद्भिः (श्रीमज्जयतीर्थयतिवरेण्यैः) भाष्यदीपिकाकृद्भिश्च (श्रीजगन्नाथयतिभिः) स्वीकृतः । द्वितीयः पाठः तत्त्वप्रदीपिकाकृद्भिः त्रिविक्रमपण्डिताचार्यैरादृतः । ग्रन्थेऽस्मिन् वेङ्कटपत्याचार्यास्तु 'तदापीतेः' इति पाठमेवाऽदृतवन्तः ।

तथा 'पुरुषाश्मवदिति चेत् तथाऽपि' (ब्र.सू. २.२.९) इत्यत्रापि 'तत्रापि' 'तथाऽपि' इति पाठद्वयं दृश्यते । अत्र वेङ्कटपत्याचार्याः यद्यपि 'तत्रापि' इति पाठमेव स्वीकृत्य व्याख्यातवन्तः । तथाऽपि 'तथाऽपि' इति पाठाभ्युपगमेऽपि न कश्चिद् विरोधः पाठद्वयस्य भाष्यानुव्याख्यानयोः सम्मतत्वादिति कथयन्ति । एवं ग्रन्थेऽस्मिन् तत्र तत्र बहवः पाठभेदाः दृश्यन्ते । केचनात्र निरूपिताः ।

**ग्रन्थान्तराणामुल्लेखः**

ग्रन्थेऽस्मिन् प्रासङ्गिकतयाऽन्यान्यग्रन्थानामुल्लेखः कृतः । न्यूनातिन्यूनं नवदशाधिकग्रन्थानामुल्लेखोऽत्र दृश्यते । विस्तृततत्सूची अन्ते परिशिष्टे दत्ता वर्तते ।

**अन्ते किञ्चिन्निवेदना**

अन्ते सविनयमिदं विवक्षुरस्मि यद् ब्रह्ममीमांसासम्बन्धिनः श्रीवेङ्कटपत्याचार्यविरचितस्य सूत्रार्थसङ्ग्रहाख्यस्यास्य ग्रन्थस्य

सम्पादनावकाशः हरिगुर्वोरनुग्रहेणास्मत्पूर्वजानां पुण्येन च मम सम्प्राप्त इति । ग्रन्थसम्पादनावसरे तत्र तत्रानवधानेन वाऽज्ञानेन वा दोषाः सन्दृश्येरन् तान् महान्तः सन्तः क्षाम्यन्तु इति सप्रश्रयं निवेद्यते । सदा प्रोत्साहनशीलाः करुणाशीलाश्च किल महान्तः । तच्चोक्तं-

'गच्छतः स्खलनं क्वापि भवेदेव स्वभावतः ।
हसन्ति दुर्जनास्तत्र तत्र शंसन्ति साधवः ॥' (सुभाषितम्)इति ।

एतद्ग्रन्थसम्पादनायापेक्षितं सर्वविधानुकूल्यं संशोधनमन्दिरे समुपकल्पितवतां मादृशानां परःशतविद्यार्थिनामन्नदानविद्या-दानादिकं कुर्वतां वदान्यमूर्धन्यानां विद्वन्मान्यानां मम गुरूणां श्रीश्रीविश्वेशतीर्थश्रीमच्चरणानां पादकमलयोः कृतिरियं सभक्तिश्रद्धं साष्टाङ्गप्रणामपुरस्सरं च समर्प्यते । यतीशानामेषामुपकारं कथं विस्मरामि ? अप्रतीकारोऽयमुपकारः । कृपालूनां तेषां कृपालवः मयि नित्यं भूयादित्यशास्यते मया ।

०-०-०

॥ श्रीगुरुभ्यो नमः हरिः ॐ ॥ श्रीवेदव्यासाय नमः ॥ हरिः ॐ ॥

# श्रीवंशपल्लीश्रीनिवासतीर्थतनूजेन *श्रीबाहुपल्लीवेङ्कटपत्याचार्येण विरचितः सूत्रार्थसङ्ग्रहः

(ग्रन्थकर्तुर्मङ्गलाचरणम्)

प्रणम्य व्यासदेवस्य चरणौ मद्गुरोरपि ।
तत्त्वप्रकाशिकासंस्थः सूत्रार्थस्तु निरूप्यते ॥

## ॥ जिज्ञासाधिकरणम् ॥ १ ॥

(पूर्वपक्षसिद्धान्तौ)

स्वप्रकाशजीवाभिन्नस्यासन्दिग्धत्वेन ब्रह्मणोऽविषयत्वात् तस्मिन्नहमिति ज्ञायमानेऽपि मोक्षानुपलम्भेन प्रयोजनाभावात् तत एवाधिकार्यादेरभावान्न ब्रह्मविचारः कर्तव्य इति नैतच्छास्त्रमारम्भणीयमिति पूर्वपक्षे, सिद्धान्तयति-

**[1] ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ (१-१-१) इति ।**

---

* यद्यपि श्रीवेङ्कटपत्याचार्यास्तेषां पितरश्च वंशपल्लीग्राम एव बहुवर्षं यावन्न्यवसन् यश्च कर्नाटकभाषायां बिदिरहळ्ळीति प्रथितः। अत एव तेषां वंशपल्लीवेङ्कटपत्याचार्या इति नाम्ना प्रसिद्धिः। तथाऽपि ते स्वीयचरमवयसि रट्टीहळ्ळीति प्रथिते बाहुपल्लीग्रामे न्यवसन्। अतस्तेषां बाहुपल्लीवेङ्कटपत्याचार्या इत्यपि प्रसिद्धिः ।

१. अत्र यद्यपि क. मातृकायां प्रथमसूत्रगतमादिममोङ्कारं विहाय प्रतिसूत्रमाद्यन्तयोरोङ्कारो न दृश्यते। परन्तु ख.मातृकायां दृश्यते। क.मातृकायामपि कुत्रचिद् दृश्यते कुत्रचिन्न । तथाऽपि 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते' इति प्रमाणं मनसि निधाय प्रतिसूत्रमाद्यन्तयोरोङ्कारः प्रयुक्त इत्यवधेयम् ।

**(ओङ्काराथशब्दयोः फलकथनम्)**

स्रवणाभावरूपफलायोङ्कारः प्रतिसूत्रमादावनुषङ्गायासंहित-तयोच्चारितः । यथोक्तं सप्तदशाध्यायगीतातात्पर्ये- "स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते"[१] इति । अथशब्दो मङ्गलप्रयोजनक अधिकारानन्तर्याभिधायकः ।

यद्यपि मङ्गलस्य वाक्यार्थे ब्रह्मजिज्ञासायाः कर्तृकरणभावेना-न्वयस्तावन्नास्ति । [२]कारकान्तराणां विद्यमानत्वात् । नापि जिज्ञासा मङ्गलमिति सामानाधिकरण्यम् । प्रशंसापरतयाऽर्थवादत्वप्रसङ्गात् । तथाऽपि प्रथमसूत्रावयवतयोपात्तौ ओङ्काराथशब्दौ श्रुतितो माङ्गलिक-त्वात् सकलशास्त्रस्यानन्तरायपरिसमाप्त्यादिकं कुर्वात इत्यभ्युप-गमात् ।

**(सूत्रार्थः) अथ** अधिकारसम्पत्त्यनन्तरम् **अतः** मोक्षाख्यप्रयोजनस्य विद्यमानत्वाद् अकारवाच्यविष्णोः प्रसादाद् **ब्रह्म**विषयिणी **जिज्ञासा** कर्तव्या श्रवणादिरूपो विचारः कर्तव्य इत्यर्थः । भवतीत्यध्याहारस्य 'तद्विजिज्ञासस्व' (तै.उ.३-१) इति श्रुत्यनानुगुण्यात् सूत्रस्य श्रुत्यनु-सारित्वादयोगो मन्तव्यः । 'न कर्तव्या' इति पदाध्याहारस्याधिकार-कथनादिनाऽत्रायोगश्च ।

**(ओङ्कारस्य प्रथमसूत्रे दृष्टादृष्टफलकत्वमुत्तरसूत्रेष्वदृष्टमात्रफलकत्वम्)**

ॐकारस्तु प्रथमसूत्रे ब्रह्मपदोक्तस्य विष्णोर्विषयत्वसमर्थनार्थतया

---

१. (न्या.सु.उ.व.),पृ.सं.१३४, (गी.ता. अ.१७) पृ.सं. ३७३

२. मुमुक्षुरूपकर्तृकारकस्य ब्रह्मरूपकर्मकारकस्य वेदरूपस्य युक्तिरूपस्य वा करणकारकस्य सत्वाद् ब्रह्मजिज्ञासायाः कर्तृकरणभावेनान्वयस्तावन्न सम्भवतीत्याशयः ।

स्रवणद्यभावसम्पादकतया च दृष्टादृष्टोभयफलकः। स्विष्टकृदाख्यहोमस्य प्रतिपत्त्यर्थत्वं[१] पुण्यार्थता च यथा। द्वितीयादिसूत्रेषु स्रवणाद्यभाव-फलकत्वेनादृष्टार्थ एव।

यद्वा, ॐकारब्रह्मपदयोः पूर्णार्थत्वेऽपि

"परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम्।
अमन्यमाना अभिमन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र॥"[२]

इत्यत्रेन्द्रपदद्वयवदत्राप्योङ्कारब्रह्मपदयोरेकस्य रूढि(ढ)त्वमपरस्य यौगिकत्वमिति ज्ञेयम्। जिज्ञासाशब्दस्तु "जिज्ञासितं सुसम्पन्नम्"[३] इत्यादिप्रयोगदर्शनाद् विचारे रूढ इति लाक्षणिकपदप्रयोगे किंनिमित्त-मिति चोद्यानवकाशः। लाक्षणिकत्वे वा श्रुत्यानुगुण्यायेति समाधेयम्

**(भाष्यन्यायविवरणयोः अनुव्याख्यानसुधाभ्यां विरोधशङ्का तत्परिहारश्च)**

ननु 'अथातः शब्दपूर्वाणि'[४] इति भाष्यस्य 'अथातो ब्रह्म-

---

१. स्थलनिर्वृत्यर्थं इति क. मातृकागतः पाठः 'छलनिर्वृत्यर्थम्' इति, ख.मातृकागतश्च पाठः प्रामादिक इति भाति।

२. (ऋ.सं.१-३-२)

३. 'जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम्। कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम्॥' (भागवतम् १.५.३) इति।

४. 'अथातः शब्दपूर्वाणि सूत्राणि निखिलान्यपि। प्रारभन्ते नियत्यैव तत्किमत्र नियामकम्॥ कश्चार्थश्च तयोर्विद्वन् कथमुत्तमता तयोः। एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्त्वतः॥ एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः। आनन्तर्येऽ-धिकारस्य मङ्गलार्थे तथैव च॥ अथशब्दस्त्वतः शब्दो हेत्वर्थे समुदीरितः। परस्य ब्रह्मणो विष्णोः प्रसादाद् इति वा भवेत्॥ स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः। सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिसृतौ॥ ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात्। तद्धेतुत्वं त्वदंश्चापि तृतीयोऽत उदाहृतः॥ अकारः सर्वत्रागात्मा

जिज्ञासेत्याह' (न्यायविवरणम् पृ. ४) इत्योङ्काररहितन्यायविवरणस्य च 'तत्र ताराथमूलत्वं ' (अनुव्या. अ.१,श्लो.८) इत्यनुव्याख्यानेन 'तारश्चाथश्च तयोर्मूलत्वं क्रमेणाऽदित्वं' (न्या.सु. पृ.१२५) इति सुधया च विरोध इति चेत्, सत्यम् । 'अथातो ब्रह्मजिज्ञासा' इत्येकः पाठः 'ॐ अथातो ब्रह्मजिज्ञासा' इत्यन्य इति पाठद्वयाङ्गीकारात् । क्रमेणेत्यस्य पर्यायेणेत्यर्थः । तथा च पूर्वपाठेऽथशब्दस्याऽदित्वं द्वितीयपाठे ॐकारस्याऽदित्वमित्यनुव्याख्यानाभिप्रायान्न विरोधः । अत एव न 'ॐकारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमाात्' (ब्र.सू. भा.उ.गा.वचनम्) इति भाष्योदाहृतप्रमाणविरोधोऽपि । तथा च जिज्ञास्ये श्रुतब्रह्मपदेन पूर्णगुणत्वोक्तेर्न जीवाभेद इति विषयादिसद्भावात् कर्तव्या जिज्ञासेत्यारम्भणीयमेवेदं शास्त्रमिति सिद्धम् ॥ १ ॥

**॥ इति जिज्ञासाधिकरणम् ॥ १ ॥**

*(त.दी.- ब्रह्मशब्दाद् विषयसिद्धावपि ओमित्युक्तिः न केवलं ब्रह्मशब्दाद् विषयसिद्धिः 'ओम् इत्येतदक्षरमुद्गीथमुपासीत' (छा.उ.१.१.)इत्यादौ गुण-पूर्णार्थोङ्कारादपीति युक्त्यन्तरसूचनाय । ब्रह्मणि किं मानमित्यततः वेदरूप-प्रमाणसूचनाय च । ओङ्कारवाच्यस्य ब्रह्मणः इत्युक्त्या व्याहृतिगायत्रि-पुरुषसूक्तद्वारा सर्ववेदानां तद्व्याख्यानत्वाद् वेदा एव तत्र मानमिति सिद्धेरिति भावः । पृ.सं.- ५,६ )

---

परब्रह्माभिधायकः । तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ ॥ अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः । अथातःशब्दयोरेवं वीर्यमाज्ञाय तत्त्वतः । सूत्रेषु तु महाप्राज्ञास्तावेवाऽदौ प्रयुञ्जते ॥' इति (ब्र.सू.भा.उ.गारुडवचनम्), पृ.१८.२४

* श्रीराघवेन्द्रगुरुसार्वभौमप्रणीता, विद्वन्मणिगणविनुता, सरलया शैल्या सूत्रार्थवर्णनपरा तन्त्रदीपिकाख्या व्याख्या सूत्रपदस्वारस्यमधिकरणप्रमेयजातं चाऽविष्कुर्वाणाऽध्येतॄणां सूपकरोतीति तद्ग्रन्थस्य कतिपयांशाः सूत्रार्थाधि-गमोपयुक्ता अत्र मया दत्ताः ।

(त.दी.- ॐब्रह्मशब्दयोः यौगिकत्वेऽपि एकस्य रूढत्वमाश्रित्य विशेष-वाचित्वेन 'आत्मेति तूपगच्छन्ति' (ब्र.सू. ४.१.३) इत्यत्रैवान्वयो बोध्यः। (पृ. ४-५)

ब्रह्म किमित्यत ओमित्युक्तम्। रक्षकस्येत्यर्थः। अवतिरूपत्वात्। रक्षकश्च विष्णुः प्रसिद्ध इत्याहुः। पृ.सं.६)

## ॥ अथ जन्माधिकरणम् ॥ २ ॥

### (पूर्वपक्षसिद्धान्तौ)

श्रुत्युक्तं ब्रह्म, निर्बाधरूढिबलाज्जीव एवेति पूर्वपक्षे, बाधकं ब्रह्मणो लक्षणमाह -

**ॐ जन्माद्यस्य यतःॐ** (१ - १ - २) (इति)

**(सू.) अस्य** प्रमितस्य जगतो, [१]**जन्म** [२]**आदि** यस्मिन् स्थित्यादि-जाते तज्**जन्मादि** सृष्ट्याद्यष्टकं **यतः**, तद्ब्रह्मेत्यर्थः।

### (जन्मनः प्रथमग्रहणे कारणवर्णनम्)

ननु 'न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद्भ्रमेरिव' (भाग. ३.११.३०) इति तृतीयस्कन्धोक्त्या दर्शपूर्णमासीतिथ्योरिव जन्मसंहारयोरनादि-त्वात् कथं जन्मनः स्थित्यादिषु प्राथम्यमिति चेन्न। सत्यमेवं तथाऽपि लब्धजन्मनः स्थित्यादिरितिवत् स्थितस्य नष्टस्य वा जन्म नेत्येक-व्यक्त्यपेक्षया जन्मनः प्राथम्यम्।

---

१. 'जन्म आदिः यस्य स्थित्यादिजातस्य तज्जन्मादिः' इत्युक्ते समीचीनं स्याद् इति भाति।

२. 'आदिः' इति 'क' पाठः।

(जिज्ञास्ये ब्रह्मण्यष्टकर्तृत्वं न श्रूयते इत्याक्षेपस्तत्परिहारश्च)

ननु 'यतो वा इमानि'[१] इति वाक्ये जन्मस्थितिलयमुक्तिरूप-व्यापारचतुष्टयकर्तृत्वमेवोक्तमिति जिज्ञास्ये जन्माद्यष्टककर्तृत्वं न श्रूयत इति चेत्। न। जिज्ञासाविधात्रीष्वनेकासु श्रुतिषु बन्धादिकर्तृत्वादेरपि श्रुतत्वादनेकलक्षणोक्तिः, अत्र जन्मकर्तृत्वादेरेकैकस्यैव लक्षणत्वाङ्गी-कारेण। यद्वा, एतद्वाक्योपलक्षितेषु 'य आत्मानमन्तरो यमयति'[२] इत्यादिवाक्यान्तरेषु नियमनादीनामपि श्रवणादत्राप्युपलक्षणया सृष्ट्याद्यष्टकमपि सङ्गृह्यते। यथोक्तं चन्द्रिकायम्- 'यतो वा' (तै.उ. ३-१) इत्यत्र जन्मस्थितिप्रलयमोक्षाणां, 'य आत्मानमन्तरो यमयति' (बृ.माध्यन्दिनपाठः) 'त्वं मुक्तिदो बन्धदो मतस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो'[३] इत्यादौ नियमनादीनामप्युक्तेः। सूत्रकृतैव स्कान्देऽष्टकर्तृत्वस्य लक्षणत्वेनोक्तेश्चेति। तत्वप्रदीपे तु तैत्तिरीयशाखागतश्रुतीः[४] उदाहृत्य जन्माद्यष्टकर्तृत्वमेव जिज्ञास्ये उक्तमिति समाहितम्।

---

१. 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभि संविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति।' इति- (तै.उ.३-१)

२. 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः' इति (ब्र.सू.भा. उ. बृ. माध्यन्दिनपाठः) पृ.सं.२१०

३. 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इति (न्या.सु. परि.उ.वचनम् पृ.१०४७) इति पाठेन भाव्यमिति भाति।

४. 'यतः प्रसूता जगतः प्रसूती' 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' (सृष्टिः), 'यस्मिन्निदं सं च विचैति सर्वं यस्मिन् देवा अधि विश्वे निषेधुः' (स्थितिः), 'वेनस्तत्पश्यन् विश्वा भुवनानि विद्वान्यत्र विश्वं भवत्येकनीळं' (ज्ञानसंहारौ), 'विवेश भूतानि चराचराणि' 'येनाऽदित्यस्तपति तेजसा भ्राजसा च' (नियमनम्), 'ऋतस्य तन्तुं विततं विवृत्या तदपश्यत् तदभवत् प्रजास्विव' (अज्ञानबन्धौ) 'य एनं विदुरमृतास्ते भवन्ति' (मोक्षः) - इत्याद्यास्तत्त्वप्रदीपोदाहृताः श्रुतयो ज्ञेयाः - पृ.सं.१७४-१७५

(तत्त्वसङ्ख्यानोक्तसुखादीनामग्रहणे सृष्ट्याद्यष्टकस्यैव ग्रहणे कारणवर्णनम्)

नन्वथापि

'सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ।
बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ॥' (त.सं श्लो. १०)

इति तत्त्वसङ्ख्यानोक्त्या सुखादीन्यपि कुतो न गृहीतानीति चेत् । न । स्कान्दे सूत्रकृतैवाष्टककर्तृत्वस्यैव लक्षणत्वेनोक्तत्वात् सूत्रे तावत एव विवक्षेति राघवेन्द्रीये । नच सूत्रे ब्रह्मपदेन गुणपूर्णत्वस्य लक्ष्यत्वात् किमनेन लक्षणान्तरेणेति वाच्यम् । तस्य लक्ष्यैकनिष्ठत्वोपपादनेनाति-व्याप्त्यसम्भवपरिहारद्वारोपपादनार्थमिदमित्यदोषः ।

(सूत्रे जन्मग्रहणस्य सार्थक्यकथनम्)

ननु बद्धस्य जन्मादीति बन्धस्य प्राधान्यात् 'बन्धाद्यस्य यतः' इति वाच्यमिति चेत् । न । बन्धस्यासार्वत्रिकत्वाज्जन्मनः सार्वत्रिकत्वा-ज्जन्मादीत्युक्तमित्याहुः ॥ २ ॥

**॥ इति जन्माधिकरणम् ॥ २ ॥**

## ॥ ३ ॥ अथ शास्त्रयोनित्वाधिकरणम् ॥

### (पूर्वपक्षसिद्धान्तौ)

जगत्कारणत्वस्य रुद्रादेरप्यनुमानेन साधनसम्भवेन भगवदेकनिष्ठता-भावान्नास्य तेन जिज्ञास्यब्रह्मतानिश्चय इति पूर्वपक्षे, सिद्धान्तयति-

**ॐ शास्त्रयोनित्वात् ॐ** ( १-१-३ ) इति ।

(सू.) **शास्त्रं योनि**र्ज्ञप्तिकारणमस्येति **शास्त्रयोनि**, तस्य भावः **शास्त्रयोनित्वं तस्मात्** कारणत्वस्य शास्त्रैकगम्यत्वात् नानुमानेनान्येषां कारणत्वकल्पनेत्यर्थः ।

('शास्त्रयोनित्वात्' इति योनिशब्दप्रयोगे कारणकथनम्)

अत्र **'शास्त्रगम्यत्वात्'**[१] इत्यनुक्त्वा 'शास्त्रयोनित्वात्' इत्युक्तः। कुतः (एवं) प्रयोग इति चेत्। न । योनीत्युक्त्या शास्त्राप्रामाण्यनिरासात्। अप्रामाण्यं हि सर्वथा ज्ञप्त्यजनकत्वेन, संशयविपर्ययजनकत्वेन वा भवति। तदत्र योनीति ज्ञप्तिरूपप्रमाजनकत्वोक्त्या निरस्तम्। अत एव तत्त्वप्रकाशिकायां 'समधिगम्यत्वात्' इति संशब्दप्रयोगः। नचान्येषां न जगत्कारणत्वमिति प्रतिज्ञाध्याहारो दोषः। **'यत्रानवसरः'**[२] (ब्र.सू.भा.उ.बृहत्संहितावचनम्) इति स्मृत्या साकाङ्क्षा(ङ्क्ष)सूत्रे योग्याध्याहारस्य सर्वसिद्धत्वात्॥ ३ ॥

**॥ इति शास्त्रयोनित्वाधिकरणम्॥ ३ ॥**

**(त.दी.)** 'वेदयोनित्वात्' इति वाच्ये शास्त्र इत्युक्तिः 'ऋग्यजुःसामाथर्वाश्च' (ब्र.सू.भा.उ. स्कान्द वचनम्) इति स्मृत्युक्तशास्त्रग्रहणाय। तेन अनुमानम् 'नैव शास्त्रं कुवर्त्म तत्' (ब्र.सू.भा.उ.स्कान्द वचनम्) इत्युक्तपाशुपताद्यशास्त्रं व्यावर्तितम्। -पृ.सं.१०

## ॥ ४ ॥ अथ समन्वयाधिकरणम्॥

### (पूर्वपक्षसिद्धान्तौ)

वैदिकप्रतीतिसध्रीचीनपाशुपताद्युक्तिबलेन रुद्रादीनामपि कारणत्वेन शास्त्रयोनित्वे प्राप्ते सिद्धान्तयति-

**ॐ तत्तु समन्वयात् ॐ ( १-१- ४ ) इति ॥**

---

१. अत्र 'शास्त्रगम्यत्वात्' इत्यनुक्त्वा 'शास्त्रायोनित्वात्' इत्युक्तं कुत एवं प्रयोग इति चेत्, 'इत्थम्' इति पाठेन भाव्यमिति भाति।

२. 'यत्रावसरोऽन्यत्र पदं तत्र प्रतिष्ठितम्। वाक्यं वेति सतां नीतिः सावकाशे न तद् भवेत्॥' इति (ब्र.सू.भा.उ.बृहत्संहितावचनम् पृ.३४)

(सू.) अन्वीयन्ते शक्तितात्पर्यगोचरेण सम्बद्ध्यन्ते, तथा ज्ञायन्त इति यावत् । वाक्यान्येतैनेति **अन्वयः** उपपत्त्यादिलिङ्गसमुदायः, **तस्मात्** निरवकाशत्वसावकाशत्वादिना विचारितत्वरूपसम्यक्त्व-युक्तादन्वयशब्दवाच्यादुपपत्त्यादिलिङ्गात् सर्वशास्त्रस्य भगवत्येव **सम्** सम्यग्वचनवृत्त्या **अन्वयात्** शक्तितात्पर्यलक्षणसम्बन्धावगमात् **तत्तु** तदेव ब्रह्मैव शास्त्रयोनि, नेतरेषां शास्त्रयोनित्वमित्यर्थः । वैदिक-प्रतीतेस्तात्पर्याज्ञानमूलकत्वासम्भवात् । पाशुपताद्युक्तेस्तु 'एष मोहं सृजामि'[१] इत्युक्तत्वेनायथार्थत्वसम्भवान्न रुद्रादीनां कारणत्वेन शास्त्रयोनित्वमिति हृदयम् ।

**(सूत्रे तच्छब्दग्रहणस्य वैयर्थ्यशङ्का तत्परिहारश्च)**

ननु प्राचीनसूत्रे यतःशब्दात् तदिति प्रकृतं तदेवेह मण्डूक-प्लुत्याऽनुवर्तिष्यते व्यर्थमत्र पुनस्तद्ग्रहणमिति चेत्, तर्ह्यवधारणार्थकस्य तुशब्दस्य 'अन्वयात्' इत्यनेनैव सम्बन्धप्रतीतिप्रसङ्गात् ॥ ४ ॥

**॥ इति समन्वयाधिकरणम् ॥ ४ ॥**

(त.दी.) उपक्रमादेरिति वाच्येऽन्वयादिति यौगिकोक्त्या न शास्त्रतात्पर्यज्ञप्तौ आपात-प्रतीतिरुपक्रमाद्यनपेक्षव्याख्यातृवचनं वा लिङ्गमिति सूचितम् । समन्वयैरिति वाच्ये समुदायबुद्ध्याऽन्वयादित्युक्तिस्तु उपक्रमादीनामवि-रोधसूचनार्था । उपक्रमादेस्तात्पर्याव्यभिचारनिरासाय समित्युक्तिः । -पृ.सं.१२

---

१. 'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चाऽत्मानमप्रकाशं च मां कुरु ॥' इति- (ब्र.सू.भा.उ.वाराहवचनम्) - पृ.सं. ४८

## ॥ ५ ॥ अथ ईक्षत्यधिकरणम् ॥

### (पूर्वपक्षसिद्धान्तौ)

'यतो वाचो निवर्तन्ते'[१] इत्यादिश्रुत्या ब्रह्मणः सर्वशब्दावाच्यत्वावगमान्न वचनवृत्त्या शास्त्रगम्यत्वमिति पूर्वपक्षे, सिद्धान्तयति -

**ॐ ईक्षतेर्नाशब्दम् ॐ (१-१-५) इति ॥**

(सू.) ईक्षतेरिति धातुनिर्देशेऽपि योग्यतया 'पुरुषमीक्षते'[२] इति श्रुत्यानुगुण्याच्च[३] क्रियाकर्मभावेनात्र तदर्थलक्षणया ईक्षणीयत्वादिति व्याख्येयम् । प्रत्यक्षाद्यवेद्यत्वे सति ईक्षणीयत्वान्यथानुपपत्त्या **अशब्दं** शब्दावाच्यं **न** । अवाच्यत्वश्रुतिस्तु साकल्येनागोचरत्वपरेति भावः ।

### ('ईक्षतेर्वाच्यं' इत्यनुक्त्वा 'ईक्षतेर्नाशब्दं' इति कथने कारणोक्तिः)

'ईक्षतेर्वाच्यम्' इत्येवोपपत्तावपि 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' (गी.भा. प्र.दी.उ.न्यायः) इति न्यायेन वाच्यत्वविधिरवाच्यत्वनिषेधश्चेत्युभयार्थं 'नाशब्दम्' इति वचनम् । निर्णयार्थत्वात् सूत्राणां, निर्णयश्च स्वपरपक्षस्थापनोपालम्भाभ्यां भवतीति ।

### (एतदुपरि शङ्का तत्परिहारश्च)

ननु पूर्वसूत्रात् 'तत्तु' इत्यनुवृत्त्या तद् ब्रह्म वाच्यं तु वाच्यमेवेत्यवधारणेनोभयसिद्धिर्भविष्यतीति चेत् । सत्यम् । तत्पदान्विततुशब्दस्यात्र वाच्यमेवेत्यन्यान्वये सति तत्त्वित्यध्यायसमाप्त्यनुवृत्तिर्न स्यात् ।

---

१. 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति (तै.उ.२-४-१, पृ.६९)

२. 'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरषमीक्षते' इति (प्र. ५.५, पृ.७१)

३. 'श्रुत्यानुगण्याय' इति ख. पाठः ।

**(त.दी.)** 'नाशब्दमीक्षतेः' इति वाच्ये ईक्षतेरित्याद्युक्तिरनियमसूचनार्था। अवाच्यमिति वाच्येऽशब्दमित्युक्तिः 'अशब्दमस्पर्शं' इति श्रुत्यनुगमाय।-पृ.सं.१६,१७

**(श्रौत ईक्षणीयः जीवो भवतु इत्याक्षेपः तत्परिहारश्च)**

श्रुत्युक्त ईक्षणीयः जीवः किं न स्यादित्याक्षिप्य समादधति -

**ॐ गौणश्चेन्नाऽत्मशब्दात् ॐ** ( १-१-६ ) (इति।)

**(सू.)** ईक्षतिश्रुतौ **गौणः** सत्त्वादिगुणबद्धो[1] जीवाख्य उच्यत इति नेक्षणीयत्वबलाद् गुणातीतं ब्रह्म वाच्यमिति **चेत्**। **न**। ईक्षणीये तस्मिन् 'आत्मन्येवाऽत्मानं पश्येत्' (बृ.उ.६-४-२३) इति **आत्मशब्द**-श्रवणात् तेन च तस्य निर्गुणत्वसिद्धेःस एव ईक्षणीय इत्यर्थः।

**(त.दी.)** प्राक् तदित्यन्वयाय अशब्दमित्युक्तावपीहाऽत्मपदान्वयाय गौण इति पुंनिर्देशः।-त.दी.पु.स.१८.

**(आत्मनिष्ठस्य मोक्षकथनान्नाऽत्मशब्द गौणात्मपरः)**

आत्मशब्दोऽपि गौणे मुख्यः किं न स्यादित्यत आह-

**ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ** (१ -१- ७ ) (इति।)

**(सू.)** 'यस्यानुवित्तः प्रतिबुद्ध आत्मा'[2] इति श्रुतौ **आत्मनिष्ठस्य**

---

१. यद्यपि सूत्रस्यथगौणपदं श्रीमन्न्यायसुधायां सगुणब्रह्मपरतया व्याख्यातम्। अत्र तु सत्त्वादिगुणबद्धपरजीवतया। तथाऽपि सगुणं ब्रह्म, सत्त्वादिगुणबद्धा जीवा वा दृश्या वाच्याश्च, न सर्वथा निर्गुणं ब्रह्म, इति पूर्वपक्षिणामाशयसद्भावान्न विरोध इति भाष्यदीपीकायामुक्तमत्रानुसन्धेयम्।

२.'यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् सन्दोहे गहने प्रविष्टः। स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ एव ॥' इति (बृ.उ. ६-४-१३, पृ.७८)

**मोक्षाभिधानादित्यर्थः** । आत्मशब्दस्य जीवे मुख्यत्वे गुणबद्धात्म-विज्ञानाद् गुणनिवृत्तिरूपो मोक्षो न युक्त इति भावः ।

**(आत्मशब्दस्य गौणपरत्वाभावे युक्त्यन्तरकथनम् )**

आत्मशब्दस्य गौणपरत्वं युक्त्यन्तरेणापाकरोति -

**ॐ हेयत्वावचनाच्च ॐ** (१-१-८) इति ।

**(सू.)** गौण एव दृश्य आत्मेति नियममभ्युपगच्छता 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' (मु.उ.२-२-५) इत्यत्रापि गौणोऽङ्गीकरणीयः । 'तं जानथ' (मु.उ.२-२-५) इति दृश्यत्वश्रवणात् । न चास्त्विति वाच्यम् । यतो गौणो मुमुक्षुणा हेयेषु ''अन्या वाचो विमुञ्चथ' (मु.उ.२-२-५) इति श्रुतः । अस्य चाऽत्मनः **हेयत्वावचनात्** । प्रत्युत 'तमैवैकं' (मु.उ.२-२-५) इत्युपादेयत्व-वचनाच्चेत्यर्थः ।

**(ब्रह्मादीनां क्वचिदुपादेयत्वस्य कथितत्वात् कथं हेयत्वम् ? इत्याशङ्का तत्परिहारश्च)**

ननु 'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदं' (ब्र.सू.३-३-५७) इत्यादौ गौणानां ब्रह्मादीनामुपादेयत्वं वक्ष्यत इति कथं हेयत्वमिति चेत् । न । विष्णुपरिवारत्वेन ग्राह्यत्वेऽपि प्रधानत्वेन हेयत्वमित्या-कूतात् । हेत्वन्तरेण निर्गुणस्य ब्रह्मणः वाच्यत्वं समर्थयितुं श्रुत्युक्त-त्वाच्चेति हेतुवाक्यं बहिरेव द्रष्टव्यम् । 'पूर्णमदः पूर्णमिदं'[१] (इति) श्रुत्युक्तत्वाच्च निर्गुण एव वाच्य इति तदर्थो बोद्धव्यः ।

---

१. 'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमदुच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवाव-शिष्यते ।।' इति (बृ.उ.७-१-१, पृ.८१)

(त.दी.) 'सुधायां तु गौणशब्दस्य मायाशबलब्रह्मपरत्वमभ्युपेत्य सूत्रत्रयं व्याख्यातम्। तत्त्वप्रदीपसन्न्यायरत्नावल्योस्तु न केवलमात्मशब्दबलादीक्षणीयो न गौणः। किन्तु तन्निष्ठस्येत्यादिसूत्रद्वयोक्तहेतुभ्यामपीति तन्निष्ठस्येत्यादि-सूत्रद्वयमन्यथा व्याख्यातम्।' इति पृ.सं. १९,२०।

**('पूर्णमदः' इति श्रुत्युक्तस्य निर्गुणत्वे स्वस्मिन् अप्ययरूपयुक्तिकथनम्)**

'पूर्णमदः' (बृ.उ. ७-१-१) इति श्रुत्युक्तोऽपि कुतो निर्गुण इत्याशङ्कां परिहरति-

**ॐ स्वाप्ययात् ॐ** ( १-१-९ ) इति।

(सू.) 'पूर्णमदः पूर्णमिदं' (बृ.उ. ७-१-१) इत्यत्र **स्वस्य स्वस्मिन् अप्ययवचनात्**। उपलक्षणमेतत्। पूर्णत्ववचनाच्च निर्गुण एव श्रुत्युक्त इत्यर्थः। गौणस्यापूर्णत्वाद् अन्यस्मिन्नप्ययावचनाच्चेति भावः।

**(श्रुतिजन्यज्ञाविषयत्वं न लक्षणादिना)**

ननु श्रुत्युक्तत्वं नाम श्रुतिजन्यज्ञानकर्मत्वम्। इदमेवेक्षणकर्मत्वमिति चेत्। मैवम्। आद्यसूत्रे प्रत्यक्षाद्यवेद्यत्वे सति ईक्षणीयत्वादि-त्यन्यथानुपपत्तिरूपहेतुना नावाच्यं ब्रह्मेत्युक्तम्। इह तु श्रुत्युक्तत्वाच्छ्रुति-जन्यज्ञानविषयत्वात् तस्य च लक्षणादिनाऽनुपपत्तेरशब्दं न। किन्तु वाच्यमेवेत्यभिधीयत इत्युपपादनभेदाद् भेदः।

**(शाखान्तरास्वन्योऽपि कारणत्वेन प्रतिपाद्यो भवतु इत्याशङ्का तत्परिहारश्च)**

यद्यपि प्रसिद्धशाखासु उपक्रमादिविचारैरस्तु कारणत्वेन प्रतिपाद्य-त्वम्। अप्रसिद्धासु त्वन्योऽपि तथोच्यतामिति न सकलशास्त्र-योनित्वमित्याशङ्कां परिहरति-

ॐ गतिसामन्यात् ॐ ( १-१-१० ) इति ।

(सू.) 'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव'[१] इति श्रुत्या **गतेः** सकलवेदोत्पाद्याया अवगतेः **सामान्यात्** समत्वाद् एकविधत्वकथनान्न कासुचिच्छाखास्वन्यथोच्यत इत्यर्थः ।

(त.दी.) वृत्त्यन्तरं तु गतिसामान्यात् गतिसामान्यानुमानादिति । सूत्रकृन्निर्णीतशाखादृष्टान्तेन शाखात्वेन हेतुना शाखान्तरेऽप्येतदनुमानादित्यर्थः। चन्द्रिकायां तु आत्मशब्दमोक्षोपदेशहेयत्वानुक्तिस्वाप्ययाः शाखान्तरे गौणात्मन्यपि स्युरित्यवतार्य गतेः सर्वत्रैकरूप्यमेवेत्यप्यर्थ उक्तः। इति (पृ.२२)

**( वाच्यत्वे युक्त्यन्तरकथनम्)**

उपपत्त्यन्तरेण वाच्यत्वं प्रतिपादयति -

ॐ श्रुतत्वाच्च ॐ (१-१-११ ) इति ।

(सू.) 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' (श्वे.उ. ६-११) इति श्रुतौ **श्रुतत्वाच्च** तस्य वाच्यत्वमुपपन्नमित्यर्थः । निर्गुणपदप्रतिपाद्यत्वकथनान्नात्र श्रुतः गौण आत्मेति भावः ॥ ५ ॥

**(अध्याहृतसूत्रेण गतार्थताशङ्का तत्परिहारश्च)**

'श्रुत्युक्तत्वाच्च' इत्याध्याहृतसूत्रेणेदं गतार्थमिति चेत् । न । तत्र स्वाप्ययवत्त्वनिर्गुणत्वधर्मप्रतिपादनद्वारा निर्गुणस्य श्रुत्युक्तत्वमभिप्रेतम् । श्रुत्युक्तेस्तद्धर्मवचनद्वाराऽपि सम्भवात् । अत्र तु साक्षान्निर्गुणवाचकनामात्मकपदोपेतश्रुतिप्रतिपाद्यत्वमभिप्रेतम् । अत एव

---

१. 'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव । प्रकाशन्ते न विरोधः कुतश्चिद् वेदेषु सर्वेषु तथेतिहासे ॥' इति (ब्र.सू.भा.उ. पैङ्गिश्रुतिः, पृ. ८४)

सूत्राक्षरस्वारस्याय 'एको देवः' (श्वे.उ. ६-११) (इति) निर्गुणपदोपेत-श्रुत्युदाहरणं भाष्ये कृतमिति **भावबोधोक्तं** समाधानं ज्ञेयम् ॥ ५ ॥

॥ इतीक्षत्यधिकरणम् ॥ ५ ॥

## ॥ ६ ॥ अथाऽनन्दमयाधिकरणम् ॥

अस्मिन्नधिकरणे मूर्धाभिषिक्ता आनन्दविज्ञानादयः । [1]अतो माङ्गलिक आचार्यस्तच्छब्दसमन्वयमादावाहेति **उपासनापादीय-सुधोक्तरीत्या** सर्वापेक्षितानन्दादिप्रदोपासनाविषयपूर्णानन्दत्वादि-रूपमहागुणवाचकानां 'अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.उ.२.५.२) इत्यादिश्रुतिस्थानां गुणिसामान्यवाचिनामानन्दमयादिशब्दानां समन्वय उच्यते । गुणिसामान्यवाचकानामानन्दमयादिशब्दानां समन्वये सिद्धे तत्रोदाहृतश्लोकस्थानां 'आनन्दं ब्रह्मणो विद्वान्' (तै.उ.२-४-१) इत्यानन्दादिशब्दानामपि समन्वयः सिद्ध्यति ।

### ॐ आनन्दमयोऽभ्यासात् ॐ (१-१-१२)

तत्त्वित्यवधारणार्थतुशब्दात् तत्पदस्यानुवृत्तिरत्रोत्तरत्र चाध्याय-समाप्तिपर्यन्तमवगन्तव्या । आनन्दमय इत्युपलक्षणम् । अन्नान्न-मयादिशब्दवाच्योऽपि स एवेति द्रष्टव्यम् । 'उपलक्षणत्वं शब्दाना-मानन्दमयपूर्विणाम्' (अनु. व्या. श्लो.१६०) इत्यनुव्याख्यानात् ।

**सत्यनाथस्वामिनस्तु-** 'सुद्ध्युपास्यः' 'यथा गोः सास्नादिमत्त्वम्' इत्यादिवद् यथा ब्रह्मशब्दाभ्यासाद् आनन्दमयो हरिरेवमन्नान्न-मयादि[2]शब्दवाच्योऽपीत्युदाहरणप्रदर्शनपरं सूत्रमित्युपदिशन्ति । **तत्रोपपत्तिस्त्वभिनवचन्द्रिकायामनुसन्धेया ।**

---

१.'अतो आचार्य माङ्गलिकतच्छब्दसमन्वयम्' इत्युक्ते समीचीनं स्यादिति भाति।　२.'एवमन्नमयादिशब्दवाच्योऽपि' इति ख.पाठः ।

**(सू.) आनन्दमयादिर्विष्णुरेव।** 'असद्ब्रह्मेति वेद चेद् अस्ति ब्रह्मेति चेद् वेद' (तै.उ.२-६-१) इत्यानन्दमयादौ ब्रह्मशब्दाभ्यासात् एकप्रकारेणासकृदुच्चार्यमाणब्रह्मशब्दश्रवणादिति सूत्रार्थः। ब्रह्मशब्दस्य 'तदेव ब्रह्म'[1] इत्यादौ विष्णौ मुख्यत्वोक्तेरिति द्रष्टव्यम्।

**(ब्रह्मशब्दाभ्यासाभावाद् अन्नमयादीनां कथं विष्णुपरत्वमिति शङ्का तत्परिहारश्च)**

नन्वत्रोक्तो मुख्योऽभ्यास उक्तरीत्याऽऽनन्दमये 'ब्रह्म ज्येष्ठमुपासते विज्ञानं ब्रह्म चेद् वेद' (तै.उ. २.५.१) इति विज्ञानमये च वर्तते नान्नमयादिषु। तेषु 'येऽन्नं ब्रह्मोपासते' (तै.उ. २.२) 'ये प्राणं ब्रह्मोपासते' (तै.उ. २.३.१) 'आनन्दं ब्रह्मणो विद्वान्' (तै.उ. २.४.१) इति ब्रह्मशब्दः सकृदेव श्रूयत इति चेत्। उच्यते। ब्रह्मवल्लीभृगु-वल्ल्योरेकार्थत्वेन 'येऽन्नं ब्रह्मोपासते' (तै.उ. २.२) 'अन्नं ब्रह्मेति व्यजानात्' (तै.उ. ३.२) इति क्रमेण ब्रह्मवल्लीभृगुवल्ल्योः श्रवणेन पूर्वोत्तरानुवाके मिलित्वा प्रतिप्रकरणं मुख्याभ्यासस्य सम्भवात्। तथा चोक्तं चन्द्रिकायाम् - 'यद्वा, ''अन्नं ब्रह्मेति व्यजानात्'' (तै.उ. ३.२) 'इत्युत्तरानुवाकेऽप्यन्नमयादौ ब्रह्मशब्दसद्भावादभ्यासः' इति। **अभ्यास-शब्देन तदुक्तिमात्रं विवक्षितं न त्वेकप्रकारासकृदुक्तिरिति भावबोधोक्तं चन्द्रिकोक्तमेव पक्षान्तरं वा।**

यद्वा, ब्रह्मशब्दवत् 'अन्योन्तर आत्मा' (तै.उ. २.१) 'एतमन्न-मयमात्मानमुपसङ्क्रामति एतमन्नमयमात्मानमुपसङ्क्रम्य' (तै.उ. ३.१०.५) इत्यादौ ब्रह्मशब्दसमानार्थात्मशब्दसद्भावादभ्यासः। भाष्ये तु ब्रह्म-शब्दपदेन ब्रह्मवाचकः शब्दो विवक्षितः। अत एव भाष्ये 'ब्रह्मेति

---

१. 'तदेव ब्रह्म परमं कवीनां' (महा.ना.उ.१-६)

परमात्मा'[१] इत्यात्मपदोपेतस्मृत्युपपादनमिति चन्द्रिकोक्तमेव समाधानान्तरमवधेयम् ।

(मयट् न विकारार्थकः)

उक्तमाक्षिप्य समाधत्ते -

**ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ** (१-१-१३) इति ।

(सूत्रार्थः)

'अन्योन्तर आत्माऽऽनन्दमयः' (तै.उ. २.२.१) इत्यादौ **विकाराभिधायकमयट्छब्दप्रयोगाद् आनन्दमयो न विष्णुः** किन्तु प्रकृत्यादिरेवेति चेत् । ननु 'मयड्वैतयोर्भाषायाम्'[२] इत्यादिना विकारावयवयोरर्थयोर्विभाषायां मयड्विधानाद् वेदे विकारार्थे कथं तेन मयट्प्राप्तिरिति चेन्न । 'द्व्यचश्छन्दसि' (पा.सू. ४.३.१४८) इति वेदेऽपि विकारार्थे मयड्विधानात् । न च विकारार्थकमयटश्छन्दसि द्व्यच विधानाद्, [३]विज्ञानानन्दमययोश्च त्र्यच्त्वेन विकारार्थकमयट्प्रत्ययायोग इति वाच्यम् । तयोरपि व्याङोः पार्थक्यविवक्षया द्व्यच्त्वोपपत्तेरिति चेत् । **न । प्राचुर्यात्** मयटः प्राचुर्यार्थकत्वादित्यर्थः । व्याङोः पार्थक्य-विवक्षायाश्चागतिकागतित्वादिति हृदयम् ।

('आनन्दप्रचुरः' इत्यत्र नेषद्दुःखप्रतीतिरिति निरूपणम्)

अनेनाऽनन्दप्रचुरत्वादानन्दमय इत्यानन्दमयशब्दार्थः सूचितः ।

---

१. 'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते । असम्पूर्णाः परे यस्मादुपचारेण वा भवेत् ।। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते । वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ।।' इति (ब्र.सू.भा.उ.स्मृतिः पृ.९४)

२. 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' (पा.सू-४.३.१४)

३. 'विज्ञानानन्दयोश्च' इति पाठेन भाव्यमिति भाति ।

नक्षत्रादिगतप्रकाशाल्पत्वापेक्षया 'प्रकाशप्रचुरो रविः' इतिवत् सजातीयविभिन्नाधिकरणाल्पं प्राचुर्यस्य निरूपकमिति हेतोरानन्दप्रचुर इत्यस्यापि स्वव्यधिकरणसजातीयजीवगतानन्दाल्पत्वापेक्षया दुःख-मिश्रपूर्णानन्दस्यैव प्रतिभासः 'ब्राह्मणप्रचुरो ग्रामः' इत्यादाविव समानाधिकरणविजातीयानन्दाल्पत्वप्रतीत्यङ्गीकारे सवितर्यप्यन्ध-कारलेशप्रतीतिः स्यात् । नच तत् सम्भवति प्रत्यक्षविरोधादिति ब्रूषे तर्ह्यानन्दप्रचुर इत्यत्रापि श्रुत्यादिविरोधान्न तत्प्रतीतिरित्यवैहि । यद्यपि 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा'[१] इति वचनात् तादात्म्ये मयट्स्वीकारेऽपि प्रतियोगिनो दुःखस्येषदनुवृत्त्यादिशङ्कानव-काशस्तथाऽपि 'यतो वाचो निवर्तन्ते' (तै.उ.२-४-१) 'को ह्येवान्यात्'[२] इति श्रुत्यनुसारेणाऽनन्दादेः पूर्णत्वसिध्यर्थं स्वार्थिकत्वे मयटो वैयर्थ्य-परिहारार्थं प्राचुर्यार्थतोक्तेति **चन्द्रिकातो** विशेषो बोध्यः ।

### (विष्णुरेवाऽनन्दमय इत्यत्र लोकचेष्टकत्वाख्यहेत्वन्तरकथनम्)

विष्णोरेवाऽनन्दमयत्वं हेत्वन्तरेण समर्थयति -

**ॐ तद्धेतुव्यपदेशाच्च ॐ** ( १-१-१४ ) इति ।

**(सू.)** तदिति तन्त्रन्यायेनाऽवृत्त्या योज्यम् । आद्यं षष्ठ्यन्तं द्वितीयं सप्तम्यन्तम् । प्रतिज्ञासूत्रात् 'तत्तु' इत्यनुवर्तते । **तस्य** विष्णोरेव **तस्मिन्** आनन्दपूर्णत्वाख्यानन्दमयत्वे 'को ह्येवान्यात्' (तै.उ. २.७) इति तत्प्रकरणवाक्ये लोकचेष्टत्वाख्य**हेतुव्यपदेशात्** स एवाऽनन्द-मयः । न केवलं ब्रह्मशब्दाभ्यासादिति **चार्थः** । यद्वा, **तस्य**

---

१. 'तादात्म्ये' इति क. , ख. मातृकागतः पाठः प्रामादिक इति भाति ।

२. 'को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' इति (तै. २-७, पृ. १०१)

विष्णोरानन्दस्य पूर्णत्वे[१] **हेतुव्यपदेशाच्च** । मयट् प्राचुर्यार्थ इति योज्यम् ।

**('आनन्दमयो विष्णुरेव न प्रकृत्यादिः' इत्यत्र मान्त्रवर्णिकसमाख्यानरूपयुक्त्यन्तरकथनम्)**

ननु ब्रह्मशब्दस्य परब्रह्मणि मुख्यस्याभ्यासादिति यदुक्तं सत्यमेव तत् । विष्णोः 'ब्रह्म पुच्छं प्रतिष्ठा' (तै.उ. २-५-२) इत्यानन्दमयावयवत्वोक्त्याऽमुख्यार्थग्रहणस्यैवोपपत्तेर्न तस्याऽनन्दमयत्वम्, किन्त्वपरं ब्रह्म प्रकृत्यादिरेवेति शङ्कां परिहरन् विष्णोरानन्दमयत्वे युक्त्यन्तरमाह -

**ॐ मान्त्रवर्णिकमेव च गीयते ॐ** (१-१-१५ ) इति ।।

(सू.) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २-१) इति **मन्त्रवर्णे** लक्षणवत्तयो**क्तमेव** ब्रह्मान्नमयादिशब्द-पञ्चकेन **गीयते** यतस्ततो मान्त्रवर्णिकसमाख्यानाच्च विष्णुरेवाऽनन्दमय इत्यर्थः । आनन्दमयादिब्रह्मप्रतिपादकमन्त्रवर्णव्याख्यानरूपान्नमयादिप्रकरणप्रतिपाद्यत्वादिति युक्त्यन्तरमनेनोक्तं भवति । 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः'[२] इत्यादिवचनाद् अवयविन एवावयवत्वमुपपन्नमित्याशयः। 'यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला' (अनुव्याख्यानम्, अ.१, श्लो.१६४) इत्यादेरवयवेऽपि पूर्णत्वादिकमुपपन्नमित्युपपादनं ज्ञेयम् ।

---

१.'पूर्णत्वहेतुव्यपदेशाच्च' इति ख. पाठः ।

२.'शिरो नारायणः पक्षो दक्षिणः सव्य एव च । प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः ।। नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा । पुच्छं सङ्कर्षणः प्रोक्तः एक एव तु पञ्चधा ।। अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः । ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने । अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा ।।' इति (ब्र.सू.भा.उ.बृहत्संहितावचनम् पृ.१०३-१०४)

### (मान्त्रवर्णिकसमाख्यया रुद्रादिगतलिङ्गानां प्रबलत्वाद् आनन्दमयो रुद्रादिरेव न विष्णुरिति शङ्का तत्परिहारश्च)

ननु मान्त्रवर्णिकसमाख्यया न विष्णोरानन्दमयत्वादिसिद्धिः 'यश्चासावादित्ये' (तै.उ. २.८) इत्यादिश्रुतसूर्यस्थत्वादिलिङ्गानां रुद्रबृहस्पत्यादिगतानां समाख्यातः प्रबलत्वादित्यत आह-

**ॐ नेतरोऽनुपपत्तेः ॐ** ( १-१-१६ ) इति ।

(सू.) अत्र सोपलक्षितमानन्दमयपदं तत्पदं चानुवर्तते । **तस्माद्** विष्णोः, **इतरः** रुद्रादिरानन्दमयादिः **न** । 'ब्रह्मविदाप्नोति परं' (तै.उ. २.१.१) इति वाक्ये 'येऽन्नं ब्रह्मोपासते' (तै. २-२) 'सर्वमेव त आयुर्यन्ति' (तै.उ. २-३-१) इत्यादिप्रतिप्रकरणवाक्येषु च श्रुतस्याऽनन्दमयादिज्ञानेन मोक्षस्य रुद्रादिज्ञानाद**नुपपत्ते**रसम्भवादित्यर्थः । 'तमेवं विद्वानमृत इह भवति' (तै.आ. ३-१२-७) इत्यादावन्यनिषेधेन पुरुषाख्यविष्णुज्ञानादेव मोक्षश्रवणादिति भावः ।

### (पूर्वोक्तविष्णोरानन्दमयत्वे हेतूपपादकमिदं सूत्रं नतु हेत्वन्तरप्रतिपादकम्)

निरवकाशलिङ्गसहितया समाख्यया सावकाशान्यलिङ्गानां बाधसम्भवादिति प्राचीनसूत्रोक्तहेतूपपादकत्वान्न समुच्चायकचशब्दोऽत्र प्रयुक्तः । विष्णोरानन्दमयत्वे हेत्वन्तरप्रतिपादनपरत्वे 'अनुपपत्तेश्च' इति श्रूयेतेति द्रष्टव्यम् ।

### (विरिञ्चादिर्नाऽनन्दमय इत्यत्र युक्त्यन्तरकथनम्)

ब्रह्मादेरानन्दमयत्वमुपपत्त्यन्तरेणापाकरोति -

**ॐ भेदव्यपदेशाच्च ॐ** ( १-१-१७ ) इति ।।

(सू.) 'स यश्चायं पुरुषे यश्चासावादित्ये' (तै. २.८) इत्यत्र पुरुषादि[1]-पदोपलक्षितापकृष्टोत्कृष्टचेतनेष्वानन्दमयस्य स्थितिकथनेन भेदकोत्त्याऽर्थाद् **भेदव्यपदेशाद् इतरो** विरिञ्चादिर्नाऽनन्दमय इत्यर्थः ।

नन्वन्नमयादिषु सत्सु स्वपक्षसाधने परपक्षापाकरणे चाऽनन्दमयमात्रासाधारणयोस्तद्धेतु-व्यपदेशाच्चेति भेदेति च हेतुविशेषयोरुक्तिः किंनिमित्तेति चेत्, कथ्यते । आनन्दमयस्य पुच्छब्रह्मतया विशिष्याब्रह्मत्वशङ्कायां ब्रह्मत्वस्थापनायेति ।

**(त.दी.)** सुधायां तु आनन्दमयादेर्विरिञ्चादित्वं युज्यते । मुक्तिहेतुज्ञानत्वादिब्रह्मधर्माणां ब्रह्माभेदाज्जीवानां कथञ्चिदुपपत्तेरित्याशङ्कायां 'भेदव्यपदेशाच्च' इति सूत्रम् । तत्र चशब्दो न केवलमितर आनन्दमयादिर्नेति किन्तु ब्रह्माभिन्नश्च नेत्यर्थे 'स यश्चायं पुरुषे । यश्चासावादित्ये' (तै.२.८) इत्यादावधिष्ठातृत्वादिना ब्रह्मभेदस्य व्यपदेशादिति व्याख्यातम् । इति (त.दी. पु.स.२९,३० )

**(भेदव्यपदेशः युक्तिविरुद्ध इत्याशङ्का, तत्परिहारश्च)**

ननु विमता आत्मानः परमात्मनो न भिद्यन्ते आत्मत्वात् परमात्मवदित्यनुमानविरुद्धो भेदव्यपदेश इत्याशङ्कामपाकरोति -

**ॐ कामाच्च नानुमानापेक्षा ॐ** ( १-१-१८ )इति ।

(सू.) अतीन्द्रियार्थनिश्चय इति शेषः । आत्मा जडः वस्तुत्वादित्यादिप्रकारेण केवलानुमानस्य **कामगामित्वाद्** अतिप्रसङ्गादिति यावत् । अभेदादतीन्द्रियार्थनिश्चये विमता आत्मान इति केवल**ानुमानस्य नापेक्षा** । श्रुत्यादिसाहाय्यरहितमनुमानमप्रमाणमतिप्रसङ्गात् । न केवल-

१. पुरुषादित्यादि इति ख. पाठः ।

मेतावत् । किन्तु 'द्वा सुपर्णा' (श्वे.उ.४.६) इत्यादिभेदश्रुति-विरुद्धत्वाच्चेति चशब्दार्थः । अद्वैतश्रुतीनामन्यार्थत्वात् तदानुकूल्यं नोक्तानुमानस्यास्तीति भावः ।

**(त.दी.)** चोऽवधारणे । अदृष्टेऽर्थे शुष्कानुमानापेक्षा न कार्या । कामात् कामचारित्वादेवेत्यर्थः। इति पृ.सं.३०)

**(श्रुतिसिद्धभेदस्य व्यावहारिकत्वशङ्का तत्परिहारश्च)**

नन्वस्त्येव हिरण्यगर्भादीनामानन्दमयेन परब्रह्मणा भेदः श्रुति-सिद्धः । सा च सांसारिकापारमार्थिकभेदविषत्वात् पारमार्थिक-भेदानुमानस्य न बाधिकेत्याशङ्कां परिहरति -

**ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ** ( १-१-१९ ) इति ॥

**(सू.)** **अस्येति** नेतर इति प्रकृतजीवपरामर्शः। **अस्मिन्** आनन्दमय-प्रकरणे 'एतमानन्दमयमात्मानमुपसङ्क्रामति' (तै.उ. २.८२) इत्यादि-श्रुतिः **अस्य** जीवस्य **तेन** आनन्दमयेन **सहयोगं** मुक्तावपि **शास्ति** शिक्षयति, प्रतिपादयतीति यावत् । तथाच मुक्तावपि श्रुतस्य सम्बन्ध-व्याप्यभेदस्यापारमार्थिकत्वं नोचितमिति हृदयम् । यद्वा[१] **अस्मिन्** ब्रह्मवल्लीभृगुवल्लीद्वये 'एतमन्नमयमात्मानमुपसङ्क्रामति । एतमन्नमय-मात्मानमुपसङ्क्रम्य' (तै.उ. २.८) इत्यादिका श्रुतिः**अस्य** जीवस्य **तद्योगं** तैरन्नमयादिभिः सहयोगं सम्बन्धमेव **शास्ति** । अतो नान्नमयादयः पञ्चापि कोशाः । 'अस्माल्लोकात् प्रेत्य' (तै.उ. २.८) इति कोशापरपर्यायदेहत्यागस्य पूर्वमुक्तत्वेन तद्योगशासनायोगादिति बोध्यम् ॥ ६ ॥

**॥ इत्यानन्दमयाधिकरणम् ॥ ६ ॥**

---

१. 'यद्वा' इति पदं ख. पाठे न दृश्यते ।

## ।। ७ ।। अथ अन्तस्थत्वाधिकरणम् ।।

### (एतदधिकरणप्रतिपाद्यविषयः)

अत्राधिदैवगतेन्द्रादिसकलनाम्नां समन्वयसिद्ध्यर्थं 'अन्तःप्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तं'[१] इत्युक्तान्तस्थत्वलिङ्गस्य समन्वय उच्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'इन्द्रो राजा जगतो य ईशे' (तै.आ. ३-११-८) इतीन्द्रादिश्रुतेरन्तस्थ इन्द्रादिरेवेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ अन्तस्तद्धर्मोपदेशात् ॐ** (१-१-२०) इति ।।

(सू.) 'अन्तःप्रविष्टमन्तश्चन्द्रमसि' (तै.आ. ३-११) 'अन्तःप्रविष्टः शास्ता' (अनुपलब्धाकरा श्रुतिः) इत्यादौ श्रुतोऽ**न्तस्थो** विष्णुरेव । 'अन्तःसमुद्रे मनसा चरन्तं' (तै.आ.३-११-१) इत्यादिवाक्ये क्षीराब्धिशायित्वप्रलयार्णवशायित्वापरपर्यायसमुद्रान्तःस्थित-त्वादिविष्णु**धर्माणाम्** अन्तःप्रविष्टनिष्ठतया उपदेशात् ।

(त.दी.) धर्मोपदेशादित्येव पूर्तौ तदित्युक्तिस्तेषां ब्रह्माव्यभिचारित्व-पक्षधर्मत्वयोः प्रदर्शनार्था। इति (पृ.सं.३३)

### (इन्द्रादिप्रापकबलवच्छ्रुत्यादेः सत्वाद् अन्तस्थेन विष्णुना इन्द्रादीनामभेदशङ्का तन्निरासश्च)

ननु समुद्रान्तस्थत्वादिलिङ्गबलादस्त्वन्तस्थो विष्णुः, तथाऽ-पीन्द्रादिप्रापकश्रुत्यादेरपि सत्वात्तेनान्तस्थेन विष्णुनेन्द्रादीनामभेद

---

१. 'अन्तःप्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः' इति-(तै.आ.३-११, पृ.१२१)

एवास्त्वित्याशङ्कामपाकरोति-

**ॐ भेदव्यपदेशाच्चान्यः ॐ** (१-१-२१) इति ॥

**(सू.)** 'इन्द्रस्याऽऽत्मा'[१], 'अन्तरादित्ये'[२] इत्यादिवाक्येऽन्तस्थस्येन्द्राद्यन्तर्यामित्वकथनेनेन्द्रादिभ्यो **भेदव्यपदेशात् अन्यश्च** इन्द्रादिभ्योऽन्यश्चेत्यर्थः। इन्द्रादिश्रुतेर्महायोगविद्वद्रूढिभ्यां विष्णावेव मुख्यत्वेन सावकाशत्वमिति हृदयम् । अस्मिन् नये 'अन्तःप्रविष्टं' (तै.आ.३-११) इत्यादितत्तत्प्रकरणगतान्तःपदोपेतवाक्यतात्पर्यविषयत्वमात्रमेवान्तस्थत्वलिङ्गसमन्वयः। 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र.सू. १-२-१) इत्यग्रिमपादीयाधिकरणे तु व्याप्तस्य हरेरन्तः अल्पप्रदेशेऽवस्थानमयुक्तमिति चोद्यनिरासेन विष्णौ तस्य युक्ततासाधनं करिष्यत इति विशेषो द्रष्टव्यः ॥ ७ ॥

**(त.दी.)** तदित्यनुवृत्तेरन्यदिति वाच्ये पुंनिर्देशः श्रौतात्मपदानुसारात्। इति (पृ.सं.३४)

**॥ इत्यन्तस्थत्वाधिकरणम् ॥ ७ ॥**

## ॥ ८ ॥ अथाऽऽकाशाधिकरणम् ॥

### (अधिभूतशब्दसमन्वयः)

अत्राधिभूतगतानां शब्दानां समन्वयः कथ्यते । तेष्वप्याकाशस्य सर्वभूताकाशत्वेन प्राधान्यात् तस्यैव सूत्रे कण्ठतो गृहीतिः ।

### (पूर्वपक्षसिद्धान्तौ)

'अस्य लोकस्य का गतिरित्याकाश इति होवाच' (छा.उ.१-९)

---

१. 'इन्द्रस्याऽऽत्मा निहितः पञ्चहोता' (तै.आ.३.११) - पृ.सं.१२६

२. 'अन्तरादित्ये मनसा चरन्तम्' (तै.आ.३.११) - (पृ.सं.१२६)

इति छन्दोगश्रुतौ श्रूयमाणो आकाशः प्रसिद्धाकाश एवेति पूर्वपक्षे, सिद्धान्तयति -

**ॐ आकाशस्तल्लिङ्गात् ॐ ( १-१-२२ )** इति ।

(सू.) अत्र तदिति तन्त्रं षष्ठ्यन्तं सप्तम्यन्तं च । छान्दोग्ये श्रूयमाणो आकाशो विष्णुरेव । **तस्य** सर्वोत्तमत्वाख्यविष्णुलिङ्गस्य **तस्मिन्** आकाशे 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा.उ.१-९) इति **लिङ्गात्** श्रवणात् । 'लिङ्गं ज्ञापकमुद्दिष्टं' (अनुपलब्धाकरं वचनम्) इति वचनात् ।

'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।
परोवरं परं तस्मात् प्रोक्तं [1]पारोवरीयकम् ।।'

'उच्चोऽसौ गीयते चेति ।'[2]

'उद्गीयमान उद्गीथो भगवान् पुरुषोत्तमः' (छा.भा. अ-ख-१, पृ.२४)

इति छान्दोग्यभाष्ये द्वितीयेऽध्याये[3] परोवरीयस्त्वादिपदार्थो बोध्यः ।। ८ ।।

**।। इत्याकाशाधिकरणम् ।। ८ ।।**

(त.दी.) लिङ्गादित्युक्तिः समुदायाशया । प्रतिनयं तत्त्वित्यवधारणार्थ-कतोरनुवृत्तिः 'अभिमानिव्यपदेशस्तु' (ब्र.सू.२.१.६) इत्यत्राभिमानिदेवतेव महायोगविद्वद्रूढिभ्यामीश एव तत्तच्छब्दमुख्यार्थ इति दर्शयितुम् । (पृ.सं.३५)

---

१. 'परोवरीयकम्' इत्यपि क्वचित् ।

२. (छा.भा.)सम्प्रति छान्दोग्यभाष्ये 'उच्चत्वाद् गीयमानत्वात्' इत्येव पाठः दृश्यते- पृ.सं.८

३. सम्प्रति मुद्रितपुस्तके प्रथमाध्यायेऽयं श्लोको लभ्यते ।

## ॥ ९ ॥ अथ प्राणाधिकरणम् ॥

### (एतदधिकरणप्रतिपाद्यकथनम् - आध्यात्मिकशब्दसमन्वयः)

अस्मिन्नध्याये आध्यात्मिकाशेषशब्दानां समन्वयः कथ्यते । तेषु प्रधानत्वात् प्राणशब्दः सूत्रे उपात्तः ।

### (पूर्वपक्षसिद्धान्तौ)

'तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः'[१] इति [२]तैत्तिरीये श्रुतः प्राणः प्रसिद्धत्वाद् वायुरेवेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ अत एव प्राणः ॐ**(१-१-२३) इति ।

(सू.) एवशब्दो बलवदर्थकः । 'शब्दादेव प्रमितः' (ब्र.सू.१-३-२४) इति यथा। 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' [३] इति प्राणे उक्तान्मनसाऽप्यन्यत्र स्मर्तुमशक्यत्वाच्छ्रीलक्ष्मीपतित्वरूपविष्णुलिङ्गादेव **प्राणः** प्राणनामा विष्णुरेवेत्यर्थः । यद्यपि 'अद्भ्यः सम्भूतः' (तै.आ. ३.१३) इत्यनुवाके 'श्रीश्च लक्ष्मीश्च' (तै.आ. ३.१३) इति वाक्यम्। 'भर्ता सन् भ्रियमाणः' (तै.आ.३-१४) इत्यनुवाके च 'तद्वै त्वं प्राणः' (तै.आ.३-१४) इति वाक्यं (विद्यते) । ततश्च न श्रीलक्ष्मीपतित्वलिङ्गं विषयवाक्य-सन्निहितवाक्ये श्रूयमाणम् । तथाऽप्यनुवाकद्वयस्यैकार्थतयैक-वाक्यत्वादेवमुक्तम् । कथमन्यथा 'श्रीश्च ते' (तै.आ.३-१३) इति युष्मच्छब्देनोक्तस्य 'तद्वै त्वं प्राणः' (तै.आ.३-१४) इत्यत्रापि

---

१.'तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान् प्राणयो नव ॥' इति (तै.आ.३-१४, पृ.१३१)

२.'तैत्तरीये' इति क. पाठः ।

३. (तै.आ. ३-१३) यद्यपि तैत्तिरीय शाखायां 'ह्रीश्च ते' इत्येव पाठः । तथाऽपि वाजसनेयशाखाभिप्रायेण एवमुदाहृतमिति भाष्यदीपिकातोऽवगन्तव्यः ।

युष्मच्छब्देन प्रत्यभिज्ञानमिति ध्येयम् । अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' (तै.आ.३-१३) इति सन्निहितवाक्ये श्रूयमाणस्य (न्या.सु.वचनम्) इति **सुधायामुक्तम्** । विष्णोरेकभार्यकत्वेऽपि पत्न्यावित्युक्तिः स्थानभेदस्थरूविशेषाभिप्रायेणेति टीकायामुक्तम्- 'वक्षःस्थलाश्रिता श्रीरिति सम्प्रदायविदः (त.प्र.उ.वचनम् पृ. ४१२०) इति । लक्ष्मीस्त्वङ्कगतेति भावः ।'

ननु तर्हि 'अङ्काश्रिताः श्रीः, वक्षसि लक्षणभूता लक्ष्मीः'[१] इति **तत्त्वप्रदीपे** कथमुक्तमित्यतः स्वोक्तार्थे सम्मतिरभिहिता 'सम्प्रदायविदः' इति । तथाच वदन्ति- 'श्यामे पृथावुरसि शोभितया श्रिया स्वग्रीवामणिं सुभगयन्तमिवाऽत्मधिष्ण्यम्'[२]

'तस्याः श्रियः स जगतो जनको जनन्याः वक्षोधिवासमकरोत् परमं विभूतेः ।।'[३] इति क्रमेण तृतीयस्कन्धाष्टमस्कन्धादिगतवाक्यानि ।

ननु तर्ह्ययं न सम्प्रदायः । तथा हि । सम्प्रदायो नामोपदेशपरम्परामात्रं नतु ग्रन्थे निबन्धः । तथाचोक्तम्- 'उभयोरपि दृष्टोऽन्तः' (भ.गी. २.१६) इति द्वितीयाध्यायगीतामूलप्रमेयदीपिकायाम्- **'आगमो ग्रन्थ-**

---

१. 'लक्ष्मभूता' इति क्वचित् पाठः ।

२. 'कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोक कलया हृदि संस्पृशन्तम् । श्यामे पृथावुरसि शोभितया श्रिया स्वग्रीवामणिं सुभगयन्तमिवाऽत्मधिष्ण्यम् ।' इति (भागवतम्, ३.१६.३९)

३. 'तस्याः श्रियः स जगतो जनको जनन्याः वक्षोधिवासमकरोत् परमं विभूतेः। श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ।।' इति (भाग. ८.४.२४, पृ.२७३), सम्प्रति विजयध्वजीये 'स्वस्याः स्त्रियस्त्रिजगतो जनन्याः' इति पाठः दृश्यते । (पृ. २७३)

निवद्धवाक्यम् । सम्प्रदायस्तूपदेशपरम्परामात्रमिति भेदः' (गी.भा. प्र.दी. २.१६, पृ. ४२) इति ।

तथा

'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि ।
सर्वत्र ये गुणाः प्रोक्ताः [१]सम्प्रदायगताश्च ये ।
सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम् ॥'[२]

इति तृतीयाध्यायगीताभाष्यमूलप्रमेयदीपिकायां 'वेदाद्यनुक्ता अपि भगवत्सम्प्रदायागताः'[३] इत्युक्तम् । वक्षःस्थलाश्रितायाः श्रीत्वं तु भागवतादावभिहितमिति सम्प्रदायो न भवतीति चेत् । सत्यम् । सम्प्रदायविद इति न प्रकृतापेक्षया । किन्तु व्यासादयः सम्प्रदायविदः स्वरूपकथनमात्रमित्याहुः ।

ननु तथाऽपि 'मेऽङ्कगायाः श्रियोऽहम्'[४] इति भारततात्पर्यनिर्णयविरोधः । तत्र [५]श्रियो वक्षःस्थलस्थितत्वाभिधानादिति चेन्न । तत्र श्रीशब्दस्य[६] यज्ञनामकलक्ष्मीरूपविशेषाभिधायकत्वेन श्रीनामक-

१. 'सम्प्रदायागताश्च' इति ख. पाठः ।

२. 'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि । सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायगताश्च ये ॥ सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम् ॥ तेषामेव भवेन्मुक्तिः नान्यथा तु कथञ्चन ॥' इति (गी.भा.उ.गारुडवचनम्) पृ.सं. १८५

३. (भ.गी. ३.४२-४३), (गी.भा.प्र.दी.) पृ.सं. १८५

४. 'तयोक्तोऽहं नावतारेषु कश्चित् विशेष इत्येव यदुप्रवीरम् । सर्वोत्तमोऽसीत्यवदं स चाऽह न केवलं मेऽङ्कगायाः श्रियोऽहम् ॥' इति (म.भा.ता.नि. २०.७२, पृ.१५३)

५. श्रियोऽवक्षःस्थिलस्थित्वाभिधानात्' इति 'श्रियो वक्षःस्थलस्थितत्वानभिधानात्' इति वा पाठेन भाव्यमिति भाति ।

६. लक्ष्मीरूपविशेषाभिधायकत्वेन' इति ख. पाठः ।

रूपानभिधायकत्वात् । तथाच व्याख्यातं **वरदराजीयादौ**- 'मे ममाङ्कस्थितायाः यज्ञानाम्न्याः श्रियः उत्तमः' इत्यादि ।

**(सूत्रेषु विष्णुलिङ्गोक्तिर्व्यर्था इति शङ्का तत्समाधानं च)**

नन्वधिकरणत्रयेऽपीन्द्राकाशप्राणनामानि विष्णावेव मुख्यानि तत्प्रवृत्तिनिमित्तानि परमैश्वर्यावकाशप्रदत्वप्रकृष्टचेष्टकत्वादीनि विष्णौ निरवधिकान्यपराधीनानि च । पुरन्दरादिषु सावधिकानीश्वरायत्तानि च । रूढिरपि तेषु भगवत्सन्निधाननिमित्तैव । न च भगवत्यन्य-निमित्ता । 'मुख्यामुख्ययोश्च मुख्ये सम्प्रत्ययः' (गी.भा.प्र.दी.उ.न्यायः) इति न्यायेनेन्द्रादिशब्दैर्विष्णुग्रहणसिद्धौ सूत्रेषु विष्णुलिङ्गोक्तिर्व्यर्थेति चेत् । सत्यम् । 'सति चैवमभ्युपगमवादेनैव तद्धर्मोपदेशादित्युक्तम्' (न्या.वि.टी.) इति न्यायविवरणटीकोक्तरीत्याऽभ्युपगमवादेन वा तात्पर्यज्ञापनार्थत्वेन वा सार्थक्यात् ॥ ९ ॥

**॥ इति प्राणाधिकरणम् ॥ ९ ॥**

(त.दी.) एवेति 'शब्दादेव'(ब्र.सू.१.३.२४)इत्यत्रेव लिङ्गस्य निरवकाशत्वमाह। इति ( पृ.सं.३७)

## ॥ १० ॥ अथ ज्योतिरधिकरणम् ॥

**(पूर्वपक्षसिद्धान्तौ)**

'वि मे कर्णा पतयतो विचक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् । विमे मनश्चरति दूर आधीः' (ऋ. ६-९-६) इति वाक्योक्तं ज्योतिरग्नि-सूक्तत्वादग्निरेवेति पूर्वपक्षे, सिद्धान्तयति -

**ॐ ज्योतिश्चरणाभिधानात् ॐ** (१-१-२४ ) इति ॥

(सू.) इदं **ज्योतिः** विष्णुरेव । कर्णादीनां विरुद्ध**चरणाभिधानात्** ।

कर्णादिविदूरत्वलिङ्गादित्यर्थः । अत्र कर्णादिविदूरत्वं नामेयदिति परिच्छेदानर्हवैभवत्वं नतु सर्वथा कर्णादिविदूरत्वम् । काप्यसम्भवात् । तच्च 'परो मात्रया' (ऋ.७. ९९.१) इति भाष्योक्तश्रुतिभिर्निरव-काशम् । नहि 'अग्निर्वै देवानामवमः' (ब्र.सू.भा.उ.) इत्यवमतया 'भीषाऽस्मादग्निस्तपति' (ब्र.सू.भा.उ.) इति सभयतया श्रुतस्या-ग्नेरपरिच्छेद्यं वैभवमस्ति । अग्निश्रुत्यादिकं तु विष्णौ सावकाशमिति भावः । अग्निसूक्तमित्यध्यापकप्रसिद्धिस्तु 'अभिव्यक्तेरित्याश्मरथ्यः' (ब्र.सू.१-२-२९) इत्यादिवक्ष्यमाणन्यायेन तत्तत्सूक्तप्रतिपाद्यविष्ण्वधि-ष्ठानत्वनिमित्तकौपचारिकी । इदं न विष्णुसूक्तमिति प्रसिद्धिस्तु विष्ण्वादिशब्दाभावादज्ञानमूलेति ज्ञेयम् ।

### (सूत्रे चरणपदग्रहणे कारणोक्तिः)

ननु श्रुतौ पतयत इति पतनस्याऽदित्वात् पतनाभिधानादिति वाच्ये कुत उल्लङ्घनमिति चेत् । सत्यम् । पतनाभिधानादित्युक्तौ कर्णादिविदूरत्वस्य स्पष्टमप्रतीतेः । चरणस्य ज्योतिःसान्निध्यात् पतॢ गताविति पतनार्थस्य 'चरगतिभक्षणयोः' इति चरणे प्राप्तेश्च सूत्रे चरणेत्युक्तम् ।

### (सूत्रे 'विचरणाभिधानात्' इत्यस्य सार्थक्यकथनम्)

नन्वथापि ज्योतिः प्रति कर्णादीनां विरुद्धचरणरूपं कर्णादिविदूरत्वं वक्तुं 'विचरणाभिधानात्' इति सूत्रयितव्यम् । 'चरणाभिधानात्' इति कथमिति चेत् । न । इदमेवाऽऽशङ्क्य समाहितं चन्द्रिकायाम्- 'तथाऽ-प्युपसर्गस्य द्योतकत्वमात्रं , धातोरेव विचरणाभिधायकत्वमिति प्रदर्श-नार्थं सूत्रस्य श्रुत्यनुगमप्रदर्शनार्थं च 'चरणाभिधानात्' इत्युक्तम् । 'विचरणाभिधानात्' इत्युक्तौ हि श्रुतौ वीत्यनेन चरतीत्यर्थस्य मे मन

इति पदद्वयव्यवहितत्वाच्छ्रुत्यनुगमो न ज्ञायेत' (तात्पर्यचन्द्रिका) इति ॥ १० ॥

॥ इति ज्योतिरधिकरणम् ॥ १० ॥

(त.दी.) प्रकाशवाचित्वेन प्राधान्याद् वा पूर्वाक्षेपकहृदयाहितत्वयुक्ततया वाऽन्योपलक्षणार्थत्वेन ज्योतिष उक्तिः। (पृ.सं. ३७,३८)

**॥ ११ ॥ अथ छन्दोऽधिकरणम् ॥ (गायत्र्यधिकरणम्)**

**(अधिवेदगतशब्दसमन्वयः)**

अत्राधिवेदगतानां शब्दानां समन्वयः कथ्यते ।

**(पूर्वपक्षसिद्धान्तौ)**

'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग् वै गायत्री' (छा.उ.३-१२-१) इत्याद्युपक्रम्य 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छा.उ.३-१३-७) इति छन्दोगतृतीयाध्याये श्रुता गायत्री छन्दोविशेष एवेति पूर्वपक्षनिषेधपूर्वं सिद्धान्तयति -

**ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात् तथा हि दर्शनम् ॐ** (१-१-२५) (इति ।)

(सू.) 'गायत्री वा इदं सर्वं' (छा.उ.३-१२-१) इति छन्दः उपक्रम्य 'अथ यदतः' (छा.उ.३-१३-७) इति ज्योतिषोऽभिधानात् । गायत्रीपदस्य **छन्दसि** छन्दोविशेषे **अभिधानात्** वाचकत्वाद् रूढत्वादिति वा गायत्री **न** विष्णुः, अत एव न ज्योतिः **अपीति चेत्**[१] शङ्क्यते, **तन्न** । **तथा** गायत्रीशब्दार्थभूतगानत्राणकर्तृत्वरूपगुणस्वरूपत्वेन **चेतोर्पणार्थं**

१. 'इति चेत्' इत्युक्ते समीचीनं स्यादिति भाति ।

उपासनार्थं **निगदात्** कथनात् । **हि** यस्मात् **तथा दर्शनम्** 'गायति त्रायति च' (छा.उ.३-१२-१) इति श्रुतिरस्तीत्यर्थः ।

'तन्निःसृतत्वाद् वेदानां गायकस्त्रायति चाखिलम् ।
अतो गायत्रिनामाऽसौ वासुदेवः परः पुमान् ॥'

(त.प्र.भावदीपोदाहृता स्मृतिः, पृ.४३६)

इति स्मृत्या निखिलवेदोच्चारयितृत्वादध्येतॄणां पापाद् रक्षण-कर्तृत्वाख्यस्य गानत्राणकर्तृत्वस्य विष्णुनिष्ठत्वेन छन्दस्यनवकाशादिति भावः। गायत्रीश्रुतेश्च 'सर्वच्छन्दोभिधो ह्येषः'[1] (इति) पौराणिकरूढ्या विष्णावेव सावकाशत्वादिति च हृदयम् ।

ननु 'बाहुल्याच्छ्रुतिलिङ्गयोः' (अनु.व्या. १-२४९) इत्यनुभाष्य-सुधयोरुक्तरीत्या 'अतो (ततो) ज्यायांश्च पुरुषः' (छा.३.१२.६) 'यद्वै तद्ब्रह्म' (त.प्र.भा.दी.उ.श्रुतिः) 'एतामेव ब्रह्मोपनिषदं वेद' (त.प्र.भा.दी.उ. श्रुतिः) इति पुरुषब्रह्मश्रुतयो भूतादिपादत्वपुरुषसूक्तोक्तत्वे 'एतामेव नातीशीयन्ते' (छा.उ.३.१२.२) इत्युक्तसर्वोत्तमत्वादीनि लिङ्गानि चेति श्रुतिलिङ्गबाहुल्यमेव निर्णायकं वाच्यम् । लिङ्गस्यामुख्यवृत्त्याऽप्यन्यत्रावकाशादिति टीकायां लिङ्गस्य निरवकाशतयैव निर्णयः कस्मात् कृत इति चेत् । सत्यम् । 'अधिवेदगतानां शब्दानां भगवद्विषयत्व-मेवानन्यथासिद्धलिङ्गैः' (न्या.वि., पृ. २१,२२) इति न्यायविवरण-स्वारस्यमनुरुध्य लिङ्गानां निरवकाशत्ववचनमिति प्रतिभाति ।

### (हेत्वन्तरेण गायत्र्याः विष्णुत्वसमर्थनम्)

हेत्वन्तरेण गायत्र्याः विष्णुत्वं समर्थयति -

---

१. 'सर्वच्छन्दोभिधो ह्येषः सर्वदेवाभिधो ह्यसौ । सर्वलोकाभिधो ह्येषस्तेषां तदुपचारतः ॥' इति (ब्र.सू.भा.उ. वामनपुराणवचनम्, पृ.१४०)

**ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ** (१-१-२६) इति ॥

(सू.) **एवं**शब्दः यथान्यासं प्रतिज्ञार्पकः सन्नपि व्यपदेशे प्रकारार्पकतयाऽप्येवंभूतादीति हेतुनाऽप्यन्वेति । स च पराभिप्रेतपृथिव्यादिभूतपादोपदेशव्यावृत्त्यर्थः । तथा चायमर्थः । **एवं** 'एतावानस्य महिमाऽतो ज्यायांश्च पुरुषः पादोऽस्य विश्वा भूतानि'[१] इति मन्त्रोक्तप्रकारेण विष्णुसामर्थ्यैकदेशपरिमितत्वरूप**भूतपादव्यपदेशादिपदात्** 'अमृतं दिवि' (छा.उ. ३-१२-६) इत्यमृताख्यस्वरूप **पादव्यपदेशात्** । तस्य च विष्णावेवोपपत्तेश्चशब्दादन्यत्रानुपपत्तेश्चेति वा । न केवलं **भूतादिपादव्यपदेशात्,** किन्तु गायत्र्याः 'सैषा चतुष्पदा षड्विधा गायत्री' (छा.उ.३.१२.५) इति प्रतिज्ञातचतुष्पादत्वस्य 'तदेतदृचाभ्यनूक्तं तावानस्य महिमा' (छा. उ. ३-१२ -५) इत्यादिना विष्णवभिधायकपुरुषसूक्तगतमन्त्रेणोपपादनेन पुरुषसूक्तत्वाच्चेति वा **एवं** गायत्री विष्णुर्भवेदित्यर्थः ।

**(पूर्वोक्तगायत्रीज्योतिषोर्विष्णुत्वाक्षेपेण समाधानम्)**

यदुक्तं गायत्री ज्योतिश्च विष्णुरिति तदाक्षिप्य समाधत्ते -

**ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ**

( १-१-२७ ) इति ।

(सू.) 'त्रिपादस्यामृतं दिवि' (छा.उ.३-१२-६) इति द्युस्थितत्वं गायत्र्या उपदिश्यते । 'अथ यदतः परो दिवः'[२] इति ज्योतिषः दिवः परत्व-

---

१. 'तावानस्य महिमा ततो जायांश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥' (छा. उ. ३-१२ -६) इत्यपि पाठः क्वचित् । स च शाखान्तरगत इति भाष्यदीपिकोक्तदिशाऽवधेयम् ।

२. 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छा.उ.३-१३-७, पृ.१३६)

मुपदिश्यत इत्युपदेशयोर्भेदात् प्रकरणद्वयेनैकं वस्तूच्यत इति चेत् । **उभयस्मिन्** सप्तम्यन्तपञ्चम्यन्तपदघटितयोर्वाक्ययोरपि विवक्षा-विशेषादेकार्थत्वेन विरोधाभावादित्यर्थः ।

'लोकत्रयविवक्षायां परतो लक्षयोजनात् ।
सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ॥'[१]

इति स्मृत्यनुसारेण यदा भूर्भुवःस्वरिति लोकत्रयविवक्षा तदा लक्षयोजनोच्छ्रितान्तरिक्षलोकादुपरितनस्थसर्वस्यापि द्युत्वाच्छ्वेत-द्वीपानन्तासनवैकुण्ठाख्यं त्रिपात्सञ्ज्ञं रूपत्रयं दिवीत्युच्यते । नच 'पृथीवीस्थेषु सर्वोच्चलोकोऽनन्तासनात्मकः'[२] इत्युक्तत्वाद् अनन्ता-सनस्य नान्तरिक्षादुपरितनत्वमिति शङ्क्यम् । तस्य पृथीवीस्थत्वेऽपि बहुलक्षयोजनोच्छ्रितत्वेन एकलक्षयोजनोच्छ्रितान्तरिक्षाद् उपरि-तनत्वोपपत्तेः । सर्वपृथीवीस्थोच्चत्वोक्त्या तु नान्ययोगो व्यावर्त्यते किन्त्वयोगः । त्रिलोकविवक्षापक्षे 'अनन्तासनवैकुण्ठनारायणपुराणि

---

१. 'लोकत्रयविवक्षायां परतो लक्षयोजनात् ।
सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ।
दिवःपरश्चैव भगवान् सप्तलोकविवक्षया ॥'
इति (त.प्र.भावबोधोदाहृता छा.भा. स्मृतिः, पृ. ४५३)

२. 'पृथीवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।
अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिः ॥
द्युयात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।
पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ॥
तृतीयं सप्तलोके च सदनं त्रिविधं स्मृतम् ।
तेभ्योऽनन्तासनाद्या यत् परतो विश्वतः परः ॥'
इति (त.प्र.भा.बो.उ.स्मृतिः, पृ.४५४)

तु । त्रीणि धामानि विष्णोर्वै त्रिलोकाद् बहिरेव हि'[१] इति द्वितीयस्कन्धतात्पर्ये षष्ठेऽध्यायेऽभिहितम् ।

त्रिलोकाद् बहिष्ठत्वं श्वेतद्वीपानन्तासनयोः कथमुपपादनीयम् ? तयोस्त्रिलोकान्तस्थत्वादिति चेत् । सत्यम् । वैकुण्ठस्य त्रिलोकाद् बहिष्ठत्वेन तत्साहित्याच्छत्रिन्यायेनेतरलोकयोरुपचार इति केचित् । [२]अपि तु श्वेतद्वीपाख्यपृथिव्यन्तरिक्षलोकाद्बहिष्ठत्वमस्त्येव । स्वर्गाद् बहिष्ठत्वमुपपादनीयम् । स्वर्गशब्देन नामरावती ग्राह्या । अपि तु 'शक्रलोकसमीपगः'[३] इति द्वितीयतात्पर्योक्तशक्रलोको नाम साङ्कल्पिकस्वर्गोऽन्तरिक्षादुपरितनो ग्राह्यः । 'लोकत्रयविवक्षायाम्' (त.प्र.भा.बो.उ. स्मृतिः, पृ.४५३) इति वचनेनान्तरिक्षादुपरितनप्रदेशस्य स्वर्गशब्दवाच्यत्वात् तत्परत्वं श्वेतद्वीपस्यास्ति । तथाऽनन्तासनस्यापि पृथिव्यन्तरिक्षाभ्यां बहिष्ठमस्त्येव । लक्षमात्रयोजनोच्छ्रितान्तरिक्षादुपरितनात् स्वर्गशब्दवाच्यादुत्तमत्वमप्यस्त्येव । 'बहुलक्षोच्छ्रितेषु' इत्यनन्तासनस्य बहुलक्षोच्छ्रितत्वोक्तेरिति वदन्ति ।

---

१. 'अनन्तासनवैकुण्ठनारायणपुराणि तु । त्रीणि धामानि विष्णोर्वै त्रिलोकाद् बहिरेव हि ।। अदायदास्तु पुत्राणामुद्रिक्तज्ञानचक्षुषः । नारायणपरा देवा एव तान्याप्नुवन्ति च ।। स एवान्यस्वरूपेण शक्रलोकसमीपगः।। इज्यो यज्ञपुमान्नाम ज्ञानिनां गृहिणां पदम् ।। यतीनां ध्रुवलोकस्थो वनिनां मेरुमध्यगः । आदित्यमण्डलस्थस्तु ज्ञानिनां ब्रह्मचारिणाम् ।।' इति (भागवतम्.२-६-१९) (भागवततात्पर्योदाहृतं ब्रह्माण्डवचनम्, पृ.९५)

२. 'अन्ये तु श्वेतद्वीपस्य' इति पाठेन भाव्यमिति भाति ।

३. 'अनन्तासनवैकुण्ठनारायणपुराणि तु । त्रीणि धामानि विष्णोर्वै त्रिलोकाद् बहिरेव हि ।। अदायदास्तु पुत्राणामुद्रिक्तज्ञानचक्षुषः । नारायणपरा देवा एव तान्याप्नुवन्ति च ।। स एवान्यस्वरूपेण शक्रलोकसमीपगः।।' इति (भागवतम्.२-६-१९) (भागवततात्पर्योदाहृतं ब्रह्माण्डवचनम्, पृ.सं.९५)

वस्तुतस्तु 'पृथीवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः'[१] इत्युक्तेरनन्तासनस्य पृथिवीलोकापेक्षया बहिष्ठत्वम् । 'यावानुच्चः स्वर्गलोकस्तावानुच्चतया स च । श्वेतद्वीपः' (त.प्र.भा.बो.उ. स्मृतिः, पृ. ४५३) इत्युक्तेः श्वेतद्वीपस्यान्तरिक्षाद् बहिष्ट्वं वैकुण्ठस्य स्वर्गलोकादिति मिलित्वा त्रिलोकाद् बहिः सन्तीत्यर्थः । यदा तु भूर्भुवःस्वःमहर्जन-स्तपःसत्यमिति सप्तलोकविवक्षा तदेन्द्रसदनस्य द्युत्वात् तत्परस्य वैकुण्ठस्य दिवःपरत्वम् । 'पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् । दिवीन्द्रसदनं चैव तत्परे तु दिवःपरे ॥' (भा.दी.उ.स्मृतिः, पृ.१४६) इति स्मृतेर्मेरोरपि द्युत्वात् तत्परस्यानन्तासनस्यापि दिवःपरता । सूर्य-मण्डलस्यापि द्युत्वात् तत्परस्य श्वेतद्वीपस्यापि दिवःपरत्वम् ।

अत्र यद्यपि लोकत्रयविवक्षायामप्यनन्तासनादीनां मेर्वादिपरत्वेन दिवःपरत्वसिद्धिः । स्वर्गलोकात् परत्वं तु अनन्तासनश्वेतद्वीप-योर्नास्ति । 'यावानुच्चः स्वर्गलोकस्तावानुच्चतया स च । श्वेतद्वीपो दिविष्ठोऽतः' (त.प्र.भा.बो.उ. स्मृतिः, पृ. ४५३) इत्यादेः । तथाऽपि वैकुण्ठस्य सर्वद्युपरत्वसिद्धये सप्तलोकविवक्षोक्तिः । तदुक्तम्- 'द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते'[२] इति । त्रिलोकापेक्षा-

---

१. 'पृथीवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः । अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिः ॥ द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते । पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् । तृतीयं सप्तलोके च सदनं त्रिविधं स्मृतम् । तेभ्योऽ-नन्तसनाद्या यत् परतो विश्वतः परः ॥' (त.प्र. भा.बो.उ.स्मृतिः, पृ.४५४)

२. 'पृथीवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः । अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिः ॥ द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते । पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ॥ तृतीयं सप्तलोके च सदनं त्रिविधं स्मृतम् । तेभ्योऽनन्तसनाद्या यत् परतो विश्वतः परः ॥' (त.प्र. भा.बो.उ.स्मृतिः, पृ.४५४)

यामन्तरिक्षोपरितनसर्वलोकपरत्वस्य सप्तलोकविवक्षायां मेरुसूर्यमण्डलेन्द्रसदनवाचकत्वस्याङ्गीकृतत्वाद् अनेकार्थत्वं द्युशब्दस्य अक्षादिशब्दवद् वृद्धव्यवहारादिना सर्वत्र मुख्यत्वेन वा एकत्र मुख्यत्वेऽप्यन्यत्रामुख्यत्वेन वेति **चन्द्रिकोक्त**रीत्या विवक्षाभेदाद् विज्ञेयम् ।

'यद्वा, चित्प्रकृत्यात्मकत्वेन द्योतमाने स्थानत्रये सप्तम्यन्तो द्युशब्दो यौगिकः पञ्चम्यन्तस्तु स्वर्गादौ रूढः' (त.प्र.भा.बो., पृ. ४५४) इत्यादि**भावबोधाचार्योक्तरीत्या** सौत्राविरोधशब्दार्थतया द्युशब्दस्यानेकार्थत्वमवधेयम् ।

ननु 'टाबृचि' (पा.सू. ४-१-९) इति ऋचि वाच्यायामेवं टाब्विधानाद् गायत्र्या विष्णुत्वे 'सैषा चतुष्पदा' (छा. ३.१२.५) इति कथमिति चेत्, सत्यम् । गायत्र्या अपि मुख्यवाच्यत्वस्य परममुख्यवृत्त्या विष्णोर्वाच्यत्वस्य चाविरोधेन ऋचोऽपि वाच्यत्वात् ।। ११ ।।

।। इति छन्दोधिकरणम् ।। ११ ।।

## ।। १२ ।। अथ पादान्त्यप्राणाधिकरणम् ।।

### (एतदधिकरणप्रतिपाद्यविषयः - प्राणादिशब्दसमन्वयः)

अत्र नये बहुश्रुतिलिङ्गप्रापितान्यपरत्वशङ्काविषयप्राणादिशब्दानां समन्वयः कथ्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'ता वा एताः शीर्षन् छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः' (ऐ.आ.२-१-४) इत्यैतरेये श्रुतः प्राणः इन्द्रियगणे गणितत्वात्, मुख्यप्राणस्य सर्वेन्द्रियस्वामित्वाद् इन्द्रस्य हस्ताधिष्ठातुरिन्द्रियत्वाज्जीवस्य चेन्द्रियजन्यफलाश्रयत्वान्मुख्यप्राणादिरेवेति पूर्वपक्षे, सिद्धान्तयति -

ॐ प्राणस्तथानुगमात् ॐ (१-१-२८) इति ।

**(सू.) तथा** 'तद्वै त्वं प्राणः' (तै.आ.३.१४) इति तैत्तिरीयश्रुताविवाय-मपि **प्राणो** विष्णुरेव । 'तं देवाः प्राणयन्त' (ऐ.आ.२-१-५) इत्यादि-वाक्योक्तानां देवतोपदेश्यत्वादीनां विष्णुलिङ्गानामस्मिन् प्राणे बहु-स्थलेषु **अनुगमात्** अनुवृत्तेः, अभ्यासादिति यावत् । 'एतद्ब्रह्म' (ऐ.आ.२.१.१) 'ब्रह्मणो लोकः' (ऐ.आ.२.१.३) 'ब्रह्मेमं पुरुषम्' (ऐ.आ.२.१.४) 'उदरं ब्रह्म' (ऐ.आ.२.१.४) इति ब्रह्मशब्दाभ्यासादिति वाऽर्थः ।

**(त.दी.)** तथेत्युक्तिस्तत्रोक्तजीवनहेतुत्वरूपप्राणपदप्रवृत्तिनिमित्त-सत्त्वस्मारणार्था । 'तथा प्राणाः (ब्र.सू. २.४.१) 'तथाऽन्यत् प्रतिषेधात्' (ब्र.सू. ३.२.३७) इत्यादिवत् । यद्वा, अस्यान्यत्वे प्राचीनोऽप्यन्य इति न शङ्क्यम्। स चायं च ब्रह्मैवेति वक्तुं तथेत्युक्तिः । अनुगमादित्युक्तिरेतत्प्रकरणस्य वैष्णवत्वोक्त्यर्था । इति (पृ.सं. ४५)

**(प्राणस्य विष्णुत्वे आक्षेपः समाधानं च)**

विष्णुरयं प्राण इति यदुक्तं तदाक्षिप्य समाधत्ते-

**ॐ न वक्तुरात्मोपदेशादिति चेद् अध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ** (१-१-२९) इति ।

(सू.) पूर्वसूत्रात् 'अनुगमात्' इति हेतुरनुवर्तते । **वक्तुः** बृहतीसहस्र-शंसितुर्विश्वामित्रस्य इन्द्रेण 'प्राणो वाऽहमस्म्यृषे' (ऐ.आ.२.२.३) इति प्राणतया **आत्मनः** स्वस्य **उपदेशान्न प्राणो** विष्णुरिति चेत् । **न** । ब्रह्मशब्दानुगमात् । नचोपदेशविरोधः । **हि** यतः **अस्मिन्** प्रकरणे **अध्यात्मनः** अधिकात्मनः परमात्मनः । आत्मानं जीवसमूहमधिकृत्य

विद्यमानाः **अध्यात्मानो** देहास्तेषां सम्बन्धबाहुल्यम् **अध्यात्म-सम्वन्धभूमा** 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' (ऐ.आ.२-२-३) इत्यादिना सर्वगतत्वमुक्तमस्ति। तथा चेन्द्रे भगवतः सत्त्वात् तदभिप्रायेण 'प्राणो वाऽहम्' (ऐ.आ.२-२-३) इत्युक्तिः ।

(सूत्रस्यार्थान्तरम्)

अथवा, हि यस्मादस्मिन् इन्द्रे **अध्यात्मनः**= जीवादिजगदधिकृत्य प्रेरकतयाऽधिकात्मनःपरमात्मनः **सम्बन्धभूमा** अन्तर्यामित्वेन बहुल-सन्निधानविशेषः, तथा चेन्द्रे तात्कालिकभगवत्सन्निधानविशेषाभिप्रायेण 'प्राणो वाऽहम्' (ऐ.आ.२-२-३) इत्युक्तिरित्यर्थः । तथा चोक्तम् ऐतरेयभाष्ये- 'आविष्टो विष्णुना चेन्द्रः प्राणेन सह कौशिकम्' (ऐ.भाष्यम्) इत्यादि ।

**(त.दी.)**आत्मोपदेशादित्येव पूर्तौ वक्तुरित्युक्तिः शास्त्रवक्तारं प्रतीन्द्रस्य न विप्रलम्भ इति पूवपक्षे युक्तिसूचनार्था । सम्बन्धेत्युक्तिरैक्यनिवृत्त्यर्था । इति (पृ.सं.४७)

**(अन्तर्यामिणि अहमिति प्रयोगो नास्तीति शङ्का तन्निरासश्च)**

नन्विन्द्रेण 'प्राणो वाऽहम्' (ऐ.आ.२-२-३) इति विष्णूपदेशश्चेत् क्रियते तदा 'मयि प्राणः' इत्यादिव्यपदेशः स्यान्न त्वहमिति । अन्तर्यामिण्यहमिति प्रयोगादर्शनादित्याशङ्कां दृष्टान्तेन परिहरति-

**ॐ शास्त्रदृष्टया तूपदेशो वामवत् ॐ** (१-१-३०) इति ।

**(सू.) शास्त्रदृष्ट्या तु** । तुशब्दोऽवधारणे । अन्तर्यामिदृष्टयैवाह-मित्युपदेशः । **वामदेववत्** वामदेवो ऋषिरन्तर्यामिविवक्षया 'अहं

मनुरभवं सूर्यश्च' (ऋ. ४-२६-१) इत्यहंमन्वादिशब्दान् यथा प्रयुयुजे (तथा) इत्यर्थः ।

**(त.दी.)** अन्तर्यामिदृष्ट्येति वाच्ये शास्त्रेत्युक्तिः सर्वशास्त्रृत्वात् तत्तच्छब्द-वाच्यतेति ज्ञापनार्था । 'तत्तन्नाम्नोच्यते विष्णुस्सर्वशास्त्रृत्वहेतुतः' (ब्र.सू. भा.उ.पाद्मवचनम्) इत्यादेः । इति (पृ.सं.४८)

**(पूर्वोक्तप्राणस्य विष्णुत्वाक्षेपेण समाधानम्)**

प्राणो विष्णुरित्युक्तं पुनराक्षिप्य समाधत्ते -

**ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ** (१-१-३१ ) इति ।

**(सू.)** 'तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति' (ऐ.आ. २-२-१) इति **प्राणे श्रुतं शतायुष्ट्वं** 'शतायुर्वै पुरुषः' (अनुपलब्धाकरा श्रुतिः) इति श्रुत्या **जीवलिङ्गं** 'ताः अहिंसन्त' (ऐ.आ. २-१-४) इतीन्द्रियैः सह कलहः 'प्राण उदक्रामत् तत्प्राण उत्क्रान्तेऽपद्यत' (अनुपलब्धाकरा श्रुतिः) इत्याद्युत्क्रमणप्रवेशौ 'प्राणो वंशः' (ऐ.आ. ३.२.१.१) इत्यादिना जीवेन्द्रियधारकत्वमित्यादीनि । 'अथ ह प्राणः अहं श्रेयसि व्यूदिरे' (छन्दोगश्रुतिः) इति छन्दोगश्रुत्या **प्राणलिङ्गानि । तयोः सद्भावान्न प्राणो** विष्णुरपि तु जीवमुख्यप्राणावेवेति **चेत् । न ।** प्राचीनं 'शास्त्रदृष्ट्या तु' इति पदमिहानुवर्तते । 'अन्यगतलिङ्गानामपि [१]तद्गतभगवदपेक्षया युक्तेः' (न्या.वि.,पृ.२३) इति न्यायविवरणवाक्यात् । शतायुष्ट्वादिलिङ्गानां शास्त्रदृष्ट्या जीवमुख्यप्राणान्तर्यामिणि विषयतयैवोपपत्तेः ।

---

१. 'तद्गभगवदपेक्षया' इति ह.पाठः ।

'शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञस्यै जनार्दनः ।
तत्स्थ उत्थापयामास ................ ॥'[१]

इति तृतीयस्कन्धसप्तविंशाध्यायतात्पर्यवाक्यबलेन 'उदासीनौ तु तावास्तां केशवश्चाब्जसम्भवः' (अनुपलब्धाकरा श्रुतिः) इति देहोत्थापनादिप्राणलिङ्गे विष्णोरौदासीन्योक्तिस्तु अन्तर्यामिभिन्नबाह्यरूपेणेति ज्ञेयम् । किमर्थमन्तर्यामिकथनमित्यत उक्तम्- **उपासात्रैविध्यात्** अन्तर्बहिःसर्वगतत्वेनेत्युपासनायास्त्रैविध्यात् । न चेदं त्रैविध्यमिहानुक्तम् । **आश्रितत्वादिह= इह** अस्मिन् प्रकरणे 'स एतमेव सीमानम्'[२] 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' (ऐ.आ.२.४.३) 'महिदास ऐतरेयः' (ऐ.आ. २.१.८) इत्यादिवाक्यत्रये **उपासात्रैविध्यस्याऽश्रितत्वाद् उक्तत्वात्** । नन्वेकविधोपासनयैव ब्रह्मापरोक्षसम्भवात् किमुपासनात्रैविध्येनेत्यत उक्तम्- **तद्योगात्** । तेषां पुसां तस्मिन् उपासात्रैविध्ये योगात् योग्यत्वादित्यर्थः ।

केषाञ्चित् सर्वगत्वेन केषाञ्चिद्धृदये हरिः ।
केषाञ्चिद् बहिरेवासावुपास्यः पुरुषोत्तमः ॥
(ब्र.सू.भा.उ. ब्राह्मवचनम्, पृ.१५८)

इत्यादौ प्रमितमुपासनात्रयमिति ज्ञेयम् ।

**(व्याप्तस्य भगवतः सूक्ष्महृदयस्थितिः कथमित्याशङ्का, तत्समाधानं च)**

ननु 'ततमम्' (ऐ.आ. २.४.३) इति व्याप्तत्वेनोक्तस्य शरीरहृदय-

---

१. 'यज्ञान्तस्थः स्वयं पादौ विशन्नोत्थापयद्धरिः । शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञस्यै जनार्दनः ॥ तत्स्थ उत्थापयामास ब्रह्मदेहं विशन् प्रभुः ॥' इति (भाग. ३.२७.६८, भा.ता.उ.वचनम्, पृ. २५३)

२. 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' (ऐ.आ.२-४-३, पृ. १५४)

देशावस्थितिर्ब्रह्माण्डस्य सर्षपान्तःस्थितिरिवावास्तवीत्युपासनात्रैविध्यमयुक्तमिति चेत् । न । व्योमवदित्युत्तराधिकरणेऽनुपदमेव समाधास्यमानत्वात् ॥ १२ ॥

**॥ इति पादान्त्यप्राणाधिकरणम् ॥ १२ ॥**

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन बाहुपल्लिवेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे प्रथमाध्यायस्य प्रथमः पादः ॥ ***

---

*. एतदनन्तरं लिपिकृतः कानिचित् वाक्यानि मातृकायां दृश्यन्ते- 'विरोधिकृत्संवत्सरचैत्रशुक्लतृतीयायां भार्गववासरे सायाह्ने बिदरहळ्ळी रघुपतिना कृतमिदं लेखनम्' इति ।

# अथ द्वितीयः पादः

## ॥ १ ॥ अथ सर्वगतत्वाधिकरणम् ॥

(अन्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयः)

**यैर्लिङ्गैः साधितः पूर्वं नाम्नां विष्णौ समन्वयः ।**
**तेषामिहोच्यते लिङ्गजातीयानां समन्वयः ॥**

इति **चन्द्रिकातः** पादार्थो बोध्यः ।

**(सर्वत्रावस्थितिरूपभावाख्यलिङ्गसमन्वयः)**

तत्राऽद्यनये सर्वत्रावस्थितिरूपभावाख्यलिङ्गस्य समन्वयः कथ्यते ।

**(पूर्वपक्षसिद्धान्तौ)**

'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' (ऐ.आ. २.४.४) इत्याद्यैतरेयके श्रुतं सर्वगतत्वमादित्यादेरेवेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ** ( १-२-१ ) इति ॥

**(सू.)** 'एतमस्यामेतं दिवि' (ऐ.आ. २.४.४) इत्यादिना **सर्वत्र** पृथिव्यादौ स्थितत्वेनोच्यमानो विष्णुरेव । 'तदेव ब्रह्म परमं कवीनाम्' (म.ना.उ. १-६) इत्यादिवाक्ये विष्णावेव **प्रसिद्धस्य** ब्रह्मशब्दस्य 'एतमेव ब्रह्मेत्याचक्षते' (ऐ.आ. २.४.४) इति सर्वगते **उपदेशादित्यर्थः** ।

**(त.दी.)** ब्रह्मशब्दादिति वाच्ये प्रसिद्धेत्युक्तिर्जीवादिग्रहणे प्रसिद्धिबाधसूचनाय। इति (पृ.सं.५३)

**(युक्त्यन्तरेण सर्वगतत्वसमर्थनम्)**

युक्त्यन्तरेण सर्वगतत्वं प्रतिपादयति -

ॐ विवक्षितगुणोपपत्तेश्च ॐ ( १-२-२ ) इति ।

(सू.) 'स योतोऽश्रुतोऽगतोऽमतः' (ऐ.आ. ३-२-४) इत्याद्युत्तरवाक्ये श्रुतानां **विवक्षितानां** विष्णौ वक्तुं योग्यानां कात्स्न्र्येन अश्रुतत्वादीनां **गुणानां** विष्णावेव **उपपत्तेः** विष्णुरेवायं सर्वगतः, न केवलं ब्रह्मशब्दोपदेशादिति **चार्थः** ।

## (सूत्रस्थविवक्षितपदार्थकथनम्)

अत्र विवक्षितत्वं टीकोक्तरीत्या वक्तुं योग्यत्वम् । वक्तुं योग्ये हि विवक्षा भवति । यद्वा, विवक्षितत्वं वक्ष्यमाणत्वम् । वक्ष्यमाणे हि विवक्षा भवति । ततश्चाश्रुतत्वादीनामुपसंहारस्थत्वाद् बलवत्तेत्यर्थः। अथवाऽपौरुषेये वेदे वक्तुमिच्छाया अभावाद् विवक्षितत्वं तात्पर्यविषयत्वम् । तथा चाश्रुतत्वादीनामप्राप्तत्वादिना श्रुतेस्तात्पर्यान्न मिथ्यात्वमित्यर्थ इति **चन्द्रिकातो** विवक्षितपदार्थो बोध्यः ।

## (अनुव्याख्यानसुधोक्तरीत्याऽस्य सूत्रस्य व्याख्यानान्तरम्)

'तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः' (अनु.व्या.१.२५८) इत्यनुव्याख्याने तु सर्वसंयोगित्वमात्रं वाऽत्र[१] प्रतिपाद्यं तस्याऽनन्दादिवद् गुणत्वाभावात् । किन्तु तत्तच्छक्तिप्रबोधनार्थं तत्र तत्रावस्थानम् । तच्चायुक्तम् । ईश्वरस्य दूरस्थत्वेऽपि तत्र शक्तत्वादिति प्राप्ते, तत्र तत्रावस्थानं न दूरस्थस्याशक्त्या । किन्तु लीलयैवेति सिद्धान्त इत्युक्तं तद् 'विवक्षितगुणोपपत्तेः' (१.२.२) इति सूत्रस्य **विवक्षितः दूरे स्थित(शक्त)स्यापि** तत्तच्छक्तिबोधनार्थं तत्रतत्रावस्थानरूपो यो **गुणः** तस्य **लीलयोपपत्ते**रिति वर्णकान्तरमभिप्रेत्येति सुधायामभिहितमर्थान्तरं ज्ञेयम् ।

---

१. 'नात्र प्रतिपाद्यम्' इति पाठेन भाव्यमिति भाति ।

(त.दी.) विवक्षितेत्युक्तिर्गुणानामुपसंहारस्थत्वादिना प्राबल्यसूचनाय। इति (पृ.सं.५४)

**(सर्वगतः जीवो भवत्वित्याशङ्का तत्परिहारश्च)**

ननु 'तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति' (ऐ.आ. ३-२-१) इत्याद्यादित्यशब्दाद् आदित्यः 'चक्षुर्मयः श्रोत्रमयः' (ऐ.आ. ३-२-१) इत्यादौ चक्षुर्मयत्वादिजीवलिङ्गाज्जीवो वाऽयं सर्वगतः किं न स्यादित्याशङ्कां परिहरति-

**ॐ अनुपपत्तेस्तु न शारीरः ॐ** (१-२-३) इति ॥

**(सू.)** ब्रह्मादिसर्वशरीरस्थत्वादिरूपस्य सर्वगतत्वस्याऽदित्ये **अनुपपत्तेः शारीर** आदित्यो **न** सर्वगतः। तथा सर्वगतत्वरूपसाध्यस्याणौ जीवे **अनुपपत्तेः** असम्भवात् **शारीरो** जीवश्च **न** सर्वगत इत्यर्थः। 'सम्भावितः प्रतिज्ञाया अर्थः साध्येत हेतुना। न तस्य हेतुभिस्त्राणम्'[1] इति न्यायेन सम्भावितस्यैव साधनार्हत्वाज्जीवादौ स्वरूपेणैवायोग्यस्य सर्वगतत्व-रूपसाध्यस्याऽदित्यादिशब्दबलेन साधनायोगादिति भावः।

**('नेतरः' इत्यनुक्त्वा 'न शारीरः' इति वक्तुः सूत्रकृतः आशयवर्णनम्)**

नेतर इति वक्तव्ये शारीरपदं 'स यश्चायमशरीरः' (ऐ.आ. ३.२.४) इति श्रुतिश्रुतस्याशारीरत्वस्य जीवेऽनुपपत्तिं सूचयितुमिति **चन्द्रिकाया-मुक्तम्**।

**(युक्त्यन्तरेण जीवस्य सर्वगतत्वनिरासः)**

उपपत्त्यन्तरेण जीवस्य सर्वगतत्वमपाकरोति -

१. 'न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो मृतः॥' इति (वि.त.नि.टी.उ.वचनम्, पृ.९४)

**ॐ कर्मकर्तृव्यपदेशाच्च ॐ** ( १-२-४ ) इति ।

**(सू.)** 'आत्मानं वेद' (त.प्र.उ.श्रु., पृ. ५१५) 'आत्मानं परस्मै शंसति' (ऐ.आ. ३-२-३) 'यस्तित्याज सचिविदं सखायम्' (ऐ.आ. ३-२-४) इति च वाक्यशेषेषु सर्वगतस्याऽत्मनो वेदन-शंसन-त्यागेषु **कर्मत्वेन** जीवस्य तु **कर्तृत्वेन निर्देशाच्च** नायं शारीर इत्यर्थः । कर्मकर्त्रोरुत्सर्गतो भिन्नत्वादित्याशयः ।

**(बाधकसत्वाद् ब्रह्मशब्देनामुख्य जीव एव सर्वगतत्वेन ग्राह्यः न विष्णुरिति शङ्का तन्निरासश्च)**

यदुक्तं ब्रह्मशब्दाद् विष्णुरेव सर्वगत इति तदयुक्तम् । चक्षुर्मयत्वादिबाधकबलेन जीवाख्यामुख्यार्थग्रहणोपपत्तेरित्याशङ्कामपाकरोति-

**ॐ शब्दविशेषात् ॐ** (१-२-५) इति ।

**(सू.)** ब्रह्मशब्दस्य 'एतमेव ब्रह्मेत्याचक्षते' (ऐ .आ. ३-२-३) इत्यवधारणाख्य**विशेषवत्त्वादित्यर्थः** । ब्रह्मशब्दस्य जीवरूपामुख्यार्थत्वे च जीवादन्यस्य मुख्यब्रह्मणः विष्णोरमुख्यब्रह्मणश्च जात्यादेः सत्वेनान्यसम्बन्धनिवारणासम्भवेनावधारणायोगात् । ईश्वररूपमुख्यार्थत्वे [1]चान्यस्यामुख्यस्य ब्रह्मणो सत्वेनान्यसम्बन्धनिराकरणसम्भवात् । 'एष उ एव'[2] इत्यादिश्रुतिषु सावधारणब्रह्मशब्दस्य विष्णावेव प्रयोगदर्शनाच्चेति भावः । प्रथमसूत्रोक्तब्रह्मशब्दस्य जीवेऽप्युपपत्तिशङ्कैव निरस्यते । नतु स्वतन्त्रहेतूक्तिरिति नात्र चशब्दः ।

---

१. 'अन्यस्य मुख्यब्रह्मणोऽसत्वेन' इति ख.पाठः ।

२. एष उ एव ब्रह्मैष उ एवाऽत्मैष उ एव सवितैष उ एवेन्द्र एष उ एव हरिर्हरति परः परानन्दः' इति (ब्र.सू.भा.उ.इन्द्रद्युम्नशाखाश्रुतिः)

ननु तर्हि अस्य द्वितीयत्वं स्यान्न पञ्चमत्वमिति चेत् । सत्यम् । तथाऽप्युत्सर्गतो भेदसाधकस्य कर्मकर्तृभावस्योपोद्बलकात् 'एतमेव' (ऐ. आ. ३-२-३) इत्यवधारणान्नापवादशङ्केत्येतदर्थस्याप्युक्तेः पञ्चमतेति चन्द्रिकायां समाहितत्वात् ।

### (विष्णोरेव सर्वगतत्वे स्मृतिसमाख्योक्तिः)

स्मृतिसमाख्ययाऽपि विष्णोरेव सर्वगतत्वं साधयति -

**ॐ स्मृतेश्च ॐ** ( १-२-६ ) ।

(सू.) 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' (भ.गी.१०-२०) इत्यादि**स्मृतेश्च** विष्णुरेव सर्वगत इत्यर्थः ।

(त.दी.) स्मृतेः स्ववचनत्वेऽपि परोक्तार्थानुवादरूपत्वात् तदुक्तिः । एवमग्रेऽपि । इति (पृ.सं.५८)

### (पूर्वोक्ताक्षेपेण समाधानम्)

उक्तमाक्षिप्य समाधत्ते -

**ॐ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ** ( १-२-७ )

(सू.) 'सर्वेषु भूतेषु' (ऐ.आ.२-४-४) **इत्यल्पस्थानस्थितिकथनात् तस्मिन्** सर्वगते **तस्य** चक्षुर्मयत्वादिजीवलिङ्गस्य **व्यपदेशाच्च** नायं सर्वगतो विष्णुरिति चेद् । उच्यते । तन्न[1] । किमपरिच्छिन्नस्याल्पौकस्त्वकथनं निष्प्रयोजनमयुक्तमिति वा । नोभयमपि । **एवम्** अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च **निचाय्यत्वादु**पास्यत्वान्न तदुक्तिर्व्यर्था ।

---

१. लिपिकृत्प्रमादोऽत्र सम्भाव्यते । 'नायं सर्वगतो विष्णुरिति चेत् । न' इति पाठोऽत्र सम्भाव्यते ।

'एकत्राप्यनवस्थाने सर्वत्रावस्थितिः कथम् ।
एकत्रैव तु संस्थानं नैवात्र प्रतिपाद्यते ॥' (अनुपलब्धाकरा स्मृतिः)

इति न्यायेन **व्योमवत्** सर्वगतस्याप्यर्भकौकस्त्वं युक्तमित्यर्थः । उपलक्षणमेव तत् । पूर्णदर्शनशक्तित्वादिरूपस्य वा चक्षुरादिस्वामित्वादिरूपस्य वा चक्षुर्मयत्वादेः 'पूर्णदर्शनशक्तित्वाच्चक्षुर्मय इति स्मृतः'[१] इत्याद्यैतरेयभाष्यात् 'सर्वेन्द्रियमयो विष्णुः'[२] इत्यादिस्मृत्या च विष्णौ सम्भवात् । चक्षुरादिविकारत्वस्य जीवेऽप्यसम्भवादित्यपि द्रष्टव्यम् ।

**(सूत्रे निचाय्यत्ववचनं व्यर्थमिति शङ्का तत्परिहारश्च)**

ननु 'नोपासात्रैविध्यात्' (ब्र.सू. १.१.३१) इत्यत्रैवाल्पौकस्त्वोक्तेरपि प्रयोजनमुक्तमिति निचाय्यत्ववचनं व्यर्थमिति चेत् । सत्यम् । तथाऽप्युपासनार्थमन्तस्थत्वाद्युक्तौ तत्र श्रुतिरप्रमाणं स्यात् । उपासनायाः मानसक्रियात्वेनार्थाभावेऽपि सम्भवादित्याशङ्कामुपासनायाः ज्ञानात्मकत्वादर्थाभावोऽसिद्ध इति परिहर्तुं 'चायृ दर्शने' (भ्वादिगणपठितधातुः) इत्यस्माद् धातोः निष्पन्नस्य निचाय्यशब्दस्य प्रयोग इति **चन्द्रिकायाम्** अभिहितत्वात् ।

**(ब्रह्मणः सर्वगतत्वे समानभोगप्राप्तिरित्याक्षेपः तत्परिहारश्च)**

उक्तमाक्षिप्य समाधत्ते -

**ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ** (१-२ -८) इति ।

---

१. 'पूर्णदर्शनशक्तित्वाच्चक्षुर्मय इति स्मृतः । तादृक् श्रवणशक्तित्वात् तथा श्रोत्रमयः स्मृतः ॥' (त.प्र.भा.दी.उ.ऐ.भा.वचनम्, पृ. ५३१)

२. 'सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः । सर्वनामाभिधेयश्च सर्ववेदोदितश्च सह ।' (ब्र.सू.भा.उ.स्कान्दवचनम्, पृ. १७२)

(सू.) सर्वगतस्यापि ब्रह्मण: व्योमवत् सर्वशरीरस्थत्वे तद्वदचेतनत्वाभावेन **जीवसमानभोगप्राप्तिरिति** न सर्वगतत्वं युक्तम् इति **चेन्न** । एकशरीरस्थत्वेऽपि जीवसमानभोगप्राप्तिर्न ईश्वरस्य। तस्य **स्वाभाविकसामर्थ्यविशेषवत्त्वादित्यर्थः** ।

**॥ इति सर्वगतत्वाधिकरणम् ॥ १ ॥**

**(त.दी.)** अन्तर्नये कतिपयान्तस्थत्वमुक्तम्। अत्र तु सर्वान्तस्थत्वम्। व्याप्ते हरौ तस्योपपन्नता चोच्यत इति भेदः। इति (त.दी.अ.१.पा.२.सू.८. पु.स.६१)

**॥ २ ॥ अथ अत्तृत्वाधिकरणम् ॥**

**(एतदधिकरणप्रतिपाद्यविषयः - सर्वात्तृत्वाख्यलिङ्गसमन्वयः)**

अत्र नये संहारूपक्रियात्मकस्य सर्वात्तृत्वलिङ्गस्य समन्वयः। विद्यमानस्य क्रियान्वयाद् भावानन्तर्यं क्रियाया इति **चन्द्रिकायां** व्यक्तम् ।

**(पूर्वपक्षसिद्धान्तौ)**

'स यद्यदेवाऽसृजत तत्तदत्तुमध्रियत' (बृ.उ. ३-२-५) इति बृहदारण्यके श्रुतं सर्वात्तृत्वं 'तददितेरदितित्वं' (बृ.उ. ३-२-५) इत्यदितिशब्दाद् अदितेर्देवमातुरेवेति पूर्वपक्षे, सिद्धान्तयति -

**ॐ अत्ता चराचरग्रहणात् ॐ** (१-२-९) इति ।

**(सू.) अत्ता** विष्णुरेव। 'सर्वं वा अत्ति' (बृ.उ. ३-२-५) इति **चराचरस्य** अद्यतया **ग्रहणादित्यर्थः** । सर्वात्तृत्वमेवादितिशब्दप्रवृत्ति-निमित्तमिति श्रुत्या स्वयमेवोक्तत्वाददितिश्रुतिर्विष्णावेव मुख्येति भावः। नच बाधकं विना श्रौतः सर्वशब्दः सङ्कोचमर्हतीति द्रष्टव्यम्। अत एव सूत्रे लाघवाय श्रुत्यनुगमाय च सर्वशब्दे प्रयोक्तव्ये सर्वशब्दस्य सङ्कोचनिरासाय चराचरशब्दः प्रयुक्तः ।

(त.दी.) तदित्यनुवृत्तेरत्त्रिति वाच्ये पुंनिर्देशः 'स तया वाचा तेनाऽत्मना' (बृ.१.२) इत्यादौ स इति पुल्लिङ्गतच्छब्देन प्रकृतमृत्युरेव निर्णेयश्रुतावुच्यत इति तदनुरोधेन। (पृ.सं.६१,६२)

**(प्रकरणबलाद् अत्ता विष्णुरेवेति समर्थनम्)**

निरवकाशप्रकरणेन च विष्णोरेवात्तृत्वं साधयति-

**ॐ प्रकरणाच्च ॐ** (१-२-१० ) इति।

(सू.) 'नैवेह किञ्चनाग्र आसीत् मृत्युनेदमावृतमासीत्' (बृ.उ. १-२) इत्याद्यस्मिन् प्रकरणे मृत्युमात्रावशेषात् संवत्सरसृष्ट्यादिश्रवणेन विष्णुप्रकरणाच्चेत्यर्थः ॥ २ ॥

**॥ इति अत्तृत्वाधिकरणम् ॥ २ ॥**

**॥ ३ ॥ अथ गुहाधिकरणम् ॥**

**(एतदधिकरणप्रतिपाद्यविषयः)**

अत्रापि नये कर्मफलभोगरूपक्रियात्मकलिङ्गस्य समन्वयः कथ्यते ।

**(कर्मफलभोक्तृत्वलिङ्गस्य पूर्वोक्तसर्वात्तृत्वलिङ्गानन्तर्ये कारणोक्तिः)**

कर्मफलभोक्तृत्वस्य विष्ण्वन्यमात्रनिष्ठत्वे विष्णौ तदभावप्राप्त्या एकदेशवैकल्ये सर्ववैकल्येन सर्वात्तृत्वलक्षणस्यासम्भव इति भाव-बोधोक्तरीत्योभयोः क्रियारूपत्वेऽपि सर्वात्तृत्वलिङ्गानन्तर्यमस्य लिङ्गस्य सङ्गतत्वादिति बोध्यम् ।

**(पूर्वपक्षसिद्धान्तौ)**

'ऋतं पिबन्तौ सुकृतस्य लोके'[१] इति काठके श्रुतं कर्मफलभोक्तृत्वं

१. 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चग्नयो ये च त्रिनाचिकेताः ॥' इति (कठ.उ.१-३-१, पृ.१८१)

द्विवचनशब्दबलाज्जीवेशयोरेवेति जीवसहितेश्वरे छत्रिन्यायेन भोगोपचार इति पूवपक्षे, सिद्धान्तयति-

**ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ** (१-२-११) इति ॥

(सू.) 'ऋतं पिबन्तौ' (कठ.उ. १-३-१) इति प्रतीतौ कर्मफलभोक्तारौ **आत्मानौ** विष्णुरूपे एव । (हि) यतो **गुहां प्रविष्टौ** 'गुहां प्रविष्टौ परमे परार्धे' (कठ.उ.१-३-१) इति गुहाप्रविष्टत्वेनोक्तौ । ननु सर्वशरीरेष्वेकेन रूपेण प्रवेशात् कथं रूपद्वयाभिप्रायेण द्विवचनमित्यतः **तद्दर्शनात्**- तत् तस्मिन् बुद्धिस्थे रूपद्वयेन सर्वशरीरप्रवेश**दर्शनात्** । 'घर्मा समन्ता'[१] इति श्रुतेरित्यर्थः ।

**(समन्वयसूत्रात् 'तत्तु' इत्यनुवृत्तिसम्भवेऽपि द्विवचनान्तात्मशब्दप्रयोगे चन्द्रिकोक्तकारणकथनम्)**

यद्यपि 'तत्तु समन्वयात्' (ब्र.सू.१.१.४) इत्यतोऽनुषक्तस्य तच्छब्दस्य पूर्वत्राऽनन्दमयः तद्ब्रह्मेत्यादिरूपेणान्वयवदुत्तरत्राप्यन्तरस्तद्ब्रह्मेत्यादिरूपेणान्वयवच्चात्राप्यन्वयः सिद्धस्तथाऽपि सूत्रे श्रौतद्विवचनगतिं वक्तुम् आत्मान्तरात्माख्यरूपद्वयवाचिद्विवचनान्तात्मशब्दप्रयोग इति चन्द्रिकातो विशेषो बोध्यः ।

**(एकस्य ब्रह्मणः द्विवचनसमर्थनम्)**

ब्रह्मणः स्वरूपेणैकत्वेऽपि रूपविशेषेण द्वित्वं युक्तम् । 'इन्द्रो मायाभिः पुरुरूप ईयते' (अनुपलब्धाकरा श्रुतिः) 'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' (भ.गी.११.५) इत्यादिश्रुतिस्मृतिभिरेव

---

१. 'घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम' (ऋ. १०.११४.१, पृ. १८३)

द्वित्वैकत्वयोः समुच्चयावगतेः। इदमेवाभिप्रेत्योक्तमनुव्याख्याने- 'द्वित्वं चैकस्य युज्यते' (अनु.व्या.१.२.६६) इति।

(त.दी.)तत्त्वित्यनुवृत्तावप्यात्मानाविति द्विवचनान्तात्मपदोक्तिरादेयं मातीत्यात्मेति शुभभोक्तृत्वमस्य सूचयितुं, श्रौतद्विवचनस्य गत्युक्त्यै आत्मान्तरात्माख्यरूपद्वयं वक्तुं चेति। इति ( पृ.सं. ६४)

**(निरवकाशश्रुत्या पाता विष्णुरेवेति समर्थनम्)**

निरवकाशश्रुत्याऽपि विष्णोरेव भोक्तृत्वं समर्थयति -

**ॐ विशेषणाच्च ॐ** (१-२-१२ ) इति॥

(सू.) 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' (कठ.उ.१-३-२) इति पिबतोरेकवचनेन **विशेषणाद्** एक एव पाता। स च ब्रह्मशब्देन **विशेषणात्** सेतुत्वाक्षरत्वादिना विशेषणाद् ब्रह्मणश्च परत्वेन **विशेषणाच्च** विष्णुरेवेत्यर्थः।

**(भगवति कर्मफलभोक्तृत्वं कीदृशमिति निरूपणम्)**

अत्र कर्मफलभोक्तृत्वं नाम जीवस्य सुकृतानुसारेण प्राप्तशुभ-विषयगतसारभोक्तृत्वम्। 'ऋतं सत्यं तथा धर्मःसुकृतं चाभिधीयते' (गी.भा.उ.स्मृतिः) इति गीताभाष्योक्तस्मृत्या 'ऋतं पिबन्तौ'[१] इति वाक्यस्थऋतस्य सुकृतवाचकत्वात्। 'सुखरूपस्य भोक्तृत्वात्' (गी.भा.उ.वचनम्) इति गीताभाष्यात् 'सुखरूपस्य सुखकारणस्य' (गी.भा.प्र.दी.उ.वचनम्) इति तट्टीकायां वर्णितम्। 'जीवभोग्यस्य भोक्तेशः' (बृ.भा.उ.व.) इति बृहद्भाष्याच्च प्राकृतसारभोक्तृत्वमेवेति

---

१. 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः॥'(कठ.उ. १-३-१, पृ.१८१)

तत्त्वम् । नच 'अनश्नन्नन्यः' (मु.उ. ३-१-१) इत्यादिवाक्यविरोधः । तत्रैव 'तस्येदाहुः पिप्पलं स्वाद्वग्रे' (अनुपलब्धाकरा श्रुतिः) इतीश्वरस्य स्वादुभोक्तृत्वोक्तेः । तथा प्रविविक्ताहारतर इव भवत्यस्माच्छरीराद् आत्मन इति श्रुत्यन्तरे भगवदाहारस्य जीवाहाराद् विविक्तत्वोक्तेः । तथा 'शुभं पिबत्यसौ'[१] इत्यादिभाष्योक्तस्मृतिरशुभभोक्तृत्वस्यैव 'अनश्नन्' (मु.उ. ३-१-१) निषेधात् । ३ ॥

॥ इति गुहाधिकरणम् ॥ ३ ॥

## ॥ ४ ॥ अथ अन्तराधिकरणम् ॥

### (एतदधिकरणप्रतिपाद्यविषयः)

अस्मिन् नयेऽन्तःस्थितिरूपभावसहितरमणरूपक्रियात्मकलिङ्गस्य समन्वयः ।

### (पूर्वपक्षसिद्धान्तौ)

'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छा.उ. ४-१५) इति छान्दोग्योक्तमक्षिस्थितत्वं 'अग्नीन् परिचचार । अथ हाग्नयः समूदिरे' (अनुपलब्धाकरा श्रुतिः) इत्यादिबहुकृत्त्वोऽग्निश्रुतेरग्निरेवेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ अन्तर उपपत्तेः ॐ** (१-२-१३ ) इति ॥

(सू.) **चक्षुरन्तःस्थित्वा रमणकृद्** विष्णुरेव । 'एतदमृतमभयमेतद् ब्रह्म' (छा. उ. ४-१५) इति उक्तामृतत्वाभयत्वादेर्लिङ्गस्य ब्रह्मशब्दस्य च 'एष आत्मा' (छा.उ. १४.१५) इत्यात्मशब्दस्यास्मिन्नेव **उपपत्ते-**

---

१. 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित् ॥' इति (ब्र.सू.भा.उ.पाद्मवचनम्)

**रित्यर्थः** । 'त्रिपादस्यामृतं दिवि' (ऋ.१०.९०.३) 'अभयं तितीर्षतां पारम्' (क.उ.३.२) इत्यादावमृतत्वादेर्विष्णुलिङ्गत्वावगमादिति ध्येयम् । यद्यत्रान्तस्थितिमात्रमभिधीयते तर्ह्यन्तस्तद्धर्मेतिवद् अन्तरित्येवा-वक्ष्यत् । नत्वन्तर इति । नच 'य एषोऽन्तरक्षिणि' (छा.उ. ४-१५) इति श्रुतौ रमणमनुक्तमिति शङ्क्यम् । 'एष आत्मेति होवाच' (छा.उ. ४.१५) इत्यात्मशब्देनाऽदेयं मातीति व्युत्पत्त्योक्तत्वात् । अन्तर् र् इति स्थिते 'रोरि' (पा.सू. ८.३.१४) इति सूत्रेणोपपदरेफलोपेऽन्तर इति रूपम् । न च तर्हि 'ढ्रलोपे पूर्वस्य'[1] इति दीर्घः प्राप्नोतीति वाच्यम् । सौत्रत्वान्निर्देशस्येति ध्येयम् ।

**(उत्तरवाक्यस्थलिङ्गेन विष्णोरक्षिस्थितत्वसमर्थनम्)**

विष्णोरक्षिस्थितत्वमुत्तरवाक्यस्थलिङ्गेनापि साधयति -

**ॐ स्थानादिव्यपदेशाच्च ॐ** (१-२-१४) इति ।

**(सू.)** 'तद्यदस्मिन् सर्पिर्वोदकं वा सिञ्चति' (छा. ४.१५) इति स्वसम्बन्धेनाक्ष्णोऽसङ्गत्वापादकत्वरूप**स्थान**शक्तेः 'एतं संयद्वाम इत्याचक्षते । एष उ एव वामनिः' (छा. ४.१५) इति चक्षुरन्तस्थस्य संयद्वामत्वं स्त्रीपुंसनेतृत्वादिस्वरूपशक्तेश्च **व्यपदेशात्** अक्ष्यन्तस्थो विष्णुरेव नामृतत्वादिलिङ्गमात्रादिति चार्थः ।

**(प्रकरणबलाद् विष्णोरन्तस्थत्वसमर्थनम्)**

प्रकरणेन विष्णोरन्तस्थत्वं साधयति -

**ॐ सुखविशिष्टाभिधानादेव च ॐ** (१-२-१५) इति ॥

**(सू.)** विशिष्टं च तत्सुखं च सुखविशिष्टं 'कडाराः कर्मधारये' (पा.सू.

---

१. 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (पा.सू. ६.३.११०)

२.२.३८) इति विशेषणस्य परनिपातः । एतत्प्रकरणे ब्रह्मेति **पूर्णसुखाभिधानादेवास्य** प्रकरणस्य वैष्णवत्वं सिध्यति । ब्रह्मेति पूर्णज्ञानाभिधानादपीत्येवार्थः । तस्मात् प्रकरणाच्च विष्णुरेव चक्षुरन्तस्थ इत्यर्थः ।

**(त.दी.)** एवेत्यनेन तिष्ठतु तावत् खं ब्रह्मेति पूर्णज्ञानाभिधानमित्याह। विशिष्टेति जीवे व्यभिचार-निरासाय। इति (पृ.सं. ६९)

**(प्रकरणमिदं सावित्रमाग्नेयं वा भवतु इत्याशङ्का तत्परिहारश्च)**

ननु यथा 'ह्वयाम्यग्निं प्रथमं स्वस्तये' (छा.उ.) इत्यत्राग्नेरुपक्रमेऽपि 'सवितारमूतये' (अनुपलब्धाकरा श्रुतिः)। 'हिरण्मयेन सविता रथेन' (छा.उ.) इत्यादिसवितृलिङ्गश्रुत्यादिना तत्प्रकरणं सावित्रं तथा 'कं ब्रह्म' (छा.४.१०) इत्युपक्रमेऽपि 'उपकोसलैषा सोम्य तेऽस्मद्विद्या' (छा.उ.) इत्यग्निभिरुक्तत्वेनाग्निप्रकरणमेवेदं किं न स्यादित्याशङ्कां परिहरति -

**ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ** (१-२-१६ ) ।

**(सू.)** 'कं ब्रह्म' (छा.४.१०) इति कशब्देन ब्रह्मण इव प्राणस्यापि 'प्राणो ब्रह्म' (छा.४.१०) इति प्रकृतत्वात् 'को वायुरिति शब्दितः' इत्यभिधानाच्च कगतीति तन्त्रेण प्राणब्रह्मणी ग्राह्ये । **श्रुतैतद्विद्यानां** 'स एनान् ब्रह्म गमयति' (छा.४.१५) **केन** वायुना परब्रह्म**गत्यभि-धानाच्चैतत्**प्रकरणस्य वैष्णवत्वं न केवलं विशिष्टसुखाभिधानादिति **चार्थः** । **श्रुतोपनिषदमु**पकोसलं प्रत्येतद्विद्याफलत्वेन **कगत्यभि-धानादिति** वा । अग्निप्रकरणत्वे चाग्निप्राप्तिरेवोच्येत न ब्रह्मप्राप्तिः । 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' (भ.गी. ७.५३) इत्यादेः। अस्मद्विद्येत्यस्यान्तर्यामिविषयत्वोपपत्तेरिति भावः । नचाऽत्मविद्येति

पृथुगुक्तिविरोध इति शङ्क्यम् । अस्मद्विद्यात्मविद्ययोश्च ब्रह्म-विद्यात्वेऽप्याद्याया अग्न्यन्तर्यामित्वप्रकारकत्वाद् द्वितीयायाश्च सर्व-गतत्वप्रकारकत्वात् । यथोक्तं छान्दोग्यभाष्ये-

'अस्मच्छब्दोदितोऽन्तस्थ आत्मा व्याप्तो जनार्दनः ।
अग्नयो द्विविधं विष्णुमेवोचन्नुपकोसले ॥'(छा.भा.उ.वचनम्) इति ।

**(अग्नेरन्तस्थत्वे बाधकोक्तिः)**

अग्नेरन्तस्थत्वे बाधकं चाऽह -

**ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ** (१-२ १७ ) इति ।

(सू.) तत्तत्प्रेरकत्वेन तत्तच्चक्षुषि स्थितिर्हि चक्षुरन्तस्थमिहाभिमतम् । नह्यग्नेर्जीवस्यान्यप्रेरकत्वं युक्तम् । जीवस्य जीवान्तरनियामकत्वे तस्यापि जीवत्वाज्जीवान्तरं नियामकमित्य**नवस्थितेः** । अग्नेरपि प्रेर्येण जीवत्व-साम्येन **प्रेरणासम्भवाच्चेतरोऽग्निर्नाक्ष्यन्तस्थ** इत्यर्थः । न चाग्नेः स्वातन्त्र्याद् अस्वातन्त्र्ये वा तत्प्रेरकस्येश्वरस्य स्वातन्त्र्यान्नानवस्थेति वाच्यम् । जीवत्वसाम्येऽप्यग्नेरेव स्वातन्त्र्यमिति नियामकप्रमाणा-भावात् । ईश्वरानभ्युपगमाच्चेति द्रष्टव्यम् ।

**॥ इत्यन्तराधिकरणम् ॥ ४ ॥**

## ॥ ५ ॥ अथ अन्तर्याम्यधिकरणम् ॥

**(एतदधिकरणप्रतिपाद्यविषयः)**

अत्राप्यन्तस्थितिरूपभावसहितनियमनरूपक्रियात्मकलिङ्गस्य समन्वयः ।

**(एतदधिकरणस्यान्तराधिकरणानन्तर्ये कारणोक्तिः)**

नान्तस्थस्य रमणमुपपन्नम् । बहुव्यापारवतस्तद्धेतुकविक्षेपेण

दुःखप्रसङ्गादित्यन्तरत्वे आक्षिप्ते यद् यदनधीनसत्ताप्रतीतिकं तन्नियमनं तस्य दुःखादिदम् । ईश्वरस्तु सत्तादिप्रद इति सत्तादिप्रदत्व-रूपान्तर्यामित्वप्रतिपादनाद् अन्तराधिकरणानन्तर्यमस्येति 'रमणं नातियत्नस्य' (अनु.व्या. १.२७१) इत्यनुव्याख्यानदिशा **चन्द्रिकायां** स्पष्टम् । यद्वा, पृथिव्यादेर्जडत्वाशङ्कापनोदाय 'अधिदैवादिषु' इति हेतुगर्भम् । अधिदैवादिप्रतिपादकेषु 'यः पृथिव्याम्' (बृ.उ. ५-७-३) इत्यादिवाक्येषूच्यमानोऽन्तर्यामी विष्णुरेवेति ।

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' (बृ.उ. ५-७-३) इति काण्व-माध्यन्दिनश्रुत्योः

## (पूर्वपक्षसिद्धान्तौ)

'एष त आत्मा अन्तर्याम्यमृतः' (बृ.उ. ५-३-७) इति श्रुतोऽन्तर्यामी प्रकृतिः पृथिव्यादिजीवो वेति पूर्वपक्षे, सिद्धान्तयति -

**ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ** (१-२-१८) इति ।

**(सू.) अन्तर्यामी** विष्णुरेव । **अधिदैवादिषु** देवानधिकृत्य विद्यमान-प्रकरणेषु 'यं पृथिवी न वेद । यः पृथिवीमन्तरो यमयति' (बृ.उ. ५-३-७) इत्यादिना **तस्मिन्** अन्तर्यामिणि **तस्य** विष्णोः पृथिव्यादि-देवताविदितत्वान्तरत्वादिधर्मव्यपदेशादित्यर्थः । यद्वा, पृथिव्यादेर्जड-त्वाशङ्कापनोदाय '**अधिदैवादिषु**' इति हेतुगर्भम् । अधिदैवादिप्रतिपादकेषु 'यः पृथिव्यां' (बृ.उ. ५-३-७) इत्यादिवाक्येषूच्यमानो**ऽन्तर्यामी** विष्णुरेवेति ।

'बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः ।
अतिप्रियत्वाच्च हरेरेवान्तरत्वमुदाहृतम् ॥' (बृ.भा.उ.वचनम्)

इति बृहद्भाष्योक्तमन्तरत्वं नित्यतृप्तात् 'प्रेयः पुत्रात्' (अनुपलब्धाकरा श्रुतिः) इत्यादिश्रुत्या परमप्रेयोरूपाच्च ब्रह्मणोऽन्यत्र न युक्तम् । भाष्ये 'पृथिव्या अन्तरः' (बृ.उ. ५.७.३) इति प्रतीकमुखेन 'यः पृथिवीमन्तरः' (बृ.उ. ५.७.३) इति वाक्यमेवाभिप्रेतम् । 'पृथिव्या अन्तरः' (बृ.उ. ५.७.३) इत्युक्तस्य 'अन्तरो विविक्तः' (त.प्र.) इति टीकायां व्याख्यास्यमानत्वात् । इदमेवाभिप्रेत्योक्तं चन्द्रिकायाम्- 'यं पृथिवी न वेद पृथिव्या अन्तरः' (बृ.उ. ५-७-३) इत्यादिनेत्याद्यसूत्रीयभाष्ये तु प्रतीकमुखेन 'पृथिवीमन्तरः' (बृ.उ. ५-७-३) इति वाक्यमुपात्तमिति । तदन्तरत्वाख्यधर्मव्यपदेशादिति टीकापाठानुसारेण 'अन्तस्थो देवतानां च न विदुर्यं हि देवताः' (काण्व.भा.उ.वचनम्) इति काण्वभाष्योक्तं 'पृथिव्या अन्तरः' (बृ.उ. ५-७-३) इति वाक्यमेवान्तस्थत्वाख्यमन्तरत्वं वेति **राघवेन्द्रीये** ।

(त.दी.) तद्धर्मव्यपदेशादित्येव पूर्तावधिदैवेत्युक्तिः पृथिव्यादेश्चेतनत्वसूचनार्था । तेन जडावेद्यत्वं प्रकृत्यादावपि युक्तमिति न शङ्क्यम् । (पृ. ७२)

**(प्रकृत्यादिरन्तर्यामीति पूर्वपक्ष्युक्तस्य निरासः)**

प्रकृतेरन्तर्यामित्वं यदभिप्रेतं पूर्वपक्षिणा तदपाकरोति -

**ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ (१-२-१९ )**

(सू.) 'स्मार्तम्' इत्यनन्तरं 'शारीरश्च' इत्युत्तरसूत्रादाकृष्यते । चोऽवधारणे । **स्मार्तम्** कापिलस्मृत्युक्तं प्रधानं शारीरो जीवश्च **नान्तर्यामि** । किन्तु विष्णुरेव । **तस्य** स्मार्तस्य शारीरस्य च धर्माणां त्रिगुणोपादानत्वसंसारित्वादीना**मनुक्तेरिति** । नञः प्रसज्यप्रतिषेधार्थमभिलापपदेनान्वयः ।

(तत्त्वप्रदीपरीत्या सूत्रखण्डस्यार्थान्तरोक्तिः)

यद्वा, तत्त्वप्रदीपिकारीत्या ततः स्मार्तादिरन्यदतत् ब्रह्म। 'एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ.५-७-३) इत्यात्मत्वामृतत्वादितद्धर्माभिलापादित्यर्थः। आद्यसूत्रोपात्तलिङ्गाल्लिङ्गान्तराणामेवात्र गृहीतेर्न पौनरुक्त्यमिति हृदयम्। यद्वा, चशब्दः सम्भावितत्वाख्यविशेषवाचकतुशब्दार्थः। तु सम्भावितं **स्मार्तं नान्तर्यामीति**। तेन विष्णुरेवान्तर्यामीत्यस्य पूर्वसूत्रार्थत्वादत्र कथनमयुक्तम्। अवधारणेनैवेतरव्यावृत्तिलाभान्न स्मार्तमिति च व्यर्थमिति निरस्तम्।

(त.दी.)तत्त्वप्रदीपे तु कापिलस्मृतिमात्रकल्पितं, न तु श्रुत्युक्तमिति स्मार्तमित्युक्तम्। इति (पृ.सं.७४)

(बाधकरूपविशेषयुक्त्या जीवस्यान्तर्यामितानिरासः)

जीवस्यान्तर्यामित्वं विशेषयुक्त्यन्तरेण पराकरोति -

**ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ** (१-२-२०) इति॥

(सू.) चशब्दान्नञोऽनुकर्षः। **हि** यस्मात् 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः'[१] इति माध्यन्दिनाः 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरः' (बृ.उ.५-७-२२) इति काण्वाश्चेति उभये शाखिनः **एनं जीवम्** अन्तर्यामिणः सकाशाद् **भेदेनाधीयतेऽतः शारीरो** जीवः नान्तर्यामीत्यर्थः। अत्र यद्यपि 'आत्मा विज्ञानमिति च सर्वजीवाभिमानवान्। ब्रह्मैवोक्तः' (बृ.भा.उ. वचनम्) इति बृहद्भाष्ये आत्मादिशब्दश्चतुर्मुखपर इत्यभिहितत्वेन जीवस्यान्तर्यामिणो भेदे वाक्यद्वयं नोदाहर्तव्यम्। तथाऽपि सर्वजीवाभि-

१. 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः यमात्मा न वेद यस्याऽत्मा शरीरम् य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः'इति (बृ.उ.५-७-२)

मानिचतुर्मुखादपि तन्नियामकत्वादिना भिन्नस्यान्तर्यामिणः किमु वक्तव्यं तदभिमन्यमानपृथिव्यादिजीवेभ्यो भिन्नत्वमिति कैमुत्यमभिप्रेत्येति **चन्द्रिकायां** व्यक्तम्। 'यस्तेजसि तिष्ठन्' (बृ.उ. ५. ७.१४) इत्यादिभेदाभिधानात् चित्प्रकृतिरपि नान्तर्यामीति चशब्दः समुच्चयार्थः इति तत्त्वप्रदीपे।

॥ इत्यन्तर्याम्यधिकरणम्॥ ५॥

## ॥ ६ ॥ अथ अदृश्यत्वाधिकरणम् ॥

### (एतदधिकरणप्रतिपाद्यविषयः)

एवं भावरूपलिङ्गसमन्वयेऽवसितेऽत्र तन्निरूप्याभावरूपलिङ्गस्य समन्वयः कथ्यते।

### (पूर्वपक्षसिद्धान्तौ)

'अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रम्'[१] इत्याथर्वणे श्रुतं चक्षुरादिनाऽदृश्यत्वाख्यमद्रेश्यत्वं जडप्रकृत्यादेरेव। 'अक्षरात् सम्भवतीह विश्वम्'[२] इति विश्वोपादानत्वाद्युक्तेरिति पूर्वपक्षे, सिद्धान्तयति-

**ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ (१-२-२१) इति।**

**(सू.) अदृश्यत्वादिगुणको** विष्णुरेव। 'यया तदक्षरमधिगम्यते' (मु.उ.

---

१. 'अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः॥' (मु.उ.१-१-६)

२.'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्'॥ (मु.उ.१.१.७, पृ.२१३)

१-१-६) इति परविद्याविषयत्वरूप**धर्मोक्तेरित्यर्थः**। परविद्याविषयत्वं च विष्णोरेवेति भाष्योक्तस्मृत्यादिभिर्ज्ञेयम् ।

(त.दी.) 'परतः परः'(मु.२.१.२) इति श्रुत्यनुसारात् पुंनिर्देशः। (पृ.७८)

**(अदृश्यत्वादिगुणकः प्रकृत्यादिर्भवत्वित्याक्षेपः तन्निरासश्च)**

ननु 'यथा पृथिव्यामोषधयः सम्भवन्ति' (मु.उ. १-१-७) इति पृथिव्यादिदृष्टान्तपूर्वकं विश्वोपादानत्वोक्तेरचित्प्रकृतेः 'ब्रह्मा देवानाम्' (मु.उ. १.१.१) इति ब्रह्मशब्दाच्चतुर्मुखस्य वा 'कर्तारमीशम्' (मु.उ. ३.१.३) इतीशशब्दाद् रुद्रस्य वाऽदृश्यत्वादिगुणकत्वं किं न स्यादित्याशङ्कां विशेषयुक्त्याऽपाकरोति-

**ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ** (१-२-२२ ) इति ॥

(सू.) 'यः सर्वज्ञः सर्ववित्'[1] इति सर्वज्ञत्वेन **विशेषणान्नाचित्प्रकृतिः**। 'तस्मादेतद्ब्रह्म'[2] इत्यदृश्यत्वादिगुणकाच्चतुर्मुखस्य जातत्वोक्त्या **भेदव्यपदेशान्न** चतुर्मुखः । 'अन्यमीशं'[3] इति प्रसिद्धेशाद् रुद्राद् **भेदव्यपदेशाद्** रुद्रोऽपि नादृश्यत्वादिगुणक इत्यर्थः ।

**('विशेषणभेदव्यपदेशाभ्याम्' इति सूत्रखण्डस्य व्याख्यानान्तरम्)**

ननु न विष्णोरदृश्यत्वादिगुणत्वम् 'अक्षरात् परतः परः' (मु. २.१.२) इति परतः पराभिधानेन 'यया तदक्षरम्' (मु.उ. १.१.४) इत्यक्षरशब्दस्य विष्णावनकाशादित्यतोऽपि 'विशेषणभेदव्यपदेशाभ्याम्' इति सूत्रखण्डः। 'अक्षरात् परतः परः' (मु.उ. २.१.२) इत्यनेनादृश्य-त्वादिगुणकाक्षरस्याक्षरात् परतः परत्वरूपविशेषणव्यपदेशात् तदपि

---

१. 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः' (मु.उ.१-१-९, पृ. २१७)

२. 'तस्मादेतद्ब्रह्म रूपमन्नं च जायते।' (मु.उ. १.१.९, पृ.२१७)

३. जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥ (मु.उ. ३-१-२)

विष्णावेवावकाशवत्। न चैतद् व्याहतम्। 'अक्षरत्रयमीरितम्'[१] इति प्रमाणेऽक्षरव्यक्तीनां भेदव्यपदेशादित्यर्थः। नात्र 'यया तदक्षरम्' (मु.उ. १.१.४) इति प्रकृताक्षरमधिकृत्य कस्यचित्परत्वमुच्यते। अपि तु प्रकृतस्याक्षरस्य विष्णोरक्षराज्जडप्रकृतेः परतः श्रीतत्त्वात् परत्वं विशेषणमुच्यत इति बोध्यम्। पृथिव्यादिदृष्टान्तेन कारणवचनस्य कारणत्वमात्रे तात्पर्यम्। ब्रह्मेशशब्दास्तु विष्णावेव मुख्या इति भावः।

**('इतरे' इति वाच्ये 'इतरौ' इति द्विवचनप्रयोगे चन्द्रिकोक्तकारणम्)**

यद्यपि चात्र सौत्रेतरशब्दो जडप्रकृतिचतुर्मुखरुद्रपर इति 'इतरे' इति बहुवचनेन भवितव्यम्। तथाऽपि चतुर्मुखरुद्रयोश्चेतनत्वेनैकीकृतत्वाद् द्विवचनं युक्तमिति **चन्द्रिकायां** समाहितम्।

(त.दी.)चिदचितोः प्रकृतित्वेनैक्यं जीवत्वेन च ब्रह्मरुद्रयोरिति इतराविति चत्वारोऽपि गृह्यन्त इत्यप्याहुः। (पृ.सं.८०)

**(विष्णोरेवादृश्यत्वादिगुणकत्वे 'यदा पश्यः' इति श्रुत्युक्तरूपोपन्यासाख्ययुक्त्यन्तरकथनम्)**

युक्त्यन्तरेण विष्णोरेवादृश्यत्वादिगुणकत्वं साधयति -

**ॐ रूपोपन्यासाच्च ॐ** (१-२-२३) इति।

(सू.) 'यदा पश्यः पश्यते रुग्मवर्णम्'[२] इति स्वर्णरूपव्यपदेशाच्च विष्णुरेवादृश्यत्वादिगुण इत्यर्थः ॥ ६ ॥

**॥ इत्यदृश्यत्वाधिकरणम् ॥ ६ ॥**

---

१.'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका । श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥ तामक्षरं परं प्राहुः परतः परमक्षरम्। हरिमेवाखिल-गुणमक्षरत्रयमीरितम् ॥' इति (ब्र.सू.भा.उ.स्कान्दवचनम्, पृ.२१८)

२. 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' (मु.उ.३-१-३, पृ.२१९)

## ॥ ७ ॥ अथ वैश्वानराधिकरणम् ॥

### (एतदधिकरणप्रतिपाद्यविषयः)

अत्र [१]लिङ्गाधिकनाम्नां समन्वयोऽभिधीयते ।

### (पूर्वपक्षसिद्धान्तौ)

'अभिविमानमात्मानं वैश्वानरमुपास्ते'[२] पञ्चमे वैश्वानरविद्यायामिति छन्दोगश्रुतौ 'अयमग्निर्वैश्वानर अभिविमानम्' (बृ.उ. ७.९.१) इति सर्वगतत्वेनोक्तो वैश्वानरो वैश्वानरशब्दस्य तत्र प्रसिद्धेरग्निर्देवता वा भूतं वेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ** (१-२-२४ ) इति ।

(सू.) **वैश्वानरो** विष्णुरेव । अग्नौ विष्णौ **साधारणस्य** वैश्वानरशब्दस्य 'आत्मानं वैश्वानरम्' (छा.उ.५-१८-१) इत्यात्म**शब्देन विशेषणा-दित्यर्थः** । 'आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते' (ब्र.सू. भा.उ.वचनम्) इत्यादावात्मशब्दस्य विष्णावेव प्रसिद्धेरिति भावः ।

### (वैश्वानरशब्दस्य साधुत्वसमर्थनम्)

ननु विश्वनरशब्दात् 'तस्येदम्' (पा.सू. ४.३.१२०) इत्यण्प्रत्यये 'अचो ञ्णिति' (पा.सू. ७.२.११५) (इति) वृद्धौ वैश्वनर इत्येव स्याद् दीर्घः कथमिति चेत् । इत्थम् । 'विश्वस्य वसुराटोः' (पा.सू. ६.३.१२६) 'मित्रे चर्षौ' (पा.सू. ६.३.१२७) 'नरे सञ्ज्ञायां' (पा.सू. ६.३.१२८) (इत्यत्र) विश्वशब्दस्य वसुराट्शब्दयोः परतः मित्रशब्दे च परे नरशब्दे

---

१. 'पाचकत्वाद्यनेकलिङ्गसमन्वयसिद्ध्यर्थं ब्रह्मणि वैश्वानरनाम समन्वीयतेऽत्र' इति निर्गलितार्थः ।

२. 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा.उ. ५.१८.१)

च परे दीर्घः स्यात्। विश्वाराट् विश्वावसुः विश्वामित्र इत्यादि यथा (तथा) प्रकृतेऽपि विश्वानरशब्दाद् अण्प्रत्यये वृद्धौ च वैश्वानर इति भवतीति बोध्यम्। अत्र विश्वशब्दात् परे नरशब्दस्य विद्यमानत्वाद् दीर्घः।

**(सूत्रे साधारणपदग्रहणेऽभिनवचन्द्रिकोक्तकारणवर्णनम्)**

साधारणग्रहणं किमर्थम् ? वैश्वानरशब्दस्योभयत्र प्रसिद्धिज्ञापनाय। नचैवं सति तृतीयपादप्रवेशापत्तिः। 'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः' (अमरकोशः) इति लोकतोऽन्यत्र प्रसिद्धत्वात्। लोकतोऽन्यत्र प्रसिद्धस्योभयत्र प्रसिद्धत्वं विरुद्धमिति चेन्न। एकस्यैव शब्दस्याधिकारिभेदेनोपपत्तेः। अत एवेदमधिकरणं पादद्वयसन्धौ **निवेशितमित्यभिनवचन्द्रिकायाम्**।

**(वैश्वानरविद्योक्तो वैश्वानरः विष्णुरेवेत्यत्र हेत्वन्तरकथनम्)**

समाख्यारूपहेत्वन्तरेणाप्यस्य विष्णुत्वं साधयति -

**ॐ स्मर्यमाणमनुमानं स्यादिति ॐ** (१-२-२५) इति॥

(सू.) अत्रेतिशब्दस्याऽद्यसूत्रानुषक्तेन 'विष्णुर्वैश्वानरः' इत्यनेनान्वयः। 'विष्णुर्वैश्वानरः' इति 'अहं वैश्वानरो भूत्वा' (भ.गी. १५-१४) इति गीतायां **स्मर्यमाणं** विष्णोर्वैश्वानरत्वमत्र वैश्वानरविद्यायामपि स एव वैश्वानर इत्यस्य **अनुमापकमित्यर्थः**।

**(वैश्वानरस्य विष्णुत्वाक्षेपेण समाधानम्)**

वैश्वानरस्य विष्णुत्वमाक्षिप्य समाधत्ते -

**ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते ॐ** (१-२-२६) इति॥

(सू.) **आदिभ्य** इति बहुवचनं लिङ्गबाहुल्याभिप्रायेण । 'अयमग्निर्वैश्वानरः' (बृ.उ. ७-९-१) **इत्यादिशब्दः** । **आदिपदात्** 'वैश्वानरे तद्धुतं भवति' (छा.उ. ५-२४-४) इति होमाधिकरणत्व'हृदयं गार्हपत्यः'[१] इत्यादिश्रुतगार्हपत्याद्यङ्गत्वरूपलिङ्गबाहुल्येभ्यः 'योऽयमन्तः पुरुषे येनेदमन्नं पच्यते' (बृ.उ. ७-९) इति पाचकत्वे**नान्तःप्रतिष्ठानात्** अन्तःप्रतिष्ठित्यन्नपाचकत्वरूपकर्मश्रवणादिति यावत् । अस्यापि लिङ्गत्वेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तम् । तथाच अग्निनामलिङ्गकर्मभ्यो न विष्णुर्वैश्वानर **इति चेत्** । **न** । 'अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीत'[२] इति **तथा दृष्ट्युपदेशात्** अग्न्यादिनामलिङ्गकर्मत्वेन विष्णोरुपासनोपदेशात् । अग्निनामलिङ्गकर्मणां विष्णौ सावकाशत्वादिति भावः । **असम्भवात्** विष्णोरन्येषामात्मत्वाद्यसम्भवादित्यर्थः । 'को न आत्मा किं ब्रह्म' (छा.उ. ५-११-१) इत्यात्मत्वादिविचारपूर्वकं वैश्वानरविद्याया आरभ्याधीतत्वेन विष्णुप्रकरणत्वाच्च वैश्वानरो विष्णुरिति निश्चयो भवतीति भावः ।

आर्थिकसमाख्ययाऽपि विष्णुत्वं साधयति- **पुरुषविधमपीति** ॥ 'शीर्ष्णो द्यौः समवर्तत' (तै.आ. ३.१२) इत्यादिवाक्याद् यः पुरुषः पुरुषसूक्ते द्युभ्वादिजनकशीर्षादिमानभिहितस्तद्विधमेव 'मूर्धैव सुतेजाः' (छा.उ.५-१८-२) इति छन्दोगाः वैश्वानर**मधीयतेऽपि**, अतः पुरुषसूक्त-

---

१. 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवयनीयः' (छा.उ.५.१८.२)

२. 'अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूपः' इति (ब्र.सू.भा.उ. श्रुतिः, पृ. २२६)

समाख्याबलादपि वैश्वानरो विष्णुरेव न केवलं प्रकरणादित्यपेरर्थः । पुरुषसूक्तस्य विष्णुपरत्वं प्रसिद्धमिति सूचनाय चशब्दः ।

**(त.दी.)** अन्तःप्रतिष्ठानस्य कर्मत्वात् पृथगुक्तिः । तत्त्वप्रदीपे तु प्रधानलिङ्गत्वात् पृथगुक्तमित्युक्तम् । इति (पृ.सं. ८५)

**(वैश्वानरोऽग्न्याख्यदेवता वा, भूतं वा भवत्वित्याशङ्का तन्निरासश्च )**

ननु वैश्वानरशब्दस्य देवताभूतयोः प्रसिद्धत्वादत्राप्यसौ तत्परः किं न स्यादित्यत आह -

**ॐ अत एव न देवता भूतं च ॐ** ( १-२-२७ ) इति ।

**(सू.)** अन्यत्रानवकाशात्मशब्दादेव **देवता भूतं च** वैश्वानरपदेन **नाभिधीयत** इत्यर्थः ।

**(अग्न्यादिशब्दानां ब्रह्मैकवाचित्वे प्रसिद्धिविरोधशङ्का तत्परिहारश्च)**

नन्वग्न्यादिशब्दानां ब्रह्मैकवाचित्वेऽग्न्यादिवाचित्वाभावेऽग्निशब्दस्य देवतायां भूते च प्रसिद्धिविरोधः। तस्याः कारणान्तरासम्भवादित्याशङ्कां परिहरति -

**ॐ साक्षादप्यविरोधं जैमिनिःॐ** (१-२-२८ ) इति ॥

**(सू.) साक्षात्** मुख्यया वृत्त्या ब्रह्मणः शब्दार्थत्वेऽपि व्यवहार**ाविरोधं जैमिनिर्वक्तीत्यर्थः** । ज्ञानिनो ब्रह्मवाचकानपि शब्दान् हानादि-सिद्ध्यर्थमन्यत्र व्यवहरन्ति । अन्ये त्वज्ञानादेवेति जैमिनिहृदयम् ।

**(अग्न्यादिशब्दानां ब्रह्मैकवाचित्वेऽग्न्यादिसूक्तमिति वैदिकप्रसिद्ध्यनुपपत्तिशङ्का आश्मरथ्यमतरीत्या समाधानं च)**

ननु लौकिप्रसिद्धेरज्ञानादिमूलत्वेनान्यथोपपत्तावपि वैदिकाग्न्यादि-सूक्तप्रसिध्यन्यथानुपपत्त्याऽग्न्यादीनां वाच्यत्वं स्यात् । तत्राज्ञानादि-

मूलकत्वकल्पनायोगात् । अनादित्वेन व्यवहारार्थतायोगाच्चेत्याशङ्कां परिहरति-

**ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ** (१-२-२९) इति ॥

(सू.) अग्न्यादिसूक्तैर्ब्रह्मोपास्तौ अग्न्यादिष्वेव स्वेच्छया ब्रह्मणः **अभिव्यक्तिनियमात्** तदभिप्रायेणाग्निसूक्तप्रसिद्ध्युपपत्तिः **इत्याश्मरथ्याचार्यो** वक्तीत्यर्थः ।

**(प्रकारान्तरेण सूक्तप्रसिध्युपपादनम्)**

सूक्तनियमस्य प्रकारान्तरेणोपपत्तिमाह-

**ॐ अनुस्मृतेर्बादरिः ॐ** (१-२-३० ) इति ॥

(सू.) तत्तत्सूक्तोक्तप्रकारेणोपासकैरग्न्यादिष्वेव ब्रह्मणोऽ**नुस्मृतेः** स्मर्यमाणत्वात् । स्मृ चिन्तायाम् । (भ्वादिगणपठितः धातुः) चिन्त्यत्वात् सूक्तनियम इति **बादरिर्वक्तीत्यर्थः** ।

(त.दी.) अनुस्मृतेः पूर्वत्वेऽप्यभिव्यक्त्यनन्तरमपि सा कार्येति द्योतयितुं तदनन्तरमुक्तिः। इति (पृ.सं.८७)

**(अग्न्यादिसूक्तमिति वैदिकप्रसिद्धेः प्रकारान्तरेणोपपादनम्)**

रीत्यन्तरेणाग्न्यादिसूक्तस्यान्यथोपपत्तिं कथयति -

**ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ**

(१-२-३१ )इति ॥

(सू.) अग्न्यादिसूक्तैरग्न्यादौ भगवदुपासनेऽग्न्यादीनां **सम्पत्तेः** प्राप्तेः सूक्तनियम इति **जैमिनिः** मन्यते । **तथा हि दर्शयति**- 'तं यथा यथोपासते तदेव भवति' (ब्र.सू.भा.उ. श्रुतिः) इति श्रुतिर्हि यस्मादुक्तमर्थं **दर्शयति**। ज्ञापयतीत्यर्थः। लौकिकव्यवहारेऽविरोधः पूर्वमुक्तः। इदानीं

वैदिकव्यवहारस्याग्न्यादेर्वाच्यत्वं विनाऽप्यन्यथोपपत्तिरुच्यत इत्युक्तं किमर्थं पुनरुच्यत इति न शङ्क्यम् ।

**(अग्न्यादिसूक्तैः ब्रह्मोपासकस्याग्न्यादिप्राप्त्यनुपपत्तिशङ्का तत्परिहारश्च)**

नन्वग्निसूक्तादिभिर्ब्रह्मोपासकस्याग्न्यादिप्राप्तिः श्रुत्युक्ताऽपि न युक्ता । 'मद्भक्ता यान्ति मामपि' (भ.गी. ७.२३) इत्यादेरन्योपासकस्यान्यप्राप्तेरयोगादित्याशङ्कां परिहरति -

**ॐ आमनन्ति चैनमस्मिन् ॐ** (१-२-३२) इति ॥

**(सू.) एनं** विष्णुम् **अस्मिन्** अग्न्यादौ 'योऽग्नौ तिष्ठन्' (बृ.उ. ५.७.५) इत्यादिश्रुतयः **आमनन्ति** सम्यग् बोधयन्ति **चे**त्यर्थः । न केवलं योऽग्नावित्यादावग्न्यादावेनमामनन्ति । अपि तु अग्नौ विष्णुसन्निधानाभावे स्वकार्यादौ प्रवृत्त्यनुपपत्तेस्तदन्यथानुपपत्त्याख्यं प्रमाणान्तरं चास्तीति सूचयन् चशब्दः प्रागुक्तशङ्काव्यावर्तकः । प्रमाणसम्प्लवस्य शङ्कानिवर्तकत्वात् । अतोऽग्न्यादिप्राप्तिपदेन तदन्तर्गतभगवत्प्राप्तेर्विवक्षितत्वान्नोक्तशङ्कावकाश इति भावः । तथाचोक्तम् ऋग्भाष्ये -

'पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि तु ।
[1]अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत् ॥' इति ।

(ऋ.भा.उ. वचनम्)

विष्णुवामनादिशब्दयोग एव विष्ण्वादिसूक्तव्यवस्थापक इति च ज्ञेयम् ।

नैकत्रैवा**ऽमनन्ति** वाजसनेयिनः । चकारादन्यत्र च 'अयमस्मिन्' इत्यादौ पश्चात् । अन्ये **चाऽमनन्ति** । 'य एष एतस्मिन्' [2] इत्यादौ

१. 'अग्न्यादिशब्दवाच्यानि' इति पाठान्तरम् ।

२. 'य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः' इति (बृ.उ. ४.५.३, पृ.२३८)

अन्ये चाऽमनन्ति 'एतमस्यामेतं दिवि' (बृ.उ. ४-५-३) इत्यादौ । अन्ये च 'तत्सृष्ट्वा तदेवानुप्राविशत्' (अनुपलब्धाकरा श्रुतिः) इत्यादौ । स्मरन्ति च 'यच्चन्द्रमसि यच्चाग्नौ' (भ.गी. १५.१२) इत्यादीनि तत्त्वप्रदीपिकारीत्या समुच्चयार्थो वा चशब्दः ।

(त.दी.) जैमिन्याद्युक्तिस्तेषां प्रसिद्धार्था। शब्दानां लोकव्यवहाराविरोधं वदन् सूक्तादिनियमं चाऽहेति जैमिनेर्द्धिरुपादानम्। (पृ.सं. ८९)

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन बाहुपल्लिवेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे प्रथमाध्यायस्य द्वितीयः पादः ॥***

---

*. एतदनन्तरं लिपिकर्तुः कानिचिद् वाक्यानि मातृकायां दृश्यन्ते- 'विरोधकृत्-संवत्सरवैशाखशुक्ल-चतुर्थ्यामिन्दुवासरे सायाह्ने बिदिरहळ्ळिरघुपतिना कृतमिदं लेखनम्।' इति।

## अथ प्रथमाध्यायस्य तृतीयः पादः

### ॥ १ ॥ द्युभ्वाद्यधिकरणम् ॥

(उभयत्रप्रसिद्धनामलिङ्गात्मशब्दसमन्वयः)

'मा भूदन्यैकगतता ब्रह्मैकगतताऽपि वा ।
किन्तूभयगतत्वं स्यादिति शङ्का निरस्यते ॥'

इति तात्पर्यचन्द्रिकारीत्या श्रुत्यादिभिरुभयत्र प्रसिद्धानां नामलिङ्गात्मकानां शब्दानां समन्वयः प्रतिपाद्यतेऽस्मिन् पादे ।

(सर्वाधारत्वलिङ्गसमन्वयः)

तत्राऽद्यनये 'रुद्रो वाव लोकाधारः' (भाष्य.दी.उ.श्रुतिः) 'विष्णावेवौताश्च' (अनुपलब्धाकरा श्रुतिः) इत्यादिनोभयत्र प्रसिद्धस्य सर्वाधारत्व-लिङ्गस्य समन्वयः कथ्यते ।

(पूर्वपक्षसिद्धान्तौ)

'यस्मिन् द्यौः' (आ.उ.श्रुतिः) इत्याथर्वणोक्तं द्युभ्वाद्यायतन्वं रुद्रादीनामेवेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ** ( १ - ३ - १ ) इति ॥

**(सू.) द्युभ्वाद्यायतनं** विष्णुरेव । 'तमेवैकं जानथ आत्मानम्' (मु. २-२-५) इति **स्वशब्दपर्यायात्मशब्दादित्यर्थः** ।

(सूत्रे ' स्वशब्दात् ' इति वचने कारणोक्तिः)

नन्वार्जवात् प्रतिपत्तिलाघवाच्च 'आत्मशब्दात्' इति किं नोक्तमिति चेत् । सत्यम् । तथा तस्य विष्णावसाधारण्यं ज्ञापयितुमित्थं वचनात् । तथाऽपि तस्य शब्दस्तच्छब्द इति विग्रहं विवक्षित्वा तच्छब्दादिति

वक्तव्यमिति चेत् । न । तथात्वे शब्दविशेषो नोपात्तः स्यात् । अत उभयार्थं 'स्वशब्दात्' इत्युक्तम्। एवमुक्ते हि स्वस्य विष्णोरेव शब्द इति षष्ठीसमासेनासाधारण्यमपि ज्ञापितं भवतीति **चन्द्रिकायां** व्यक्तम् ।

**(जायमानत्वलिङ्गादात्मशब्दो जीवपरो भवत्वित्याशङ्का तत्परिहारश्च)**

आत्मशब्दोऽप्यमुख्यतयाऽन्यपरः किं न स्यादित्यत आह -

**ॐ मुक्तोपसृप्यव्यपदेशात् ॐ** ( १-३-२ ) इति ॥

(सू.) 'अमृतस्यैष सेतुः' (मु. २-२-५) इति **मुक्तप्राप्यत्वोक्तेः** आत्मशब्दो विष्णुपर इत्यर्थः। जायमानत्वलिङ्गेनाऽत्मश्रुतेर्गौणत्वमस्तु, इत्याशङ्कानिरासाय 'प्राणानां ग्रन्थिरसि' (भाष्य.दी.उ. महाना.श्रुतिः, १६.२.३५) [१]इत्यादितदन्तरवाक्यगतलिङ्गरूपसाधकोक्तिपरत्वेन द्युभ्वाद्यायतनत्वे स्वातन्त्र्येण हेत्वन्तरपरत्वाभावाच्चशब्दाभावः ।

**(मुक्तोपसृप्यत्वं कीदृशमिति कथनम्)**

अत्र मुक्तोपसृप्यत्वं नाम भावबोधोक्तरीत्या लिङ्गभङ्गवन्तो ये मुक्तास्तत्प्राप्यत्वं विवक्षितम्। श्रौतसेतुशब्दादिहोपसृप्यत्वं प्राप्यान्तर-रहितत्वे सति प्राप्यत्वं न त्वर्चिरादिवत् प्राप्यत्वमात्रम् । अत एव भाष्ये 'अमृतस्यैष सेतुः'(मु.उ. २-२-५) इति वाक्यमेवोदाहृतमिति चन्द्रिकोक्तरीत्या प्राप्यान्तररहितत्वे सति प्राप्यत्वं वा विवक्षितम् । तदुभयं विष्णोरन्यत्र क्वापि न विद्यत इति न कश्चिद् दोषः ।

(त.दी.) अमृतसेत्विति वाच्ये मुक्तेत्याद्युक्तिः तदर्थोक्त्यर्था। (पृ.सं.९३)

**(प्राणाधारत्वादिलिङ्गाद् द्युभ्वाद्यायतनत्वं रुद्रप्रकृत्योरस्त्विति शङ्का तत्परिहारश्च)**

नन्वत्रोक्तप्राणाधारत्वादिलिङ्गादेः रुद्रप्रकृत्योः 'प्राणानां ग्रन्थिरसि'

---

१. 'इत्यादितैत्तिरीयवाक्यगत....' इति पाठेन भाव्यमिति भाति ।

(भाष्य.दी.उ. महाना.श्रुतिः, १६.२.३५) इत्यादिश्रुत्यन्तरे श्रवणात् तयोरेव द्युभ्वाद्यायतनत्वं किं न स्यादित्याशङ्कां परिहरति-

**ॐ नानुमानमतच्छब्दात् ॐ** (१-३-३) इति ॥

**(सू.)** प्रमाणत्वेनानुमीयत इति व्युत्पत्त्याऽनुमानशब्द आगमपरः । स च प्रतिपादकतयाऽस्तीति तद्वत्त्वविवक्षायां 'अर्श आदिभ्योऽच्' (पा.सू. ५.२.१२७) । आनुमानमिति पदच्छेदे तूक्तव्युत्पत्त्याऽऽगमपरादनुमान-शब्दाच्छैषिकोऽण् । उययत्रापि [1]**अनुमानप्रधानकसाङ्ख्याद्यागमसिद्धं** रुद्रप्रकृत्यादिकं **न** द्युभ्वाद्यायतनम् । **अतच्छब्दात्** । भस्मधरोग्रत्व-त्रिगुणत्वादितदेकनिष्ठशब्दाभावादित्यर्थः। श्रुत्यन्तरगतरुद्रादि-नाम्नामन्तकत्वादिलिङ्गस्य च विष्णुनिष्ठत्वादिति भावः ।

ननु तच्छब्दाभावादिति प्रसज्यप्रतिषेधः कथं व्याख्यायते ? 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्' (ब्र.सू.भा.उ. वचनम्) इति वचने नञः क्रियावाचकपदसम्बन्ध एव तस्योक्तत्वात् । अत्र प्रतियोगि-वाचकोत्तरपदसम्बन्धात् पर्युदास एव युक्त इति चेत् । सत्यम् । 'असूर्यं-पश्या राजदाराः' इत्यादौ वैयाकरणैः समासस्याभ्युगमाद् वा, निर्मक्षिकमित्यादाविव 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावसमासाश्रयाद् वा न दोषः । नन्वव्ययीभावत्वे निर्मक्षिकमित्यादाविवाम् भावे 'अतच्छब्दम्' इति भवेदिति चेत् । न । 'नाव्ययीभावादतोऽम्वपञ्चम्याः' (पा.सू.२-४-८४) अदन्तादव्ययीभावात् सुपो न लुक् । तस्य 'पञ्चमीं विनाऽमादेशः' इत्युक्तत्वेन 'उपकृष्णाद् गतः' इतिवदमभावोपपत्तिरिति सुधानुसारेण चन्द्रिकाद्युक्तमनुसन्धेयम् ।

---

१. 'अनुमानप्रधानकपाशुपतसाङ्ख्याद्यागमसिद्धम्' इत्युक्ते समीचीनं स्यादिति भाति ।

(त.दी.) रुद्रप्रकृत्योर्द्वयोरुपादानाय वा टीकोक्तरीत्या पूर्वपक्षयुक्तिसूचनाय वा वक्ष्यमाणदिशा वृत्त्यन्तरसूचनाय वा तदागमानाममानत्वसूचनाय वा नानुमानमित्युक्तिः (पृ.सं. ९५)

**(वायौ द्युभ्वाद्यायतनत्वशङ्का तन्निरासश्च)**

'स एषोऽन्तश्चरते बहुधा जायमानः' (मु.२.२.६) इत्यादि-तल्लिङ्गादिना 'वायुना वै गौतम' (बृ.उ. ५.७.२) इत्यादौ वायावत्रोक्त-लोकाधारत्वश्रवणाद् वायुर्वा किं न स्यादित्यतो वक्ति-

**ॐ प्राणभृच्च ॐ** ( १-३-४ ) इति ।

**(सू.) चशब्दः** प्रागुक्तहेतूनां नञश्च समाकर्षार्थः । वायुसमुच्चयार्थोऽपीति **चन्द्रिकायाम्** । जीवपर**प्राणभृच्छब्देन** वायोरपि ग्रहणमिति **भाव-बोधे** । आत्मशब्दादिपूर्वोक्तहेतुभिर्न जीवो **वायुश्च** द्युभ्वाद्यायतन इत्यर्थः । 'अजायमानो बहुधा विजायते' (तै.आ.३-१३-१) इति श्रुतेर्जीवलिङ्गानां विष्णौ सावकाशत्वादिति भावः ।

(त.दी.) जीव इति वाच्ये प्राणभृदित्युक्तिः सह प्राणैरित्युक्तप्राणभृत्त्वं तस्य युक्तमिति पूर्वपक्षयुक्तिसूचनाय । योगविभाग उत्तरार्थः । व्याकरणे 'रञ्जेश्च' (पा.सू. ६.४.२६) इत्यादिवत् । **(पृ.सं. ९७)**

**(जीवस्य द्युभ्वाद्यायतनत्वशङ्का तत्परिहारश्च)**

ननु किं जीवलिङ्गस्य विष्णुपरत्वप्रतिपादनायासेन ? जीवस्यैव द्युभ्वाद्यायतनत्वं स्यात् । नचोक्तहेतुविरोधः । जीवेशाभेदाभिप्रायेण जीवेऽप्यात्मशब्दाद्युक्तिसम्भवादित्याशङ्कां परिहरति -

**ॐ भेदव्यपदेशात् ॐ** ( १-३-५ ) इति ।

(सू.) 'जुष्टं यदा पश्यत्यन्यम्'[1] इति जीवेशभेदव्यपदेशान्नैक्याभिप्रायेण जीव एवाऽत्मशब्द इति वाच्यमित्यर्थः ।

**(परमात्मप्रकरणाज्जीवपरमात्मनोरेव भेदोऽत्र प्रतिपाद्य इति निरूपणम्)**

नन्वत्र जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते न परमात्मनः । अतो न तयोर्भेद इत्याशङ्कां परिहरति -

**ॐ प्रकरणात् ॐ** (१ -३-६) इति ॥

(सू.) 'द्वे विद्ये वेदितव्ये' (मु.उ. १-१-४) इत्युपक्रमे परविद्याविषयवस्तुन आरभ्याधीतत्वेन ब्रह्म**प्रकरणत्वाद्** ईशपदं परमात्मपरमित्यर्थः ।

**(नात्र जीवेशाभेदः विवक्षित इत्यत्र हेत्वन्तरकथनम्)**

न जीवेशाभेदोऽत्र विवक्षित इत्येतमर्थं हेत्वन्तरेण साधयति -

**ॐ स्थित्यदनाभ्यां च ॐ** (१-३-७) इति ॥

(सू.) 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यः' (मु.उ. ३-१-१) इत्यत्रेशस्य **कर्मफलादनाभावेन स्थित्युक्ते**र्जीवस्य **चादनोक्तेश्च** तयोर्भेद इत्यर्थः ।

**(यथाश्रुति 'अदनस्थितिभ्याम्' इति वाच्ये 'स्थित्यदनाभ्याम्' इति कथने कारणोक्तिः)**

ननु श्रुतावदनस्य प्रथममभिहितत्वात् सूत्रस्य च श्रुत्यनुसारित्वाद् 'अदनस्थितिभ्याम्' इति वाच्यमिति चेत् । सत्यम् । श्रुतावदनस्य प्राथम्येऽपि स्थितेरीश्वरसम्बन्धित्वेनाभ्यर्हितत्वाद् अल्पाच्तरत्वाच्च सूत्रे तस्याः प्राथम्यमिति **चन्द्रिकायां** समाहितत्वात् ॥ १ ॥

**॥ इति द्युभ्वाद्यधिकरणम् ॥ १ ॥**

---

१. 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' (मु.उ.३-१-२)

## ॥ २ ॥ अथ भूमाधिकरणम् ॥

### (विष्णौ भूमनामसमन्वयः)

अस्मिन् नये भूमनाम समन्वीयते ।

### (धर्मवाचकस्य भूमशब्दस्य धर्मिरूपनामात्मकत्वं कथमिति शङ्का, चन्द्रिकोक्तं समाधानं च)

ननु बहुशब्दात् 'बहोर्लोपो भू च बहोः' (पा.सू. ६-४-१५८) इति धर्मे निष्पन्नस्य भूमशब्दस्य बहुत्वपर्यायभूमरूपधर्मवाचकत्वेन धर्मिरूपनामात्मकत्वं कथमिति चेत् । न । बहुशब्दस्य 'बहुषु बहुवचनम्' (पा.सू. १-४-२१) इत्यादौ सङ्ख्यायामिव बह्वन्नमित्यादौ पूर्णे धर्मिण्यपि प्रयोगात् 'यो वै भूमा तदमृतम्' (चन्द्रिकोक्तं श्रुतिवाक्यम्) इत्यादौ पूर्णे धर्मिण्यपि प्रयोगात् 'यो वै भूमा तदमृतम्' (चन्द्रिकोक्तं श्रुतिवाक्यम्) इत्यादौ श्रुतौ धर्मिणि प्रयोगाच्च पूर्णत्वविशिष्टधर्मिवाचित्वमुपपद्यत इति **चन्द्रिकायां** व्यक्तम् ।

### (पूर्वपक्षसिद्धान्तौ)

'यो वै भूमा तत्सुखम्' (छा.उ. ७-२३) इति छन्दोगे श्रुतो भूमा वायुरेवेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ** ( १-३-८ ) इति ॥

**(सू.)** 'यो वै भूमा' (छा.उ. ७-२३) इत्यत्रोक्तो **भूमा** विष्णुरेव । 'तत्सुखम्' (छा.उ. ७-२३) इति **सम्प्रसादात्** सम्यक् प्रसीदत्यनेनेति व्युत्पत्त्या सम्प्रसादः पूर्णसुखं तस्मात् पूर्णसुखरूपत्वोक्तेः **अध्युपदेशात्** नामादिप्राणान्तेभ्य उत्तमत्वेनोक्तेश्चेत्यर्थः ।

**(सूत्रे सम्प्रसादशब्देन सुखोक्तौ कारणोक्तिः)**

सुखे सम्प्रसादशब्दस्त्वीश्वरस्य सुखं चेद् दुःखमपि स्यादिति नाऽशङ्क्यम् । पूर्णानन्दकार्येण सम्यक्प्रसादेन दुःखाभावनिश्चयात् । ज्ञानवत् सुखस्यापि दुःखविनाभावाभावाच्चेति दर्शयितुं प्रयुक्तमिति व्यक्तं च **चन्द्रिकायाम्** ।

**(युक्त्यन्तरेण विष्णोर्भूमत्वसमर्थनम्)**

युक्त्यन्तरेण विष्णोर्भूमत्वं प्रतिपादयति-

**ॐ धर्मोपपत्तेश्च ॐ** (१-३-९) इति ।

**(सू.)** 'स एवाधस्तात् स एव उपरिष्टात्'[१] इति श्रुतानां सर्वगतत्वादि-**धर्माणां** विष्णावेवोपपत्तेः सम्भवाच्च विष्णुरेव भूमेत्यर्थः ।। २ ।।

**।। इति भूमाधिकरणम् ।। २ ।।**

**।। ३ ।। अथ अक्षराधिकरणम् ।।**

**(अक्षरनामसमन्वयः)**

अत्राक्षरनाम्नः समन्वयः ।

**(पूर्वपक्षसिद्धान्तौ)**

'तद्वा एतदक्षरं गार्गि' (बृ.उ. ५.८.१) इति वाजसनेयके उक्तमक्षरं श्रीतत्त्वमेव। तत्रैव 'कूटस्थोऽक्षर उच्यते' (भ.गी. १५.१६) इत्यक्षरशब्दस्य प्रसिद्धेरित्यादिपूर्वपक्षे, सिद्धान्तयति-

**ॐ अक्षरमम्बरान्तधृतेः ॐ** (१-३-१० ) इति ।।

**(सू.) अक्षरं** ब्रह्मैव। 'आकाश एव तदोतं च प्रोतं च' (बृ.उ. ५.८.७)

---

१. स उपरिष्टात् इत्येव भाष्यदीपिकोदाहृतः पाठः । (छा.उ. ७.२५.१)

इत्यम्बराख्यचित्प्रकृतेः सर्वाधारत्वमुक्त्वा 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ.उ. ५.८.७) **इत्यम्बरान्तसर्वाधारत्व-श्रवणादित्यर्थः** ।

**(यथाश्रुति 'आकाशधृतेः' इत्यनुक्त्वा 'अम्बरान्तधृतेः' इति कथने कारणोक्तिः)**

ननु श्रुत्यनुसारेण 'आकाशधृतेः' इत्येव वाच्यम् । अम्बरपदमन्तपदं च व्यर्थमिति चेत् । न । अं बिभर्तीति व्युत्पत्त्या श्रीतत्त्वमेवाऽऽकाशशब्दार्थ इति सूचनायाम्बरपदस्य सर्वाधारत्वोक्त्यर्थतयाऽन्तपदस्य च सार्थक्यात् । नचाऽऽकाशपदेन जडप्रकृत्यादिकमेव विवक्षितमित्यम्बरान्तधृतिः श्रीतत्त्वे सावकाशेति वाच्यम् । यतः आकाशं 'यद्भूतं यद् भविष्यच्च' (ब्र.सू.भा.वचनम्) इत्यादिना 'आकाश एव तदोतं प्रोतं च' (बृ.उ.५.८.७) इत्यन्तेन सर्वचेतनपोषकतया 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ.उ. ५.८.११) इत्यनेनान्याश्रितत्वेन चोच्यते । न चैतत् ( चिदचित्प्रकृतितो ) चित्प्रकृतितोऽन्यत्र युक्तम् । नचात्रोतत्वादिकमुपादेयत्वमाधेयत्वं वा, नतु पोष्यत्वम् । तच्च सर्वस्य जडप्रकृतिं प्रति सम्भवतीति शङ्क्यम् । 'एतस्मिन् खल्वक्षरे' (बृ.उ. ५.८.११) इत्याकाशाश्रयत्वेनोच्यमानस्य द्रष्टृत्वादिना चेतनत्वेनोपादानत्वायोगात् । 'कस्मिन् खलु चन्द्रलोका ओताश्च प्रोताश्च' (बृ.उ.) इति प्रजापतिलोकेषु गार्गीत्यादावाधेयत्वस्याप्यभावाच्च । नह्यधस्तन इन्द्रलोक उपरितने प्रजापतिलोके आहितः । एकप्रकरणस्थस्योतादिशब्दस्य नानार्थत्वं चायुक्तम् । तस्मात् 'रुद्रं समाश्रिता देवाः' (म.भा.ता.नि. २.११६) 'राज्ञि राज्यं समाश्रितम्' इत्यादाविव पोष्यत्वादिकमेवोतत्वम् । नचाचेतनस्य पोष्यत्वं युक्तमिति भूतादिपदमपि

देहद्वारा भूतत्वादियुक्तचेतनपरमेवेत्याकाशं चित्प्रकृतिरेव । ततश्च तदाश्रयोऽक्षरं ब्रह्मैव, न चित्प्रकृतिः स्वाश्रयत्वस्य विरुद्धत्वादिति **चन्द्रिकादौ** व्यक्तम् ।

**(त.दी.)**अम्बरधृतेरित्येव पूर्तावन्तेत्युक्तिः पृथिव्यादिसर्वस्यापि प्रकृतिद्वारा ब्रह्मैवाऽश्रय इति सूचयितुम् । 'पृथिव्यादिप्रकृत्यन्तम्' (ब्र.सू.भा.उ.) इति स्मृतेः । अम्बरस्य श्रीतत्त्वज्ञापनाय चेत्यप्याहुः। सर्वाश्रयत्वे सत्येकाश्रयत्वस्य तल्लिङ्गत्वादिति। इति (पृ.सं. १०४,१०५ )

**(विष्णोरेवाक्षरत्वे युक्त्यन्तरकथनम्)**

युक्त्यन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयति -

**ॐ सा च प्रशासनात् ॐ** (१-३-११ ) इति ॥

**(सू.)** 'एतस्य वाऽक्षरस्य प्रशासने'[१] इत्यादिना **सा च** धृतिः **प्रशासनात्** आज्ञामात्रादुच्यते च अतोऽक्षरं विष्णुरित्यर्थः ।

**(विष्णोरेवाक्षरत्वे हेत्वन्तरोक्तिः)**

हेत्वन्तरेण विष्णोरेवाक्षरत्वमाह -

**ॐ अन्यभावव्यावृत्तेश्च ॐ** (१-३-१२ ) इति ॥

**(सू.)** 'अस्थूलमनणु' (बृ.उ. ५-८-८) इत्यादिना **अन्येषां** वस्तूनां **भावानां** स्वभावानां स्थूलत्वादीनामक्षरे **व्यावृत्तिकथनाच्च** विष्णुरेवाक्षरः न केवलं सर्वाधारत्वादिकथनादिति **चार्थः** । अप्राकृत-धर्मसद्भावसमुच्चयार्थश्चशब्द इत्यन्ये ।

'अनित्यत्वं देहहानिर्दुःखावाप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तः' (गी.भा.उ.वचनम्)

---

१. 'एतस्य वाऽक्षरस्य प्रशासने गार्गी सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति (बृ.उ. ५-८-९)

इत्युक्तचतुर्विधनाशरहिते विष्णावेवाक्षरशब्दप्रवृत्तिनिमित्तपौष्कल्यात्। 'तस्मादक्षरं तस्मादक्षरमित्याचक्षते' (बृ.उ.) 'अक्षरं ब्रह्म परमम्' (भ.गी. ८.१३) इत्यादिश्रुतिस्मृतिषु तस्य तत्र प्रयोगाच्चाक्षरं ब्रह्मैवेति तात्पर्यं ज्ञेयम् ॥

**॥ इत्यक्षराधिकरणम् ॥ ३ ॥**

(त.दी.) स्थौल्यादीति वाच्येऽन्यभावेत्युक्तिः स्थौल्यादिहीनमक्षरं ब्रह्म चेन्निःस्वभावं स्यादिति न शङ्क्यम्, अन्यवस्तुस्वभावस्य प्राकृतस्यैव स्थौल्यादेर्व्यावृत्त्युक्तेरिति सूचयितुम्। इति (पृ.सं.१०६)

## ॥ ४ ॥ अथ सदधिकरणम् ॥

**('सदेव' इत्यत्रत्यसच्छब्दसमन्वयः)**

अत्र सृष्टिस्थानगताः शब्दाः समन्वीयन्ते।

**(पूर्वपक्षसिद्धान्तौ)**

'सदेव सोम्येदमग्र आसीत्' (छा.उ. ६-२-१) इत्यत्रोक्तं सत् प्रधानमेव। 'बहु स्यां प्रजायेय' (छा. उ. ६-२-३) इति सति श्रुतस्य विकारस्य निर्विकारे ब्रह्मण्यसम्भवादिति पूर्वपक्षे, सिद्धान्तयति-

**ॐ ईक्षतिकर्मव्यपदेशात् सः ॐ (१-३-१३)** इति।

(सू.) अत्र कर्मशब्दः 'न कर्तृत्वं न कर्माणि' (भ.गी. ५.१४) इत्यादाविव कर्मपरः।

**सः** विष्णुरेव 'सदेव सोम्य' (छा.उ. ६-२-१) इत्यादिश्रुतसच्छब्दवाच्यः। 'ऐक्षत' (भाष्य.दी.उ.श्रुतिः) इति **ईक्षणाख्यव्यापारकर्तृत्वव्यपदेशादीक्षणपूर्वकसृष्ट्यादिक्रियाकर्तृत्वोक्तेरिति** वाऽर्थः। जडप्रधानस्य च तदसम्भवादित्याशयः।

**(सूत्रस्थकर्मपदस्य सार्थक्यकथनम्)**

नन्वीश्वरे स्वरूपातिरिक्तेक्षणक्रियाभावात् 'ऐक्षत' (भाष्य.दी.उ. श्रुतिः) इतीक्षणकर्तृत्वव्यपदेशोऽयुक्तः । क्रियाकर्तृभावविरोधादित्याशङ्कामपाकर्तुं विशेषबलात् क्रियाकर्तृभाव इति दर्शयितुं कर्मपदम् ।

**(समन्वयसूत्रात् तच्छब्दानुवृत्तिसम्भवेऽपि सूत्रे 'सः' इति पृथङ् निर्देशे कारणोक्तिः)**

यद्यप्यत्र सूत्रान्तर इव समन्वयसूत्रस्थो ब्रह्मपरस्तच्छब्दोऽनुषङ्गार्ह इति 'सः' इति निर्देशो व्यर्थः । तथाऽपि 'एको नारायण आसीत् स मुनिर्भूत्वा समचिन्तयत्' (भाष्य.दी.उ.श्रुतिः, पृ.२६८) इत्यादिश्रुतिषु यः कारणत्वेन निर्णीतः स एवात्राप्युच्यत इति समाख्यामपि प्रमाणीकर्तुं स इत्युक्तमिति चन्द्रिकादौ व्यक्तम् ।

**(अत्र समन्वेतव्यशब्दविशेषानुक्तिशङ्का, चन्द्रिकोक्तं समाधानं च)**

नचात्र सूत्रे समन्वेतव्यशब्दविशेषानुक्तिः । 'स ईक्षाञ्चक्रे' (अनुपलब्धाकरा श्रुतिः) 'सोऽकामयत' (तै. २.६) इत्यादौ स इत्यस्य समन्वेतव्यत्वात् स इत्यनेन ब्रह्मपरेणापि तन्त्रेणाऽवृत्त्या एकदेशकीर्तनमुखेन समन्वेतव्यस्याप्युक्तिरिति **चन्द्रिकायां** समाहितत्वात् ।

**(ब्रह्मेति नपुंसकशब्देन प्रकृतस्य 'सः' इति पुल्लिङ्गेन कथने कारणोक्तिः)**

ब्रह्मेति नपुंसकशब्देन प्रकृतत्वात् तदिति वक्तव्ये नपुंसकशब्देन प्रकृतस्य पुल्लिङ्गेन परामर्शकारणाभावादित्याशङ्कायाः केवलपुरुषेभ्यः सृष्टिदर्शनात् केवलाभ्यः स्त्रीभ्यस्तददर्शनादत्रोक्तनिमित्तत्वं विष्णोरेवेति वक्तुं पुंस्त्वं सूचयितुं स इति पुल्लिङ्गपदम् । पुंस्त्वसूचनं च चित्प्रकृतेः

'तदैक्षत' (भाष्य.दी.उ.श्रुतिः) इत्युक्तेक्षणसम्भवाच्चित्प्रकृतेरेव सन्नामार्थत्वमिति शङ्कानिरासायेति **अभिनवोक्तं** वा समाधानं ज्ञेयम् ।

॥ इति सदधिकरणम् ॥ ४ ॥

**॥ ५ ॥ अथ दहराधिकरणम् ।**

**(हृत्पद्मस्थत्वरूपलिङ्गसमन्वयः)**

अत्र हृत्पद्मस्थत्वरूपलिङ्गस्य समन्वयः ।

**(पूर्वपक्षसिद्धान्तौ)**

'एतस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदुपासितव्यम्'[१] इति छन्दोगवाक्ये श्रुतं हृत्पद्मस्थत्वमाकाशादेरेवेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ दहर उत्तरेभ्यःॐ** (१-३-१४) इति ।

(सू.) 'दहरं पुण्डरीकं वेश्म' (छा. ८.१.७) इत्याद्युक्त**दहरे** अल्पे हृत्पद्मे स्थितो विष्णुरेव । 'य आत्मा ऽपहतपाप्मा'[२] इत्यादिस**न्निहितोत्तरवाक्यगतापहतपाप्मत्वादिधर्मेभ्य** इत्यर्थः ।

**(सुप्तगम्यत्वब्रह्मशब्दाभ्यां हृत्पद्मस्थत्वं विष्णोरेवेति समर्थनम्)**

व्यवहितवाक्यगतसुप्तगम्यत्वादिलिङ्गब्रह्मशब्दाभ्यामपि विष्णोः हृत्पद्मस्थत्वं साधयति -

**ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ** (१-३-१५) इति ॥

---

१. 'अथ यदिदमस्मिन् ब्रह्मपुरे' इति भाष्यपाठः । (छा.८.१.२, पृ. २६९)

२. 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति (छा.उ. ८-७-३, पृ. २७३)

(सू.) उत्तरेभ्य इत्यनेनैव सुप्तप्राप्यत्वादीनां ग्रहणसम्भवेऽपि कुरुपाण्डवन्यायेन पृथग् ग्रहणम् । **चो** हेतौ । 'अहरहर्गच्छन्त्य एतं (एनं ) ब्रह्मलोकं न विन्दन्ति' (छा.उ. ८-३-२) इत्यादिना व्यपदिष्टाभ्यां **सुप्तगम्यत्वब्रह्मशब्दाभ्यां** दहरे विष्णुरेव ।

किञ्च हृत्पद्मस्थस्यारण्याख्यसुधासमुद्राश्रयलोकवत्त्वलिङ्गश्रवणाच्चासौ विष्णुरित्याह- **तथा हीति** । अन्यच्च 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' (छा.उ. ८-५-३) इत्यरण्याख्यसुधासमुद्रवल्लोकवत्त्वरूपलिङ्गं हृत्पद्मस्थगतं **दृष्टं** चातोऽपि दहरे विष्णुरित्यर्थः । इदं च विष्णौ 'अरश्च वै ण्यश्च सुधासमुद्रौ'[1] इति वाक्ये प्रसिद्धमिति **हि**शब्दः ।

### (लिङ्गशब्देनैव सुप्तगम्यत्वस्यापि ग्रहणसम्भवे गतिशब्देन तस्य पृथग् ग्रहणे कारणोक्तिः)

ननु लिङ्गशब्देनैवोभयोर्ग्रहणसम्भवात् सुप्तगम्यत्वं गतिशब्देन पृथङ् न वाच्यमिति चेत् । मैवम् । 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकम्' (छा.उ. ८-३-२) इत्यनन्तरं 'स एष आत्मा हृदि' (छा.उ. ८-३-२) इति श्रवणाद् गतिशब्दयोर्हृत्पद्मस्थनिष्ठता सिद्धेति तौ द्वन्द्वेनोपात्तौ । अरण्याश्रयत्वलिङ्गस्य तु न सा सिद्धेति । 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' (छा.उ. ८-५-३) इत्यस्य सन्निहितहृत्पद्मस्थस्यानुक्तेः । किन्तु साध्येति लिङ्गशब्देन तस्य पृथगुक्तिर्युक्ता ।

अथवा, ब्रह्मलोकशब्दस्य विष्णुलोकपरत्वे सुधासमुद्राश्रयलोक(व)त्त्वरूपलिङ्गमनेनोच्यते । तथा हि । विष्णुलोकलिङ्गत्वेन

---

१. 'अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ' इति (ब्र.सू.भा.स्मृतिः, पृ. २७७)

प्रसिद्धम् अरण्याख्यसुधासमुद्राश्रयत्वं ब्रह्मलोकपदवाच्यहृत्पद्मे दृष्टम्, उत्तरवाक्ये अत इत्यर्थः । अत्र तूक्तहेतुसाधकहेतुत्वाद् गतिशब्दयोरिव हृत्पद्मस्थस्य ब्रह्मस्थत्वरूपप्रधानसाध्ये हेतुत्वाभावात्तस्य लिङ्गशब्देन पृथगुक्तिर्युक्तेति बोध्यम् ।

(दहरे विष्णुरेवेत्यत्र धारकत्वरूपयुक्त्यन्तरकथनम्)

युक्त्यन्तरेणापि प्रतिपादयति -

**ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ** (१-३-१६) इति ॥

(सू.) 'अथ य आत्मा स सेतुर्विधृतिः' (छा.उ.८-४-१) इति **धृतेः** धारकत्वलिङ्गाच्च दहरे विष्णुरेव । **अस्य** हृत्पद्मस्थस्य **महिम्नः** अपहतपाप्मत्वस्य **अस्मिन्** सेतुतयोक्ते **उपलब्धेरित्यर्थः** । स्वप्रकरणस्थधृतिरूपाल्लिङ्गाद् विष्णुरेवासाविति फलितोऽर्थः ।

(सूत्रस्य व्याख्यानान्तरम्)

यद्वा, 'एष सेतुर्विधारणः'[1] इति **धृतियुक्तायाः** 'य एषोऽन्तर्हृदय आकाशस्तस्मिन्' (बृ.उ. ६.४.२१) इति **वाजसनेयश्रुतिसमाख्यायाश्च** दहरे विष्णुरेव । वाजसनेये हृदयोक्तस्य विष्णुत्वे तत्समाख्ययाऽत्रापि हृदये विष्णुर्भवेत् । समाख्याया विष्णुविषयत्वं कुत इत्यत उक्तम्- **महिम्न इति** ॥ अत्र **महिम्नः** सर्वेश्वरत्वभूताधिपतित्वादिविष्णुमहिम्नः **अस्मिन्** समाख्याश्रुत्युक्ते दहराकाशस्थे वस्तुनि 'सर्वस्य वशी एष भूताधिपतिः' (बृ.उ. ६.४.२२) इति वाजसनेयशाखाया**मुपलब्धेः** श्रवणादित्यर्थः ।

---

१. यद्यपि 'स सेतुर्विधृतिः' इत्येव छन्दोगश्रुतिपाठः । तथाऽपि शाखान्तरणामप्यत्र सङ्ग्रहायैवमुक्तिरिति भाष्यदीपिकायामुक्तम् । इति (छा.उ. ८-४-१)

(विष्णोरेव हृत्पद्मस्थत्वे तैत्तिरीयप्रसिद्धिरूपयुक्त्यन्तरकथनम्)

युक्त्यन्तरमाह -

**ॐ प्रसिद्धेश्च ॐ** (१-३-१७) इति ॥

**(सू.)** 'दह्रं (दहरं) विपापं (विपाप्मं)परवेश्मभूतम्' (महाना.उ. १०.७) इति तैत्तिरीये विष्णोर्हृत्पद्मस्थत्वस्य **प्रसिद्धेस्तत्समाख्यानाच्च** विष्णुरेवेत्यर्थः ।

(विष्णोर्हृत्पद्मस्थत्वाक्षेपेण समाधानम्)

विष्णोः[1] हृत्पद्मस्थत्वमाक्षिप्य समाधत्ते -

**ॐ इतरपरामर्शात् स इति चेन्नासम्भवात् ॐ** (१.३.१८) इति ॥

**(सू.)** 'परञ्ज्योतिरुपसम्पद्य' (छा.उ.८-१२-३) इत्युक्तजीवस्य 'एष आत्मेति होवाच' (छा.उ.४-१५-१) इति हृत्पद्मस्थात्मतया **परामर्शाज्जीव एव** हृत्पद्मस्थ **इति चेत् । न** । 'य आत्माऽपहतपाप्मा' (छा. ८.७.३) इत्युक्तापहतपाप्मत्वादेर्जीवे**ऽसम्भवादित्यर्थः** ।

जीवस्यापहतपाप्मत्वमाशङ्क्य समाधत्ते -

**ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ** (१-३-१९) इति ॥

**(सू.)** तुशब्दोऽवधारणे । 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय' (छा. ८.३.४) इत्युक्तजीवस्य 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' (छा.उ. ८-१२-३) **इत्युत्तरवाक्यात्** सत्यकामत्वप्रतीतेस्तस्यैवापहतपाप्मत्वाद्युपपत्तिरिति **चेत् । नेति** शेषः । 'स्वेन रूपेणाभिनिष्पद्यते' (छा.उ.८-१२-३) इत्युक्तेः तत्रा**ऽविर्भूतस्वरूपस्तु** मुक्त एवोच्यत इत्यर्थः । हृत्पद्मस्थस्य च देहान्तर्वर्तितया मुक्तत्वायोगादिति भावः ।

---

१. 'भगवतः' इति क.पाठः ।

नच मुक्तस्यापि जीवत्वेनास्त्येव जीवेऽपहतपाप्मत्वादिसम्भवः । अतो जीव एव हृत्पद्मगततया भाविभावेनापहतपाप्मत्वादिगुणवत्त्वेनोच्यत इति वक्तव्यम् । सापेक्षनिरपेक्षयोर्निरपेक्षस्यैव श्रुतौ स्वीकर्तव्यत्वेन स्वतोऽपहतपाप्मत्वादेः परमेश्वरप्रसादाद् आविर्भूतगुणे मुक्तेऽसम्भवादिति द्रष्टव्यम् ।

**(त.दी.)** मुक्तस्त्विति वाच्ये श्रौतमुक्तिस्वरूपोक्त्यर्थैवमुक्तिः । ( पृ.सं.११९)

**(जीवस्य हृत्पद्मस्थत्वशङ्का तन्निरासश्च)**

अमुख्यापहतपाप्मत्वादिगुणोऽपि जीवः 'एष आत्मा' (छा.उ.४-१५-१) इति परामर्शबलेन हृत्पद्मस्थात्मा किं न स्यादित्याशङ्कामपाकरोति-

**ॐ अन्यार्थश्च परामर्शः ॐ**(१-३-२०) इति ।

**(सू.)** 'एष आत्मा' (छा.उ.४-१५-१) इति **परामर्शस्तु अन्यार्थश्च** जीवान्यपरञ्ज्ञातिराख्यविषय एवेत्यर्थः । न केवलमसम्भवादिति बाधकं परामर्शलक्षणसाधकाभावश्चेति वा **च**शब्दार्थः । उभयपरामर्शसम्भवेऽपि निरवकाशोक्तानेकहेतुभ्यः परमात्मार्थत्वमेव परामर्शस्येति भावः ।

**(विष्णोर्हृत्पद्मस्थत्वाक्षेपेण समाधानम्)**

उक्तं विष्णोर्हृत्पद्मस्थत्वं पुनराक्षिप्य समाधत्ते -

**ॐ अल्पश्रुतेरिति चेत् तदुक्तम् ॐ** (१-३-२१ ) इति ॥

**(सू.)** परमात्मन्यसम्भाव्यमान**हृत्पद्मरूपाल्पस्थानस्थितत्वस्य श्रवणान्न** विष्णुर्दहरे **इति चेत्**, नेति शेषः । 'निचाय्यत्वादेवं व्योमवच्च' (ब्र.सू. १.२.७) इत्यत्र **तत्तु** व्याप्तस्यापि विष्णोर्व्योमवदल्पस्थानस्थितत्व**मुक्त**मित्यर्थः ।

**(पूर्वोक्तस्मारणे कारणकथनम्)**

ननु पूर्वोक्तस्य परिहारस्य स्मारणं व्यर्थमिति चेत् । मैवम् । युक्तं व्योम्नोऽंशतोऽल्पौकस्त्वम् । अंशस्यापूर्णत्वात् । नच तथा विष्णोरुपपत्तिः। तस्यांशतोऽपि सर्वगतत्वादित्यभ्यधिकाशङ्कापरिहारार्थत्वात् ।

तदयमर्थः सूत्रशेषस्य । **तदुक्तम् तत** हृदयस्थस्यैवांशस्य सर्वगतत्वं 'एष मे आत्मा हृदये ज्यायान्' (छा.उ. ३-१४-३) **इत्युक्तमिति** । न चैतद् युक्तिविरुद्धम् । 'यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति' (भागवतम् ४.१०.१६) इत्यादिवाक्यादचिन्त्यशक्त्याऽल्पपरिमाणस्यापि महत्परिमाणस्योपपन्नत्वादिति भावः ॥ ५ ॥

**॥ इति दहराधिकरणम् ॥ ५ ॥**

## ॥ ६ ॥ अथानुकृत्यधिकरणम् ॥

**(एतदधिकरणप्रतिपाद्यविषयः -**
**ब्रह्मणि आनुकूल्येन गृह्यमाणत्वाख्यलिङ्गसमन्वयः)**

'स्थानं लिङ्गमनुग्रहः' (अनु.व्या.१.२९२) इत्यनुव्याख्यानेऽनुग्रहपदोक्तमानुकूल्येन गृह्यामाणत्वमस्मिन्नधिकरणे समन्वीयते ।

**(पूर्वपक्षसिद्धान्तौ)**

'तदेतदिति मन्यन्ते' (कठ.उ.५-१२,१४) इत्यादिकाठकवाक्योक्तं 'कथं नु तद्विजानीयाम्' (कठ.उ.५-१४) इति ज्ञापनार्थं(य) प्रार्थितत्वरूपमानुकूल्येन गृह्यमाणत्वं ज्ञानिसुखस्यैवेति पूर्वपक्षे, सिद्धान्तयति-

**ॐ अनुकृतेस्तस्य च ॐ** (१-३-२२) इति ॥

(सू.) **तस्य** आनुकूल्येन गृह्यमाणस्य **अनुकृतेः** सूर्यादि-

तेजोभिरनुकरणात् 'तमेव भान्तं' (कठ.उ.५-१५) इति वाक्यात् सूर्यादितेजसां तदधीनप्रकाशत्वावगमादिति यावत्। 'न तत्र सूर्यो भाति' (क.उ.) इति श्रुत्युक्तसूर्याद्यप्रकाश्यत्वरूपहेतोश्चेत्यनुक्तसमुच्चयार्थश्च-शब्दः । यद्वा , 'तस्य भासा' (कठ.उ. ५-१५) इति वाक्य-प्रतीकोपादानम्- **तस्येति**। 'तस्य भासा सर्वमिदं विभाति' (कठ.उ. ५-१५) इति वाक्येन सर्वस्य जगतस्तत्प्रभाप्रकाश्यत्वेनोक्तेः। चशब्दात् सूर्याद्यप्रकाश्यत्वरूपप्रागुक्तहेतोश्च विष्णुरेवाऽनुकूल्येन गृह्यमाणो न ज्ञानिसुखमित्यर्थः ।

**(अनुभानादित्यनुक्त्वाऽनुकृतेरिति कथने कारणनिरूपणम्)**

नन्वत्र 'तमेव भान्तमनुभाति सर्वम्' (कठ. ५-१५) इति श्रुत्यनुसारात् सूत्रेऽपि 'अनुभानात्' इति वक्तव्यमिति चेत् । सत्यम् । तथाऽपि यदन्यदपि सूर्यादिकृतं प्रतपनादि तदपीशाधीनमिति दर्शयितुमनु-कृतेरित्युक्तम्। उक्तं हि भारते-

[1]तापनी पाचनी चैव शोषिणी च प्रकाशिनी ।
नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य सा ॥ इति ।

**(पूर्वोक्तलिङ्गद्वयस्य विष्णुनिष्ठत्वे स्मृत्युदाहरणम्)**

सूर्यादिजगतां नारायणाधीनप्रकाशत्वं नारायणस्य सर्वजगत्प्रका-शकत्वं चेति लिङ्गद्वयस्य विष्णुनिष्ठत्वं स्मृत्या साधयति -

**ॐ अपि स्मर्यते ॐ** (१-३-२३) इति ॥

(सू.) 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्' (भ.गी. १५-१२)

---

१.'तापिनी पाचिनी चैव' इति भाष्यदीपिका पाठः । (पृ. २९०), (ऐतरेय-भाष्योदाहृतं पाद्मवचनम्)

इत्यादि गीतायां **स्मर्यते** । **अपि**शब्दात् 'अहं तत्तेजो रश्मीन्' (च. शिखा.श्रुतिः) इति श्रूयते चेत्यर्थः ।

**('स्मर्यते' इति स्मृतेः स्वशब्देन ग्रहणे कारणकथनम्)**

नन्वत्र स्मृतिं स्वशब्देनोपादाय श्रुतिरपिशब्देन समुच्चिता । कोऽत्र हेतुः? इति चेत् । न । 'अहं तत्तेजः' (च. शिखा. श्रुतिः) इत्यादिश्रुतौ 'यदादित्यगतं तेजः' (भ.गी. १५-१२) इत्यादिस्मृताविव विवक्षितार्थो न स्पष्टः । यत्र तु 'न तत्र सूर्यो भाति' (क.उ.) इत्यादौ स्पष्टस्तत्र विष्णुविषयत्वमप्यसिद्धमिति स्मृतिः स्वशब्देनोक्ता श्रुतिस्त्वपिशब्देन समुच्चितेति **चन्द्रिकायाम्** अभिहितत्वात् ।

यद्यपि चात्राऽनुकूल्येन गृह्यमाणस्य विष्णुत्वरूपे प्रधानसाध्ये 'तदेतत्प्रेयः' अनुपलब्धाकरा श्रुतिः 'प्रियो हि ज्ञानिनोऽत्यर्थम्' (भ.गी. ७.१२) इत्यादिश्रुतिस्मृत्युक्तपरत्वेनेदं सूत्रं व्याख्यातुं शक्यम् । तथाऽपि 'प्रियो हि' (भ.गी. ७.१२) इत्यादौ ज्ञानार्थं प्रार्थितत्वरूपस्याऽनुकूल्येन गृह्यमाणत्वस्यास्फुटत्वादाद्यसूत्रोक्तहेतूनां विष्ण्वेकनिष्ठत्वस्यावश्यं साध्यत्वाच्च तत्परतयैव भाष्यकृता व्याख्यातमिति चन्द्रिकायां व्यक्तम् । 'न तत्र सूर्यो भाति' (क.उ.) इति वाक्यशेषे सूर्याद्यप्रकाश्यत्वश्रवणाच्चानुकूल्येन गृह्यमाणो विष्णुरेव । तच्च 'न तद्भासयते सूर्यः' (भ.गी. १५-६) इत्यादिना विष्णोरेव स्मर्यत इति सूर्याद्यप्रकाश्यत्वरूपयुक्तिसमुच्चयेऽपिपदमिति वाऽप्यर्थः ॥ ६ ॥

॥ इत्यनुकृत्यधिकरणम् ॥ ६ ॥

**॥ ७ ॥ अथ वामनाधिकरणम् ॥ ७ ॥**

**( ब्रह्मणि ईशाननामसमन्वयः)**

अत्रेशाननाम्नः समन्वयः ।

### (पूर्वपक्षसिद्धान्तौ)

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य' (कठ.उ. ४-१२) इति काठके प्रतीत ईशानो प्राणव्यवस्थापकत्व-मध्यमत्वसर्वदेवोपास्यत्वादिलिङ्गेभ्यो वायुरेवेति प्राप्ते, सिद्धान्तयति-

**ॐ शब्दादेव प्रमितः ॐ** (१-३-२४) इति ॥

**(सू.)** 'मध्ये वामनमासीनम्' (कठ.उ. ५-३) इति वामन**शब्दादेवे**शानो विष्णुरेव **प्रमित** इत्यर्थः । नचेशान इति पदाध्याहारो दोषः । प्रकृतहेत्वाद्यनुसारेणापेक्षिताध्याहारस्य सर्वसम्मतत्वात् । नापि प्रमितपदैवकारयोर्वैयर्थ्यम् ।

**'प्रमितग्रहणेनात्र श्रुतेर्निरवकाशताम् ।**
**एवकारेण लिङ्गेभ्यः प्राबल्यं सूत्रकृज्जगौ ॥'**

वामनश्रुतिर्निरवकाशा । 'एष उ एव वामनिः' (अनुपलब्धाकरा श्रुतिः) 'एष सर्वाणि वामानि नयति' (अनुपलब्धाकरा श्रुतिः) इति श्रुत्यन्तरेऽवधारणात् । 'उपेन्द्रो वामनः प्रांशुः' (वि.स. श्लो. १७) इति स्मृतेश्च । वामनवामनिशब्दयोश्च वर्णविकारादिना 'देवासः देवाः' इत्यादाविव लाघवेनैकार्थत्वे सम्भवति भेदकल्पनायोगात् । नहि नाकिरिन्द्र इत्यादौ किरित्यस्य लोकप्रसिद्धात् क इत्यस्माद् भेदः । सर्वनियामकत्वादिमति प्राणादिनियामकत्वादेः सम्भवाल्लिङ्गानि सावकाशानीति भावः ।

### (सर्वगते विष्णावङ्गुष्ठमात्रत्वोक्तेरनुपपन्नत्वेन नात्रेशानो विष्णुरिति शङ्का, तत्समाधानं च )

ननु तथाऽपि कथमीशानो विष्णुर्भवेत् ? अङ्गुष्ठमात्रत्वोक्तेः। नच

व्योमवत् सर्वगतस्याप्यणुत्वं प्रत्यपादीति वाच्यम्। 'अङ्गुष्ठमात्रः' (क.उ. ४.१२) इति तन्मात्रत्वोक्तेरित्याशङ्कां परिहरति -

**ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ** (१-३-२५ ) इति ॥

**(सू.)** तुशब्द एवार्थे। **हृदि** विद्यमानाकाशस्याङ्गुष्ठमात्रत्वेन **तदपेक्षया** मूर्तिविशेषस्याभिव्यक्त्या तदपेक्षयैवाङ्गुष्ठमात्र उक्तः । 'अणोरणीयान्' (क.उ. १.२.२०) इति श्रुत्या हृदिगतमूर्तिविशेषेऽङ्गुष्ठमात्रपरिमाणं स्वाभाविकमिति हृदयम् । यद्वा, **हृद्यपेक्षया** हृदि विद्यमानाकाशाख्य-स्थानापेक्षयैव । हृदयाख्यस्थानगतमङ्गुष्ठमात्रत्वं स्थानिनि ब्रह्मण्युपचर्यत इति यावत् । परिच्छिन्नतयाऽङ्गुष्ठमात्रत्वनिवृत्त्यर्थमेवशब्दः ।

**('पश्वादीनामङ्गुष्ठाभावेन विष्णोस्तन्मात्रत्वोक्तिरयुक्ता' इति शङ्कापरिहारः)**

नन्वङ्गुष्ठमात्रत्वमयुक्तं पश्वादीनामङ्गुष्ठाभावेन विष्णोस्तत्तदङ्गुष्ठमात्र-त्वायोगादित्याशङ्कायामाह- **मनुष्येति** । अत्रापि तुशब्दोऽनुवर्तते । स च तथाऽपीत्यर्थकः । पश्वादेरङ्गुष्ठाभावेऽपि शास्त्रस्य मनुष्याधि-कारकत्वान्मनुष्याणां चाङ्गुष्ठसद्भावात् तदुपासार्थमङ्गुष्ठमात्रत्वोक्तिर्युक्ते-त्यर्थः । नचात्र हृच्छब्दस्यावकाशे लक्षणाप्रसङ्गो दोषः । हृदयेत्यनुक्त्वा हृदीति निर्देशादेवावकाशापेक्षयेति लाभात् ।

ननु 'अङ्गुष्ठमात्रः' (क. उ.४. १२) इत्यत्र प्रमाणार्थकमात्रच्प्रत्ययोऽयं न त्ववधारणार्थो मात्रशब्दः ।

'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि ।
जीवस्य स तु विज्ञेयो जीवाद् भेदेन मुक्तये ॥' (अनुपलब्धाकरा स्मृतिः)

इति स्मृतौ मित इति परिमाणस्यैवोक्तेः । अङ्गुष्ठपरिमाणत्वं च

सर्वगतस्यापि व्योमवदुक्तमित्येव कस्मान्न समाहितमिति चेन्न । तथात्वेऽङ्गुष्ठमात्रवाक्ये 'मध्य आत्मनि' (क.उ. ४-१२) इत्यादेर्वैयर्थ्यात् । 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' (क.उ. ४.१२) इति श्रुत्यन्तरे चाङ्गुष्ठमात्रहृदयगतत्वेनाङ्गुष्ठमात्रत्वोक्तेश्च । स्मृतावपि हृदीत्यादेरवैयर्थ्यायावधारणस्य विवक्षणीयत्वाच्चेति **चन्द्रिकायाम्** व्यक्तम् ।

'प्रमाणे लः' (वार्तिकम्) इति वार्तिकेन लुप्तमात्रच्प्रत्ययान्तत्वाद् अङ्गुष्ठशब्द एवाङ्गुष्ठपरिमाणमाहेति कश्चित् । तन्न । प्रादेशतालगोकर्णवितस्तिहस्तरत्नादिशब्देभ्यः एव 'प्रमाणे लः' (वार्तिकम्) इति वार्तिकेन द्वयसजादीनां लुको विहितत्वेनाङ्गुष्ठशब्दस्य तत्र प्रमाणगणनावसरे नामलिङ्गानुशासनेऽगणितत्वाच्छ्रुतौ मात्रपदमवधारणार्थकमिति नात्र मात्रचो लोपः । किन्तु परिमाणार्थो मात्रच्प्रत्यय एवायमिति सम्प्रदायविदः । अन्यथा 'मात्रं कार्त्स्न्येऽवधारणे' (अमरकोशः) इति कोशेऽवधारणार्थस्य मात्रपदस्य नपुंसकत्वनिर्देशादङ्गुष्ठमात्र इति पुल्लिङ्गं न स्यादिति ज्ञेयम् ।। ७ ।।

**।। इति वामनाधिकरणम् ।। ७ ।।**

## ।। ८ ।। अथ देवताधिकरणम् ।।

अत्र देवादीनामधिकारोक्तिस्तावन्नास्मदादीनां प्रवृत्तावुपयुक्ता । नापि देवादीनाम् । तैः स्वगतस्य विग्रहादिमत्त्वस्य तत्प्रयुक्तस्य सामर्थ्यादिरूपाधिकारविशेषणस्य च सिद्धान्तन्यायनिरपेक्षमेव निश्चितत्वात् । तस्मादफलेयं चिन्तेति चेत् । सत्यम् । देवादीनां विग्रहाद्यभावाद् अनधिकार इति पूर्वपक्षयतां परेषामयं दोषः । अस्माकं तु देवादिपदानां नित्यत्वात् तेषां मुमुक्षा न युक्तेति पूर्वपक्षयतां न दोषः । पूर्वपक्षन्यायेन

स्वपदनित्यत्वाशङ्कया मुमुक्षाभावोपपत्तेः । अस्मदादीनां तु सर्व-देवोपास्यत्वप्रकारेण ब्रह्मज्ञानाभावापाताच्च । टीकोक्तरीत्या 'विश्वे देवा उपासते' (क.उ. ५.३) इति श्रुत्यप्रमाण्यापाताच्च सफल एवायं विचार इति **चन्द्रिकातो**ऽवगन्तव्यम् ।

**(पूर्वपक्षसिद्धान्तौ)**

देवानामधिकारो नास्तीति प्राप्ते, सिद्धान्तयति -

**ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ** (१-३-२६ ) इति ॥

**(सू.) तदुपर्यपि** न केवलं पूर्वं किन्तु योग्यानां सतां मनुष्याणां विद्यादिना देवतापदप्राप्त्यनन्तरमपि वेदविद्यायामधिकारोऽस्ति । विशिष्टबुद्ध्यादेः **सम्भवाद्** इति **बादरायणो** वक्तीत्यर्थः । किं देवत्वयोग्यजीवानां कदाऽप्यनधिकारः, स्वपदप्राप्त्यनन्तरं वा । नाऽद्यः । मनुष्यशरीरित्व-दशायामधिकारसद्भावात् । नापि द्वितीयः । अधिकारप्रयोजकस्य विशिष्टबुद्ध्यादेर्भावादिति फलितोऽर्थः ।

**(त.दी.)** बादरायण इति विमतिसूचनाय । देवानामिति वाच्ये तदुपरी-त्युक्तिर्देवत्वस्य सादित्वादिना मोक्षार्थिता युक्तेति सूचयितुम् । अपीत्यनेन न केवलं तेषां मनुष्यत्वदशायामित्याह । इति **(पृ.सं.१३०)**

**(देवानां वेदविद्याधिकाराक्षेपेण समाधानम्)**

देवानां वेदविद्याधिकारमाक्षिप्य समाधत्ते -

**ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ**

(१-३-२७) इति ॥

**(सू.)** देवानां वेदविद्याधिकारसिद्ध्यर्थं सादिविनाशित्वाङ्गीकारे तेभ्यः पूर्वं देवताभावेन पूर्वकल्पे प्रवृत्तकर्मणि उद्देश्याभावाद् वैयर्थ्याख्य-

**विरोधापत्तेरिति** चेन्न । **अनेकेषां** योग्यमनुष्याणां पूर्वं देवतापदस्य **प्रतिपत्तेः** प्राप्तेः 'यज्ञेन यज्ञम्' (तै. ३.१२) इत्यादिश्रुतौ **दर्शनात्** श्रुत्युक्तत्वादित्यर्थः । पूर्वमेतद्देवानामभावेऽपि प्राप्तपदानां देवतान्तराणां सत्वान्न कर्मवैयर्थ्यमिति भावः ।

देवानामनित्यत्वमाक्षिप्य परिहरति -

**ॐ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॐ**

(१-३-२८) इति ॥

(सू.) वाच्यदेवानामनित्यत्वे नित्यशब्दे वेदेऽप्रामाण्याख्य**विरोधः** स्यात् । वाच्यहीनायाः वाचः प्रामाण्यासम्भवादिति **चेन्न** । वेदस्य नित्यत्वेऽप्यप्रामाण्यं न । **अतः** 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' (महाना. ५.७) इति श्रुतेः । **प्रभवात्** प्रभवशब्दः प्रभवनियमपरः । देवानां पुनरुत्पत्तिनियमात् । 'यथैव नियमः काले'[1] इत्यादिशब्दैस्तदवगमात् । तद्वाच्यानां देवानां स्वरूपनित्यत्वाभावेऽपि प्रवाहरूपेण नित्यत्वादिति भावः । अतीतानागतविदां महतां देवप्रभवनियमग्राहकात् **प्रत्यक्षाद्** उपरितनकालो देववान् कालत्वात् सम्प्रतिपन्नकालवद् इति श्रुतिसंवाद्य**नुमानाच्च** देवप्रभवनियमसिद्धेरित्यर्थः ।

(त.दी.) नन्वत इत्येवालं किं प्रत्यक्षाद्युक्त्या । मैवम् । श्रुतावुपचारोक्तिनिरासार्थत्वादनुमानस्याप्ययोग्यजनार्थत्वात् । अत एव चशब्दाभावः। शब्दप्रत्यक्षानुमानेभ्य इत्यनुक्त्वा पृथगुक्तिश्च प्राङ्निर्देशश्च शब्दस्य जात्या प्राबल्यात्। इति (**पृ.सं.**१३३,१३४)

---

१.'यथैव नियमः काले सुरादिनियमस्तथा । तस्मान्नानीदृशं क्वापि विश्वमेतद् भविष्यति' इति (ब्र.सू.भा.उ. स्मृतिः, पृ.३१४)

(वेदनित्यत्वान्यथानुपपत्त्या प्रवाहत नित्यत्वसमर्थनम्)

अन्यथानुपपत्त्या च देवप्रवाहनित्यत्वं साधयति -

**ॐ अत एव च नित्यत्वं ॐ** (१-३-२९) इति ॥

**(सू.)** न देवप्रवाहनित्यत्वसिद्ध्यर्थं युक्त्यन्तरं गवेषणीयम् । किन्तु **अत एव** यत्परेण नित्यत्वं प्रतिपादितं तदन्यथानुपपत्त्यैव सिद्ध्यति । न केवलं पूर्वोक्तश्रुत्यादिप्रमाणैरिति चार्थः । नहि वाच्यानित्यत्वे वाचां नित्यत्वमुपपद्यत इति भावः ।

ननु न वाचकस्य नित्यत्वेन वाच्यनित्यत्वसिद्धिः। शब्दगतशक्ति-विषयस्य वाच्यस्य नाशेऽपि शक्तेस्तदाश्रयशब्दस्य चानाशोपपत्तेः। प्रलये वाच्यस्य देवतादेरभावेऽपि वाचकावस्थानात् । तदा भारतादाविवा-तीतविषयत्वे चान्यदाऽपि तथाऽस्त्विति । मैवम् । प्रतिकल्पं वेदोक्त-कर्माननुष्ठाने प्रतिकल्पं वेदोपदेशधारणादेर्वैयर्थ्यात् । अनुष्ठाने कर्मकाल-प्रयुक्तानां 'इन्द्राऽगच्छ' इत्यादीनां देवताह्वानाद्यर्थत्वात् तदा तदभावे चाऽह्वानाद्ययोगात् । प्रतिकल्पं कर्मानुष्ठानकाले देवतासत्त्वस्य तत्प्रवाहा-नादिनित्यत्वं विनाऽयोगादिति **तात्पर्यचन्द्रिकायां** स्पष्टम् ।

**(त.दी.)** अर्थापत्तेरनुमानविशेषत्वात् पृथगुक्तिः । इति (पृ.सं. १३५)

(देवानां प्रवाहत नित्यत्वपक्षे वेदाप्रामाण्यशङ्का, तत्परिहारश्च)

ननु देवानां प्रवाहनित्यत्वेऽपि नानाविधनामरूपवतां वाचकस्य एकप्रकारवेदस्याप्रामाण्यं स्यादित्याशङ्कां परिहरति -

**ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॐ**

(१-३-३०) इति ।

(सू.) प्राप्तपदानां प्राचीनानां देवानां मुक्तेन[१] **स्वपदेष्ववृत्तावपि**[२] तदन्येषां प्राचीन**समाननामरूपवत्त्वाच्च** तत्प्रतिपादकैकविधवेदस्याप्रामाण्याख्य**विरोधो नास्ति। दर्शनात्** 'यथा पूर्वम्' (महा.ना.उ. ५.७) इति श्रुतेः 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा'[३] इति **स्मृतेश्च** इत्यर्थः ।

(त.दी.) श्रुतेः स्वरूपक्लृप्तिनियमपरत्वरूपान्यथासिद्धिनिरासकत्वात् स्मृतेः पृथगुक्तिः। इति (पृ.सं. १३७)

**('मोक्षेतरफलकमध्वादिविद्यासु देवानां नाधिकारः' इति जैमिनिमतनिरूपणम्)**

देवानामाद्यन्तवत्त्वेऽपि विरोधाभावाद् युक्तस्तेषां वेदविद्याधिकार इति स्थिते बादरायणपदसूचितां विप्रतिपत्तिं वक्तुं मध्वाद्युपासनाविशेषफलस्य वसुत्वादेर्वस्वादिभिः प्राप्तत्वान्न तेषां तत्राधिकार इति पुनस्तमाक्षिपति-

**ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ(१-३-३१)** इति॥

(सू.) 'असौ वा आदित्यो देव मधु' (छा.उ. ३.६) इत्याद्यभिहित**मोक्षेतरफलकब्रह्मकर्मविद्यासु** तदुक्तानुष्ठानादिना प्राप्तपदादि-

---

१. 'मुक्तत्वेन' इति पाठेन भाव्यमिति भाति।

२. चन्द्रिकायां तु तत्त्वप्रदीपरीत्याऽऽवृत्तावपीति पदविभागं स्वीकृत्यापि व्याख्यातम्। तत्सङ्गृहीतमेवं तन्त्रदीपिकायां श्रीराघवेन्द्रतीर्थश्रीपादैः- चन्द्रिकायां तु प्राचीनानां तत्पदस्थानां मुक्तानां सतामन्येषां तत्पदप्राप्तिः पुनस्तेषामपि मुक्तिरित्येवं मुक्तेरावृत्तावपीत्येकमर्थमुक्त्वा प्राचीनानां मुक्तत्वेन स्वस्वपदादावृत्तावपीति चेति तत्त्वप्रदीपोक्तमावृत्तावित्यस्यार्थान्तरमुक्तम्। (पृ. १३७,१३८)

३. 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः॥ वेदशब्देभ्य एवाऽदौ निर्ममे स महेश्वरः॥' इति (ब्र.सू.भा.उ. स्मृतिः, पृ.३१७-३१८)

फलानाम**धिकाराभावं जैमिनिराचार्यो** मन्यत इत्यर्थः । योग्यफलस्य प्राप्तत्वाद् **अयोग्ये च कामनायोगा**दिति भावः ।

**('मोक्षार्थविद्यासु देवानामधिकारोऽस्तु' इति शङ्का तत्परिहारश्च)**

माऽस्तु मोक्षार्थफलार्थविद्यास्वधिकारो देवानाम् । 'सत्यं ज्ञानम्' (तै.उ. २.१.१) इत्यादिमोक्षार्थविद्यासु भविष्यति । अर्थित्व-सम्भवादित्याशङ्कां परिहरति -

**ॐ ज्योतिषि भावाच्च ॐ** (१-३-३२ )इति ।

**(सू.)** अत्र **ज्योतिः**शब्दो ज्ञानपरः । ज्ञानस्याऽश्रयापेक्षत्वात् तदुपरि इति प्रस्तुतदेवानामन्वयः । देवानां **ज्योतिषि** ज्ञाने सर्ववस्तूनां भावादित्यर्थः । न मोक्षार्थविद्यास्वपि देवानामधिकारः । तदुक्तोपा-सनेऽर्थित्वाभावात् । द्विविधा ह्यर्थिता विद्याविचारे । ज्ञानाय फलाय चेति । तत्र न तेषां सार्वज्ञ्येन सर्वविद्योक्तज्ञानित्वाद् विद्यासाध्य-ज्ञानेऽर्थिताऽस्ति । मोक्षस्य प्राप्तप्रायत्वेन न फलेऽपीति भावः ।

**('देवानां समस्तविद्यास्वधिकारः' इति बादरायणमतवर्णनम्)**

एवं देवानां मुक्तिफलार्थासु तदितरफलार्थासु कास्वपि विद्यास्वधि-काराभावे जैमिनिमतावलम्बिना समर्थितं तमाक्षेपं समाधत्ते -

**ॐ भावं तु बादरायणोऽस्ति हि ॐ** (१-३-३३) इति ।।

**(सू.) बादरायणस्तु भावं** देवानामशेषविद्यास्वधिकारभावं मन्यते । **हि** यस्मान्मोक्षरूपे फले तद्धेतुज्ञाने च विद्योक्तोपासनादिभिरति-शयो**ऽस्ति** । 'यावत् सेवा परे तत्त्वे'[१] इत्यादिवाक्यादिति हेरर्थः ।

---

१. 'यावत् सेवा परे तत्त्वे' तावत्सुखविशेषता । सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ।। तेषां सामर्थ्ययोगाच्च देवानामप्युपासनं । सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च ।।' इति (ब्र.सू.भा.उ.स्कान्दवचनम्, पृ.३२४)

यद्यपि मधुविद्याफलं वसुत्वादिकं ब्रह्मज्ञानं च वस्वादीनामस्ति तथाऽपि ज्ञाने मोक्षे चातिशयार्थमुपासना युक्तेति फलितोऽर्थः । 'एकशतं हवै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास' (अनुपलब्धाकरा श्रुतिः) इत्यादिश्रुतिसिद्धश्च देवानामधिकार इत्यपि द्रष्टव्यम् ॥ ८ ॥

**॥ इति देवताधिकरणम् ॥ ८ ॥**

## ॥ ९ ॥ अथापशूद्राधिकरणम् ॥

### (त्रैवर्णिकेतराणां वेदविद्याधिकारनिरासः)

मनुष्याधिकारत्वादित्यनेन शूद्रस्यापि मनुष्यत्वादधिकारे प्रसक्ते प्रसङ्गाच्छूद्राणामधिकाराभावः समर्थ्यतेऽस्मिन्नये ।

### (सयुक्तिकपूर्वपक्षः सिद्धान्तश्च)

विशिष्टबुद्ध्यदिमत्त्वाद् देववच्छूद्रादिरपि वेदाधिकारी । नच 'अध्ययनमात्रवतः' (ब्र,सू. ३.४.१२) इत्युपनयनरहितस्यानधिकारस्य वक्ष्यमाणत्वाच्छूद्रे उपनयनाभावादनधिकार इति वाच्यम् । वैदिक-संवर्गविद्याश्रोतारं पौत्रायणं प्रति 'अह हारे त्वा शूद्र' (छा.उ. ४.२.३) इति रैक्वस्य सम्बोधनरूपलिङ्गेन शूद्रेऽप्युपनयनाध्ययनयोः कल्प्यत्वात् । यद्वा, शूद्रस्यानुपनीतस्यैवाध्ययनमस्तु । अथवाऽनधीयानस्यैव शूद्रस्य लिखितनिरीक्षितादिना वेदार्थज्ञानमस्तु । नच शूद्रशब्दः शोकेनाऽद्रवणाद् यौगिकः, रूढेर्बलवत्त्वादिति पूर्वपक्षे, सिद्धान्तयति-

**ॐ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॐ**

(१.३.३४) इति ॥

(सू.) अस्य तदिति च श्रुत्युक्तपरामर्शः । **तदाद्रवणात्** तया शुचा

**आ सम्यग् द्रवणात्** गमनान्निमित्तात् सर्वज्ञेन मुनिना पौत्रायणः शूद्रेति सम्बोधितः। नतु वर्णावरत्वाभिप्रायेणातो शूद्रेति सम्बोधनान्न पौत्रायणादेः शूद्रस्याधिकारसिद्धिः। **अस्य** पौत्रायणस्य **शुक्, तदनादरश्रवणात्** 'कम्वर एनमेतत्सन्तम्' (छा.उ. ४-२-३) इत्यादिना हंसकृतानादरश्रवणाज्जाता। श्रुतानादरस्यापि शोकोत्पत्तिः कुतो ज्ञायत इत्यत उक्तम्- **सूच्यते हि**। **हि** यस्मात् 'स ह सञ्जिहान एव क्षत्तारमुवाच' (छा.उ.४-१-५) इत्युक्तव्यग्रतया शोको ज्ञायत इत्यर्थः।

**('शूद्रशब्दो प्राबल्याद् रूढो भवतु' इति शङ्का, तत्परिहारश्च)**

ननु शुचा द्रवतीति योगः कुतः ? प्रबलत्वाच्छूद्रशब्दो रूढः किं न स्यादित्याशङ्कां परिहरति-

**ॐक्षत्रियत्वावगतेश्चोत्तरत्र[१] चैत्ररथेन लिङ्गात् ॐ**

(१-३-३५) इति॥

**(सू.)** अस्येत्यनुवर्तते। 'अयमश्वतरीरथः' (ब्र.सू.भा.उ.वचनम् १.३.३५) **इत्युत्तरवाक्ये चैत्ररथेन** चित्ररथसम्बन्धित्वेन लिङ्गाद् अस्य पौत्रायणस्य **क्षत्रियत्वावगतेश्च** न शूद्रशब्दो रूढ इत्यर्थः। 'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' (ब्र.सू.भा.उ.ब्राह्मवचनम्, पृ. ३३१) इत्युक्तेरश्वतरीरथत्वस्य[२] चित्ररथशब्दार्थताऽवगन्तव्या। 'सर्वत आवसथान्मा पृथां चक्रे' (छा.उ.) इत्याद्युत्तरवाक्यस्थं सर्वत आवसथनिर्माणग्रामेशत्वादिकं च लिङ्गान्तरं द्रष्टव्यम्। तथा च शूद्रशब्दस्य रूढित्वे[३] रथवत्त्वलिङ्गं

---

१. 'क्षत्रियत्वगतेश्चोत्तरत्र' इति ह. पाठः। (पृ. ४३)

२. गर्दभादश्वायां जाता, अश्वाद् गर्दभ्यां वा जाताऽश्वतरीत्युच्यते।

३. 'रुढत्वे' इति पाठेन भाव्यमिति भाति।

बाधकमित्याशयः । 'यत्र वेदो रथस्तत्र'[१] इति भाष्योक्तस्मृत्या शूद्रे रथायोगात् । अत्र रथोऽस्ति[२] ।

(त.दी.) रथेन लिङ्गेनेत्येव वाच्ये चित्रपदमपूर्वरथयोगात् क्षत्रियत्वसम्भावनार्थम् । चित्रेणेत्युक्तावपि तादृशरथेनेति सिद्धे रथोक्तिः स्पष्टार्था । चित्रेति वाच्ये चैत्रेत्युक्तिः 'हारेत्वा तव' (छा.उ. ४.२.३) इत्युक्तमुख्यस्वाभाविकसम्बन्धं द्योतयितुम् । तेन रथित्वमात्रस्य वैदिकमात्रेऽपि कथञ्चित् सम्भवाद् व्यभिचार इति न शङ्क्यम् । लिङ्गेनेति वाच्ये लिङ्गादित्युक्तिर्व्यत्ययात्, तृतीयापञ्चम्योर्हेतुरूपैकार्थत्वाद्वेति । उत्तरत्रेत्युक्तिस्तादृशरथबोधकवाक्यद्योतनाय । यद्वा, शूद्रेति सम्बोधनादुत्तरत्रेत्यर्थः । तेन शूद्रश्रुतितोऽपि लिङ्गस्य चरमत्वेन प्राबल्यं सूचयति । चशब्दः 'श्रद्धादेयो बहुदायी' (छा.उ.) इत्यादिवाक्यशेषस्थलिङ्गान्तरसमुच्चयार्थ इत्यप्येके । इति (पृ.सं. १४४,१४५)

## (शूद्रस्य वेदानधिकारे संस्काराभावरूपहेतुकथनम्)

इदानीं शूद्रस्य वेदानधिकारे हेतुमाह -

**ॐ संस्कारपरामर्शात् तदभावाभिलापाच्च ॐ** (१-३-३६) इति ॥

(सू.) 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' (ब्र.सू.भा.उ.श्रुतिः, पृ. ३३३) इत्यध्ययनार्थमुपनयनाख्य**संस्कारपरामर्शात्** । शूद्रस्य 'न यज्ञो न संस्कारः'[३] इति **संस्काराभावोक्तेश्च** न शूद्रस्य वेदविद्याधिकार इत्यर्थः ।

---

१. 'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः' इति (ब्र.सू.भा.उ.ब्रह्मवैवर्तवचनम्, पृ.३३१)

२. 'शोधोऽस्ति' इति मातृकागतः पाठः प्रामादिकः ।

३. 'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य' इति (ब्र.सू.भा.उ. पैङ्गिश्रुतिः, पृ.३३३)

**('शूद्रं नोपनयीत' इत्यनिषेधेन तस्यापि संस्कारसम्भवाद् वेदविद्याधिकारोऽस्तु इति शङ्का तन्निरासश्च)**

यदुक्तमध्ययनस्य संस्कारसापेक्षत्वाच्छूद्रस्य नाधिकार इति न तद् युक्तम्। शूद्रस्यापि संस्कारसम्भवात्। 'न यज्ञः' (ब्र.सू.भा.उ.पैङ्गिश्रुतिः, पृ.३३३) इति श्रुतौ संस्काराभावमात्रस्यैवोक्तेर्निषेधाभावादित्याशङ्कां परिहरति-

**ॐ तदभावनिर्धारणे च प्रवृत्तेःॐ** (१-३-३७) इति ॥

**(सू.)** 'नैतदब्राह्मणो विवक्तुमर्हति' (छा.उ. ४-५) इति सत्यकामस्य **शूद्रत्वाभावनिर्धारणे सत्येव** तदुपनयने गौतमस्य **प्रवृत्तत्वाच्चाधिकार-** निषेधो ज्ञायत इत्यर्थः। शूद्रत्वाभावनिर्धारणेन प्रवृत्त्यन्यथानुपपत्त्या शूद्रोपनयननिषेधो ज्ञायत इति तात्पर्यम्।

**(विशिष्टबुद्ध्यादिमत्त्वेन शूद्रस्य वेदाधिकारित्वशङ्का, तन्निरासश्च)**

शूद्रो वेदविद्याधिकारी विशिष्टबुद्ध्यादिमत्त्वाद् द्विजवत्। अन्यथा देवताद्यधिकारसिद्धिर्न स्यादित्याशङ्कां परिहरति -

**ॐ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॐ** (१-३-३८) इति ॥

**(सू.)** वेदादि**श्रवणाध्ययनार्थावधारणानां** 'श्रवणे त्रपुजतुभ्यां श्रोत्र-परिपूरणम् अध्ययने जिह्वाच्छेदः अर्थावधारणे हृदयविदारणम्' (ब्र.सू.भा. उ. गौतमधर्मवचनम् १२.४......७, पृ.३३८) इत्यादि**प्रतिषिद्ध-त्वात्**। 'नाग्निर्न यज्ञः शूद्रस्य' (ब्र.सू.भा.उ. पैङ्गिश्रुतिः, पृ.३३३) इत्यादि**स्मृतेश्च** न शूद्रस्य वेदादावधिकार इत्यर्थः। अनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वस्यैवाधिकारप्रयोजकत्वेन केवलविशिष्टबुद्ध्यादि-मत्त्वस्याधिकारासाधकत्वादिति भावः।

**(परपक्षसाधकनिरासात् पूर्वं स्वपक्षसाधकाकथने चन्द्रिकोक्तकारणम्)**

यद्यप्यत्राऽऽद्यसूत्रस्थपरपक्षसाधकनिरासादपि द्वितीयादिसूत्रस्थ-स्वपक्षसाधकमेव पूर्वं वक्तव्यमिति संस्कारेत्यादिसूत्रत्रयं निर्माय, शुगस्येत्यादिसूत्रद्वयं प्रणेयम् । तथाऽपि शूद्रशब्दबलादेव सिद्धान्त-हेतूनामन्यथयितव्यत्वेन तन्निरासं विना तेषामसिद्धेः तथा परपक्षनिरासे यत्नाधिक्यात् स्वपक्षसाधकानां तु स्फुटत्वात् तेषां पश्चादुक्तिरिति **चन्द्रिकायां** व्यक्तम् ।

**॥ इत्यपशूद्राधिकरणम् ॥ ९ ॥**

**(त.दी.)** श्रुतौ शूद्रपदानुक्तेः पृथक् स्मृत्युक्तिः। **( पृ.सं.१४९ )**

**॥ अथ कम्पनाधिकरणम् ॥ १० ॥**

**(ब्रह्मणि वज्रनामसमन्वयः)**

अत्र वज्रनाम समन्वीयते ।

ननु तस्य लोकतोऽन्यत्र प्रसिद्धस्याऽऽद्यपादे समन्वयो युक्तः । ब्रह्मलिङ्गैर्ब्रह्मण्यपि प्रसिद्धिश्चेद् आकाशादिशब्दानामपि सा स्यात् । 'आयुधानामहं वज्रः' (भ.गी. १०.२८) इति प्रयोगाद् ब्रह्मणि प्रसिद्धि(द्धे)श्चेत् प्राणादिशब्दानामपि सा स्यात् । 'ईशानः प्राणदः प्राणः' (वि.स. श्लो. ८) इत्यादि-प्रयोगात् ।

किञ्च, 'वज्रमुद्यतम्' (कठ.उ.२-३-२) इति वाक्यात् पूर्वं 'तदेव शुक्रं तद्ब्रह्म ' (क.उ. २.३.१) इति 'भयादस्याग्निस्तपति भयात् तपति सूर्यः' (क.उ. २.३.३) इत्याद्युत्तरत्र च श्रवणाद् ब्रह्मप्रकरणमिदम् । वज्रवाक्य एव च 'य एतद्विदुरमृतास्ते भवन्ति' (कठ.उ. २-३-२) इति निर्णीतानि ब्रह्मलिङ्गानि सन्ति । वज्रशब्दस्त्वाकाशादिशब्दवद्

यौगिकोऽस्तु । तस्मान्न पूर्वपक्षोदय इति चेत् । न । यथाऽऽहितमेतत् सकलदुर्वादिकरिकण्ठीरवेण **चन्द्रिकायां** नेह विस्तरभियोच्यते ।

(पूर्वपक्षसिद्धान्तौ)

'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद् भयं वज्रमुद्यतं' (कठ.उ. २-३-२) इति काठकोक्तं वज्रमिन्द्रायुधमेवेति प्राप्ते, सिद्धान्तयति -

**ॐ कम्पनात् ॐ** (१-३-३९) इति ॥

**(सू.)** अत्र हेतुमात्रोक्तावपि योग्यस्य प्रतिज्ञापदस्याध्याहारः कार्यः । एजतीति **कम्पनवचनात्** जगच्चेष्टकत्वलिङ्गादिति यावत् । 'वज्रमुद्यतम्' (कठ.उ. २-३-२) इत्युक्तवज्रो विष्णुरेवेत्यर्थः ।

॥ इति कम्पनाधिकरणम् ॥ १० ॥

**॥ अथ ज्योतिरधिकरणम् ॥ ११ ॥**

**(भगवति ज्योतिर्नामसमन्वयः)**

'ज्योतिश्चरणाभिधानात्' (ब्र.सू.१-१-२४) इति पूर्वं समन्वितत्वेनोभयत्र प्रसिद्धस्य ज्योतिर्नाम्नः समन्वयः ।

(पूर्वपक्षसिद्धान्तौ)

'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ.उ. ६.३.७) इति वाजसनेयके श्रुतं ज्योतिः 'उभौ लोकावनुसञ्चरति' (बृ.उ. ६.३.७) इत्यादिजीवलिङ्गाज्जीव एवेति पूर्वपक्षे, सिद्धान्तयति -

**ॐ ज्योतिर्दर्शनात् ॐ**(१-३-४०) इति ॥

(सू.) ब्रह्मैवेदं **ज्योतिः** । **दर्शनात्** 'विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म

विष्णुरेवाऽत्मा'[१] इत्यादिश्रुतेरित्यर्थः । उभयलोकसञ्चरणं तु 'प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद्याति' (बृ.उ. ६-३-३५) इति श्रुतेर्जीवमादायेश्वरस्यैवोपपन्नमित्याशयः ।

॥ इति ज्योतिरधिकरणम् ॥ ११ ॥

(त.दी.) प्राक् समन्वितत्वेऽप्युभयत्र प्रसिद्धत्वेन पृथगुक्तिः। एवमग्रेऽपि। ( पृ.सं.१५१ )

## ॥ अथाऽकाशाधिकरणम् ॥ १२ ॥

### (भगवत्याकाशशब्दसमन्वयः)

अत्र नये 'आकाशस्तल्लिङ्गात्' (ब्र.सू. १-१-२२) इत्यत्र ब्रह्मण्याकाशशब्दप्रयोगस्य दर्शितत्वाद् ब्रह्मणि, प्रयोगवशाद् गगने चेत्युभयत्र प्रसिद्धस्याऽकाशनाम्नः समन्वयः कथ्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' (छा.उ.८-१४-१) इति छन्दोगश्रुतौ प्रतीत आकाशः प्रसिद्धाकाश एव । 'हवै नाम' इति लोकप्रसिद्धतोक्तेरिति प्राप्ते, सिद्धान्तयति -

**ॐआकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ** (१-३-४१) इति ॥

(सू.) 'ते यदन्तरा तद्ब्रह्म' (छा.उ.८-१४-१) इति नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशाद् ब्रह्मत्वव्यपदेशाच्चाऽकाशो विष्णुरेवेत्यर्थः ।

साकल्येन शब्दागोचरत्वरूपमनामत्वं प्राकृतरूपराहित्याख्यमरूपत्वं

१. 'विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म विष्णुरेवाऽत्मा विष्णुरेव बलं विष्णुरेव यज्ञो विष्णुरेवाऽनन्दः' इति (ब्र.सू.भा.उ.चतुर्वेदशिखाश्रुतिः, पृ. ३४४)

च 'यतो वाचो निवर्तन्ते' (तै. २-४) 'अरूपम्' (क.उ. १.३.१५) इत्यादिश्रुतिभिर्ब्रह्मण्येव प्रसिद्धम्। नच निपातविरोधः। वैदिकेषु प्रयोगेषु वैदिक्येव प्रसिद्धता ग्राह्या। ब्रह्मणो हि सर्ववेदेषु महातात्पर्यतः प्रसिद्धिर्नैवं गगनस्येत्याशयः। यद्वा, 'ते यदन्तरा' (छा.उ. ८-१४-१) इति द्विवचनेऽनामरूपत्वयोः साहित्यप्रतीतावपि ब्रह्मत्वे निरपेक्षयोरेव हेतुत्वमिति भावेनारूपत्वमर्थान्तरपदेनाऽऽदिपदेन त्वनामत्वमुक्तम्। अस्मिंश्च पक्षे ब्रह्मत्वादिकं प्रसिद्धत्वाच्छिष्यैरेवोहितुं शक्यमिति न तस्याऽऽदिपदेन ग्रहणमिति **चन्द्रिकोक्तं** टीकानुसारेणैवार्थान्तरं च ज्ञेयम्॥ १२॥

**॥ इत्याकाशाधिकरणम्॥ १२॥**

(त.दी.) अर्थान्तरत्वमात्रोक्तावपि 'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतम्' (छा.उ. ८-१४-१) इति विषयवाक्ये सन्निहितत्वाद् अनामरूपत्वरूपविशेषसिद्धिः। यद्वा, अर्थान्तरत्वम-रूपत्वमादिपदेनानामत्वं ग्राह्यम्। प्राकृतरूपराहित्यात् साकल्येन शब्दागोचरत्वरूपानामत्वाच्चेत्यर्थः। निरपेक्षहेतुत्वं सूचयितुं पृथगुक्तिः। इति (पृ.सं.१५२,१५३)

## ॥ अथ सुषुप्त्यधिकरणम्॥ १३॥

### (भगवति स्वप्नादिद्रष्टृत्वलिङ्गसमन्वयः)

अत्र स्वप्नादिद्रष्टृत्वलिङ्गस्य समन्वयः।

### (पूर्वपक्षसिद्धान्तौ)

'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रति योन्या द्रवति स्वप्नायैव' (बृ.उ. ६-३-१५) इति वाजसनेयके प्रतीतं स्वप्नादिद्रष्टृत्वं जीवस्यैव, असङ्गत्वादि-लिङ्गानामीशाभेदविवक्षया जीव एव सम्भवादिति प्राप्ते, सिद्धान्तयति-

ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ (१-३-४२) इति ॥

(सू.) पूर्वसूत्राद् 'व्यपदेशात्' इत्यनुकृष्यते । सहेतुकं प्रतिज्ञापदं चाध्याहार्यम् । स्वप्नादिद्रष्टा विष्णुरेव । 'अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' (बृ.उ. ६.३.१५) इत्यसङ्गत्वलिङ्गात् । न चाभेदेन लिङ्गोक्तिः । 'प्राज्ञेनाऽत्मना सम्परिष्वक्तः' (बृ.उ. ६.३.२१) इति सुषुप्तिप्रकरणे 'प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद्याति' (बृ.उ.६.३.२१) इत्युत्क्रान्तिप्रकरणे च जीवेशयोर्भेदेन व्यपदेशादित्यर्थः । सुषुप्तिप्रकरणस्य मोक्षपरतायाः 'स्वाप्ययसम्पत्त्योः' (ब्र.सू.४.४.१६)इति वक्ष्यमाणत्वेन मुक्तावपि सतो भेदस्य मिथ्यात्वायोगादित्यपि हृदयम् ॥१३॥

॥ इति सुषुप्त्यधिकरणम् ॥ १३ ॥

## ॥ १४ ॥ अथ ब्राह्मणाधिकरणम् ॥

### ( भगवति ब्राह्मणनामसमन्वयः)

अत्र नये ब्राह्मणनाम्नः समन्वय उच्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'एष नित्यो महिमा ब्राह्मणस्य' (बृ.उ. ६.४.२२) 'न कर्मणा वर्धते नो कनीयान्' (बृ.उ.६.४.२२) इति वाजसनेये श्रुतो ब्राह्मणो विरिञ्चः। 'स वा एष महानज आत्मा' (बृ.उ. ६-४-२४) इत्यजशब्दादिति प्राप्ते, सिद्धान्तयति-

ॐ पत्यादिशब्देभ्यः ॐ (१-३-४३) इति ॥

(सू.) 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' (बृ.उ. ६.४.२१) इति सर्वाधिपतित्वादि[१]वाचकशब्देभ्यः 'एष नित्यः' (बृ.उ. ६.४.२२)

१. 'सर्वाधिपत्यादि' इति क. पाठः ।

इति वाजसनेयोक्तो ब्राह्मणो विष्णुरेवेत्यर्थः । निरुपचरित-सर्वाधिपत्यं तु 'उतामृतत्वस्येशानः' (तै.आ. ३-१२) इत्यादौ विष्णोरेवोक्तमिति भावः । न जायत इत्यजशब्दस्य विष्णावेव सावकाशत्वान्न विष्णोर्ब्रह्मत्वे तद्विरोध इति ज्ञेयम् ।

**(श्रुत्यनुसारं 'वश्यादिशब्देभ्यः' इत्यनुक्त्वा 'पत्यादिशब्देभ्यः' इति कथने कारणोक्तिः)**

ननु वाजसनेये 'सर्वस्य वशी' (बृ.उ. ६-४-२१) इति वशित्वस्याऽदित्वेन 'वश्यादिशब्देभ्यः' इति वक्तव्यमिति चेत् । सत्यम् । तथाऽपि 'सर्वस्याधिपतिः सर्वस्येशानः' (बृ.उ.६-४-२१) इति भाष्योदाहृतशाखान्तरे पतिशब्दस्याऽदित्वात् तदनुसारेण पत्यादीत्युक्तम् । टीकायां 'ब्रह्मणा वेदेन गम्यते' इति व्युत्पत्त्या हि ब्राह्मणशब्दोऽवाचि तर्हि ब्रह्म अण इत्यत्र सवर्णदीर्घे ब्रह्माण इति भाव्यमित्याशङ्क्य स्वरव्यत्ययस्याधिकार्थत्वादित्युक्तम् । 'आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितम्' (ऋ.भा.उ. वचनम्) इति ऋग्भाष्ये उक्तत्वाद् आधिक्येन वेदगम्यत्वविवक्षया स्वरशब्दित-दीर्घव्यत्यासेन ब्राह्मण इति युक्तमिति ध्येयम् ॥ १४ ॥

॥ इति ब्राह्मणाधिकरणम् ॥ १४ ॥

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे प्रथमाध्यायस्य तृतीयः पादः ॥***

*. एतदनन्तरं लिपिकृतः कतिपयवाक्यानि उपलभ्यन्ते- 'विरोधिकृत्संवत्सरवैशाखकृष्णसप्तम्यां गुरुवासरे धनिष्ठानक्षत्रे अपराह्णे बिदरहळ्ळिरघुपतिना लेखनमिदं कृतम्' इति ।

# अथ प्रथमाध्यायस्य चतुर्थः पादः

## (अन्यत्रैव प्रसिद्धनामलिङ्गात्मकशब्दसमन्वयः)

ब्रह्मशब्देन सर्वगुणपूर्णत्वसिद्धौ प्रतिज्ञातसर्वशब्दसमन्वयसिद्धये श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानां नामलिङ्गात्मकानां शब्दानां समन्वयोऽस्मिन् पाद उच्यते ।

## (भगवति श्रुत्युक्ताव्यक्तादिशब्दसमन्वयः)

तत्राऽद्यनये ऐश्वर्यविरोध्यवरत्वदुःखित्वाद्यर्थकाः शब्दाः सिद्धरूप-देवताक्रमवाचकाः 'इन्द्रियेभ्यः' (कठ. १-३-११) इत्यादिस्थाः शब्दाश्च समन्वीयन्ते ।

## (पूर्वपक्षसिद्धान्तौ)

'महतः परमव्यक्तम्' (कठ. १-३-११) इत्यादिकाठके श्रुताव्यक्तादि-पदवाच्यं प्रधानाद्येव । अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धेः । 'अव्यक्तात् पुरुषः परः' (कठ. १-३-११) इति पञ्चम्या परत्वावधित्वेन श्रुतावरत्वादिलिङ्गाच्चेति पूर्वपक्षनिरासपूर्वकं सिद्धान्तयति -

**ॐ आनुमानिकमप्येकेषामिति चेन्न**
**शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ (१-४-१)**

(सू.) साङ्ख्यानुमानपरिकल्पितं प्रधानाद्येवाव्यक्तादिशब्दवाच्यं न विष्णुः। यतः 'अव्यक्तात् पुरुषः परः' (कठ. १-३-११) इति केषाञ्चिच्छाखास्ववरत्वादिलिङ्गाद् अव्यक्तादिशब्दैः प्रधानाद्येवोच्यत इति चेन्न । **शरीरस्य रूपमिव रूपं पारतन्त्र्यादिकं यस्य तत्तथा ।** कप्रत्ययेन मुख्यतो नेश्वरशरीरं, जडत्वादिना कुत्सितत्वादित्यभि-प्रैति । यथा शरीरं पुरुषतन्त्रं तथा परमात्मतन्त्रत्वे शरीरसमे प्रधानादौ

**विन्यस्तस्य** नियामकत्वादिना स्थितस्य विष्णोरव्यक्तादिपदेन **गृहीतेः** विष्णुरेवाव्यक्तादिशब्दवाच्यः । 'अव्यक्तमचलं शान्तम्'[१] इति **श्रुतिर्दर्शयति** विष्णोरव्यक्तपदवाच्यत्वम् । चशब्दाद् 'अव्यक्तोऽक्षरः' (भ.गी. ८-२१) इति स्मृतिश्चेत्यर्थः ।

**(सूत्रस्थविन्यस्तशरीररूपपदयोः प्रयोजनवर्णनम्)**

ब्रह्मणोऽव्यक्तादौ विन्यस्तत्वेनाव्यक्तादेरपि ब्रह्मसम्बद्धत्वाद् वाच्यतेति विन्यस्तपदं प्रयुञ्जानस्य भावः । प्रधानादिसम्बन्धाद् ब्रह्मणो वाच्यत्वमिति विपरीतं, उभयोर्मुख्यवाच्यत्वं वा किं न स्यादिति शङ्कापनोदाय प्रधानादेर्भगवत्तन्त्रत्वेनोभयोर्मुख्यवाच्यत्वं वा किं न स्यादिति शङ्कापनोदाय प्रधानादेर्भगवत्तन्त्रत्वेनोभयोर्मुख्यवाच्यस्योक्त-विपर्ययस्य चायोगादिति भावेन शरीररूपपदम् ।

**(त.दी.)** आनुमानिकमिति जीवादेरुपलक्षणम् । तथा 'अनेन जीवेनाऽ-त्मना' (अनुपलब्धाकरा श्रुतिः) इति श्रुतिः । 'जीवो विनयिता साक्षी'(वि.स.श्लो. ५४) इति स्मृतिश्चाव्यक्तादि ब्रह्मेति यतो दर्शयति तस्मादित्यर्थः । इति ( पृ.सं.१५८,१५९ )

**(अव्यक्तादिशब्दानां भगवति मुख्यत्वं कुत इति शङ्का ,तत्समाधानं च)**

नन्वस्त्वेवं श्रौतस्मार्तप्रयोगबलेनाव्यक्तादिशब्दानां भगवद्वाचि-त्वम् । तत्र तेषां मुख्यत्वं कुतः?प्रयोगस्यामुख्यवाच्येऽपि सम्भवादित्याशङ्कां परिहरति -

**ॐ सूक्ष्मं तु तदर्हत्वात् ॐ** ( १-४-२ ) इति ।।

---

१. 'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् । यो वेद हरिमात्मानं स भयादनुमुच्यते ।।' इति (ब्र.सू.भा.उ.पिप्पलादश्रुतिः, पृ. ३६०)

(सू.) तुशब्दोऽवधारणे । **सूक्ष्ममेवाव्यक्तशब्देनोच्यते** । तस्य सूक्ष्मत्वार्हत्वाद् अव्यक्तत्वयोग्यत्वात् । **तस्य ब्रह्मणस्तदर्हत्वात्** सूक्ष्मत्वादित्यर्थः । अव्यक्तशब्दप्रवृत्तिनिमित्तस्य सूक्ष्मत्वस्य परमेश्वर एव मुख्यत्वात् स एव मुख्याव्यक्त इति हृदयम् ।

(त.दी.) जीवादिपदनिमित्तप्राणधारकत्वादेरुपलक्षणमेतत् । (अव्यक्तत्वं) (पृ.सं.१६१)

**('अव्यक्तात् पुरुषः' इत्यत्राव्यक्तशब्दवाच्यत्वं न भगवत इति शङ्का तत्समाधानं च)**

ननु 'अव्यक्तात् पुरुषः परः' (कठ.उ.१-३-११) इति पञ्चम्याक्षिप्ता-वरत्वादेरयोगेन पञ्चमीवैयर्थ्यान्न विष्णुरव्यक्तशब्दार्थ इत्यत आह -

ॐ **तदधीनत्वादर्थवत्** ॐ (१-४-३) इति ॥

(सू.) **तदिति** तन्त्रेण समस्तं भिन्नं च पदम् । आद्ये षष्ठ्यन्तम् । द्वितीये प्रथमान्तं सप्तम्यर्थं च । 'सप्तसु प्रथमा' (पा.सू.) इति सूत्रात् । **तेषां** प्रधानादिगतावरत्वादिधर्माणां **तदधीनत्वात्** **तस्य** भगवतोऽ-**धीनत्वात् तत्** अवरत्वादिवाच्यव्यक्तादिपञ्चम्यन्तशब्दजातं **तस्मिन्** विष्णाव**र्थवत्** । सार्थकमित्यर्थः । अवरयतीत्यादि व्युत्पत्त्याऽन्य-गतावरत्वादेस्तदधीनत्वाद् राज्ञि जयशब्दप्रयोगवद् अवरादिशब्दो युज्यत इति भावः ।

**(युक्त्यन्तरेण भगवतोऽव्यक्तादिवाच्यत्वोपपादनम्)**

युक्त्यन्तरेणाव्यक्तादिवाच्यत्वमुपपादयति -

ॐ **ज्ञेयत्वावचनाच्च** ॐ (१-४-४ ) इति ।

(सू.) 'तमेवैकं जानथ आत्मानम्' (मुण्डक. २-२-५) इति विष्णोरेव

**मुमुक्षुज्ञेयत्ववचनाद्** अन्यस्य च **तदवचनाच्च** विष्णोरेवाव्यक्तादिशब्दवाच्यत्वं न प्रधानादेरित्यर्थः । विष्णुतदन्ययोर्मोक्षार्थं ज्ञेयत्वोक्त्यनुक्तिभ्यां मोक्षफलकानां वेदानां ब्रह्मपरत्वसिद्धेः प्रतिवाक्यं च तत्परत्वस्य 'आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते'[1] इत्यादिवचनसिद्धत्वात् स्वतः- प्राप्तमुख्यवृत्तित्यागे च हेत्वभावाद् ब्रह्मैवाव्यक्तादिशब्दमुख्यार्थ इति भावः।

**(पूर्वोक्ताक्षेपेण समाधानम्)**

उक्तमाक्षिप्य समाधत्ते-

**ॐ वदतीति चेन्न प्राज्ञो हि ॐ** (१-४-५) इति ॥

(सू.) 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' (कठ.उ. १.३.१५) इति श्रुतिः महत्परत्वेन लिङ्गेनाव्यक्तस्यापि मुमुक्षुज्ञेयत्वं **वदतीति** पूर्वसूत्रोक्तं प्रधानस्य मोक्षार्थं ज्ञेयत्वावचनमसिद्धमिति **चेत्। न। हि** यस्मात् **प्राज्ञः** परमात्मा 'महतः परम्' (कठ.उ.१.३.१५) इति वाक्ये उच्यते इत्यर्थः । सर्वस्मात् परे महतः परत्वं युज्यत इत्याशयः ।

**('अनाद्यनन्तं' इति वाक्यं प्रकृतिपरमेवेति शङ्का विष्णुप्रकरणत्वाद् विष्णुपरमेवेति समाधानम्)**

'अनाद्यनन्तं महतः परं ध्रुवम्' (कठ.उ.१-३-१५) इति वाक्यस्य विष्णुपरत्वग्रहणे कारणाभावात् प्रधानमेवोच्यत इत्यत आह -

**ॐ प्रकरणात् ॐ** (१-४-६ ) इति ॥

---

१. 'वेदे रामायमणे चैव पुराणे भारते तथा । आदावन्तें च मध्ये च विष्णुः सर्वत्र गीयते ॥' इति (ब्र.सू.भा.उ. हरिवंशवचनम्)

(सू.) 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (क.उ.१.३.९) इत्येतत्प्रकरणार्थोपासकस्य विष्णुपदप्राप्त्युक्त्या विष्णुप्रकरणाद् इत्यर्थः। ततश्च न प्रधानस्य प्रतिपाद्यत्वमिति (आशयः) भावः।

**('अनाद्यनन्तं' इति वाक्ये नान्यस्य प्रतिपाद्यतेत्यत्र हेत्वन्तरकथनम्)**

हेत्वन्तरेणानाद्यनन्तादिवाक्येऽन्यस्य प्रतिपाद्यतां पराकरोति -

**ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ** (१-४-७) (इति ॥)

(सू.) आद्यश्चशब्दो यस्मादिति हेत्वर्थः। द्वितीयो युक्तिसमुच्चयार्थः। यस्माद् एवं 'वीतमन्युस्त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम्।' (क.उ. १.१.११) 'स्वर्ग्यमग्निं नचिकेतः प्रजानन्' (क.उ. १.१.१४) 'देवैरत्रापि विचिकित्सितं किल' (क.उ. १.१.२२) इति प्रकारेण **त्रयाणां** पितृसौमनस्यस्वर्ग्याग्निपरमात्मनाम् **एवोपन्यासो**ऽतश्च प्रधानस्याप्रतिपाद्यता। न केवलं विष्णुप्रकरणादिति चार्थः।

त्रयाणामेवोपन्यासः कुतः ? इत्यत उक्तम्- 'सुमना यथा स्याद् वीतमन्युः' (क.उ. १.१.१०) 'स त्वमग्निं स्वर्गमध्येषि मृत्यो प्रब्रूहि तम्' (क.उ. १.१.१३) 'येयं प्रेते विचिकित्सा मनुष्ये' (क.उ. १.१.१३) इति **एतत्त्रयविषय एव** नचिकेतसः **प्रश्नो** यतः अत **उपन्यासो**ऽपि त्रयविषय इत्यर्थः। त्रयाणां मध्ये प्रधानमप्येकं किं न स्यादित्याशङ्कां निरसितुं प्रकारार्थकैवंशब्दः।

**(प्रश्नस्य प्राथम्यात् 'प्रश्न उपन्यासश्च' इति सूत्रे कुतो नोक्तमिति शङ्का, तन्निरासश्च)**

ननु प्रश्नस्य प्राथम्यात् प्रश्न उपन्यासश्चेति वाच्यमिति चेत्। सत्यम्। प्रश्नस्य प्राथम्येऽपि प्रतिवचनस्य निचाय्य तमिति निचाय्य-

वाक्यस्य प्रधानपरतायाः शङ्कितत्वात् तन्निरासाय प्रतिवचनस्याऽदौ निर्देश इति **चन्द्रिकायां** समाहितत्वात् ।

(त.दी.) त्रयाणामेव चेत्येव पूर्तविवमित्युक्तिस्त्रयमध्ये प्रधानस्य न निवेश इति दर्शयितुं प्रकारत्रयोक्त्यर्थाः। उपन्यासस्योक्तत्रयविषयत्वसिध्यै प्रश्नोक्तिः। इति (पृ.सं.१६७)

**('अव्यक्तादिशब्दवाच्यत्वं विष्णोरेव' इत्यत्र दृष्टान्तकथनम्)**

विष्णोरेवाव्यक्तादिशब्दवाच्यत्वे दृष्टान्तमाह -

**ॐ महद्वच्च ॐ** (१-४-८) इति ॥

(सू.) चशब्दो दार्ष्टान्तिकसमुच्चयार्थः । **महच्छब्दस्य** महत्तत्त्वे प्रसिद्धत्वेऽपि 'महान्तं विभुमात्मानम्' (क.उ.१.२.२२) इत्यादौ तत्प्रवृत्तिनिमित्तस्य मुख्यत्वाद् विष्णुवाची **एवमव्यक्तादिशब्दानां** प्रधानादौ प्रसिद्धत्वेऽपि प्रवृत्तिनिमित्तातिशयेन विष्णुवाचकत्वमित्यर्थः।

**(अव्यक्तादिशब्दानां प्रकृत्यादौ प्रसिद्धत्वेऽपि विष्णुपरत्वमेवेत्यत्र चमसरूपदृष्टान्तान्तरकथनम्)**

प्रसिद्धिबलात् प्रधानवाचकत्वमेवाव्यक्तादिशब्दानामित्याशङ्कामपाकर्तुं दृष्टान्तान्तरमाह -

**ॐ चमसवदविशेषात् ॐ** (१-४-९) इति ॥

(सू.) यथा **चमस**शब्दः यज्ञपात्रे प्रसिद्धोऽपि 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ.उ. ४.२.३) इति श्रुतिरूपानुशासनाच्छिरोवाचकः एवं 'नामानि सर्वाणि'[1] इत्यनुशासनादन्यत्र

---

१. 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ॥' इति (ब्र.सू.भा.उ.भाल्लवेयश्रुतिः, पृ. ३७३)

प्रसिद्धोऽप्यव्यक्तादिशब्दः विष्णुवाची । 'नामानि' इति प्रयोगस्य वृत्त्यन्तरं किं न स्यादित्यत उक्तम्- 'नामानि सर्वाणि' (ब्र.सू.भा.उ. भाल्लवेयश्रुतिः) इति श्रुतेरप्यनुशासनरूपत्वेन 'इदं तच्छिरः' (बृ.उ. ४.२.३) इति श्रुतितोऽविशेषात् श्रुतित्वसाम्यादित्यर्थः ।। १ ।।

।। इत्यानुमानिकाधिकरणम् ।। १ ।।

## ।। अथ ज्योतिरुक्रमाधिकरणम् ।। २ ।।

### (एतदधिकरणप्रतिपाद्यविषयः - श्रुत्युक्तज्योतिष्टोमादिकर्माभिधायकशब्दसमन्वयः)

अस्मिन्नये साध्यरूपकर्मतत्क्रमादिवाचिनां शब्दानां पदवर्णादिरूपेण समन्वयः कथ्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'वसन्ते वसन्ते ज्योतिषा यजेत' (ब्र.सू.भा.उ.श्रुतिः) इत्यादिषु श्रुतज्योतिरादिशब्दवाच्यत्वं प्रसिद्धत्वाद् ज्योतिरादेरेवेति पूर्वपक्षे, सिद्धान्तयति -

**ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ** (१-४-१०) इति ।।

(सू.) उपक्रमादिति ल्यब्लोपनिमित्ता पञ्चमी । **तु**शब्द एवार्थे । **ज्योतिरा**दिशब्दाभिधेयो विष्णुरेव । **हि** यस्मात् 'एष इमं लोकमभ्यार्चत्' (ऐ.आ. २-२-२०) **इत्युपक्रमं** विधाय **एके** शाखिनः 'ता वा एताः सर्वा ऋचः सर्वे वेदाः'[1] इति **तथा** सर्वशब्दाभिधेयत्वेन हरि**मेवाधीयते** पठन्तीत्यर्थः । अत्र यद्यपि विषयवाक्ये वसन्तादिशब्दः

---

१. 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' इति (ऐ.आ. २-२-२, पृ. ३७६)

प्रथमं प्रयुक्तस्तथाऽपि फलकरणत्वादिना प्रधानकर्माभिधायकत्वात् तस्यैवान्योपलक्षकत्वसम्भवाच्च सूत्रे ज्योतिश्शब्दः प्रयुक्तः ।

(त.दी.) महायोगविद्वद्रूढ्योः प्रदर्शनायोपक्रमात्त्वित्युक्तिः । (पृ.सं.१७२)

**(भगवतः कथं ज्योतिरादिशब्दवाच्यत्वम् ? इति शङ्का , तन्निरासश्च)**

ननु कथं ज्योतिरादिशब्दवाच्यत्वं परमात्मनः सम्भवति ? कर्म-क्रमादिविरोधाद् व्युत्पत्त्यसम्भवाच्चेत्यत आह -

**ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधःॐ** (१-४-११) इति ॥

(सू.) चशब्द एवार्थः बुद्ध्या विवेकेन (विविक्तेन) कल्पनायैवेति सम्बध्यते । तथा च सर्वशब्दवाच्यत्वेन **कल्पनायैव** उपासनार्थमेव 'ता वा एताः' (ऐ.आ. २-२-२) इत्यादिना **उपदेशादविरोधश्च** कर्माद्यनु-ष्ठानविरोधो व्युत्पत्त्ययोगो नेत्यर्थः । न केवलं सर्वशब्दवाच्यत्वाङ्गीकारे 'तथा ह्यधीयत एके' (ब्र.सू. १.४.१०) इत्युक्तसाधकसद्भाव इति समुच्चयार्थश्च चशब्दः । **मध्वादिवत्** यथा मधुविद्यायाम्- 'असौ वा आदित्यो देव मधु' (छा.उ. ३-१-१) इत्यादिना मधुशब्दादेरादित्यादि-गतविष्णूपासनार्थमुक्तत्वेऽपि लौकिकक्षौद्रादिमधुवाचकाभावेन न तदभावविरोधस्तद्वदित्यर्थः । एवं च ज्योतिरादिशब्दानामन्यत्र रूढिर्योगो, योगरूढी, रूढोपचारः, रूढलक्षणा, उपचारः, लक्षणेति सप्तवृत्त्यङ्गीकारात् कर्माद्यभावरूपविरोधो नास्ति । महायोगवृत्त्या ईश्वरवाचित्वाङ्गीकाराद् व्युत्पत्त्यादिविरोधोऽपि नास्तीति फलितोऽर्थः ॥ २ ॥

**॥ इति ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥**

## ॥ अथ नसङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

### (भगवति बहुत्ववाचकपञ्चजनादिशब्दसमन्वयः)

अत्र बहुत्ववाचकानां शब्दानां समन्वयः कथ्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' (बृ.उ. ६-४-१७) इति बृहदारण्यकवाक्यस्थपञ्चजनादिशब्दानां बहुत्वविशिष्टवाचित्वाद् अद्वितीये ब्रह्मणि बहुत्वस्य चायोगात् पञ्चजनादिशब्दवाच्यो न विष्णुरिति पूर्वपक्षे, सिद्धान्तयति -

**ॐ.न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ**

(१-४-१२) इति ॥

(सू.) **अपि**शब्दात् पूर्वसूत्राद् विरोधपदमाकृष्यते । विष्णुरेव पञ्चजन-शब्दवाच्यः । तर्हि बहुवचनादिविरोध इत्यतः सूत्रम् - **सङ्ख्योप-सङ्ग्रहात्** । पञ्चत्वसङ्ख्योपेतजन इत्युक्तेः । उपलक्षणमेतत् । यस्मिन् ब्रह्मणि इत्युक्त्याऽऽधाराधेयभावादपि **न** विरोधः । बहुत्वानुपपत्ति-राधारत्वानुपपत्तिश्च नास्तीति यावत् । कुतः? **नानाभावात्** बहुरूपाणां सत्वात् । **अतिरेकाच्च** प्राणादिपञ्चजनगताधेयरूपापेक्षया यस्मिन्नि-त्युक्तशरीरगताधाररूपस्य भिन्नत्वादित्यर्थः । अत्र भेदो नाम विशेषः। अचिन्त्यशक्त्या विष्णुः स्वयमेवाऽधाराधेयादिबहुरूपेणास्तीति भावः।

(त.दी.) अत्राविरोधपदमनुवर्त्य नेत्यवक्तुं शक्यत्वेऽपि तदुक्तिः सङ्ख्योप-सङ्ग्रहादपि 'प्राणस्य प्राणम्' (बृ.उ. ६.४.१८) इत्यादिषष्ठीनिर्दिष्टप्राणादयो न पञ्चजना नानाभावात् तेषां प्रतिशरीरं नानात्वेन पञ्चत्वायोगात् । न ह्येकस्मिन्

देहे एकएव प्राणादिरित्यादिवृत्त्यन्तरं चन्द्रिकोक्तदिशा ज्ञापयितुं सङ्ख्योप-सङ्ग्रहादपि यो विरोधः स नेत्यन्वयलाभाय चेति। इति (पृ.सं.१७६)

**(पञ्चजनादिशब्दवाच्यानां विष्णुत्वे प्राणादीनां प्राणदत्वरूपहेतुकथनम्)**

ननु भवेदियं बहुत्वादिसम्भवचिन्ता यदि पञ्चजनादीनां विष्णुत्वे विशेषहेतुर्भवेदित्याशङ्कां प्राणादीनां प्राणत्वादिप्रदत्वलिङ्गोक्त्याऽपनोदाय पञ्चत्वाश्रयरूपविशेषानाह -

**ॐ प्राणादयो वाक्यशेषात् ॐ** (१-४-१३) इति ॥

(सू.) प्राणादीनां प्राणत्वादिप्रदाः **प्राणादयः** पञ्चजनाः विष्णुरेव । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः' (ब्र.सू.भा.उ. माध्य.श्रुतिः) इति **वाक्यशेषादित्यर्थः** । प्राणादीनां प्राणत्वादिप्रदत्वं विष्णोरेव सम्भवतीति भगवल्लिङ्गसद्भावात् तस्यैव पञ्चजनत्वमिति भावः ।

**(शाखान्तरेऽन्नरूपाश्रवणात् पञ्चत्वं कथमिति शङ्का तत्परिहारश्च)**

ननु शाखान्तरेऽन्नरूपाश्रवणात् कथं पञ्चत्वमित्याशङ्कां परिहरति-

**ॐ ज्योतिषैकेषामसत्यन्ने ॐ** (१-४-१४ ) इति ॥

**(सू.) एकेषां** काण्वानां शाखायाम् **अन्ने** अन्नाख्ये रूपेऽसत्यपि 'तद्देवा ज्योतिषां ज्योतिः' (बृ.उ.६-४-१६) इति प्राक् किञ्चिद्दूरोक्तेन **ज्योतिषा** पञ्चत्वमित्यर्थः । अत्र द्वितीयान्तप्राणादेरेव पञ्चजनत्वं विष्णुत्वं चेति ज्ञेयम् । तथा ज्योतिरन्नशब्दयोरेकरूपवाचित्वेनैकार्थत्वं वा । अन्नाख्यरूपेण सह भगवद्रूपपञ्चकं माध्यन्दिनादिभिरुपास्यम्, ज्योतिराख्यरूपेण सह रूपपञ्चकं काण्वादिभिरुपास्यमित्यधिकारि-भेदात् पृथक् पञ्चकं वा बोध्यम् ॥ ३ ॥

**॥ इति न सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥**

(त.दी.) ज्योतिषेत्येकवचनोक्त्या न षष्ठ्यन्तज्योतिरादेः पञ्चजनत्वमिति सूचितम्। द्वयोरेकार्थत्वं वाऽधिकारिभेदात् पञ्चकद्वयं वेति भावः। इति (पृ.सं.१७८)

## ॥ अथाऽऽकाशाधिकरणम्॥ ४॥

### (भगवति अवान्तरकारणवाच्याकाशादिशब्दसमन्वयः)

अत्र नये कार्यत्वे सति कारणत्वरूपावान्तरकारणत्वयुक्ताकाशादिशब्दानां समन्वयः कथ्यते।

### (पूर्वपक्षसिद्धान्तौ)

'आत्मन आकाशः सम्भूतः' (तै.उ. २.१) इत्यादौ श्रुता आकाशादिशब्दा न विष्णुपराः, तेषामात्मादिकार्यत्वश्रवणात्। अकार्ये ब्रह्मणि कार्यत्वस्य विरोधादिति पूर्वपक्षे, सिद्धान्तयति-

**ॐ कारणत्वेन चाऽऽकाशादिषु यथा व्यपदिष्टोक्तेः ॐ**

(१-४-१५) इति॥

(सू.) चशब्दः कार्यत्वसमुच्चायकः। **आकाशादिषु** नियामकत्वेनान्तर्गतो हरिरेव कारणत्वेन कार्यत्वेन चाऽऽकाशादिशब्दैरुच्यते। आकाशाद्युत्पत्तावाकाशाद्यन्तर्गतत्वेन भगवतोऽभिव्यक्त्या वाय्वादिगतरूपाभिव्यक्तिहेतुत्वेन च स्वस्यैव कार्यकारणभावो न विरुद्ध इति यावत्। आकाशादिगतत्वं कुत इत्यत उक्तम्- **यथेति**॥ यथा 'स योऽतोऽश्रुतः' (ऐ.आ. ३-२-४) इत्यादौ विष्णुरविदितत्वादिरूपेण **व्यपदिष्टस्तादृशस्यैव** 'यमाकाशो न वेद' (बृ.उ. ५-७-१२) इत्यादिना **उक्तत्वादित्यर्थः**॥४॥

॥ इत्याकाशाधिकरणम्॥ ४॥

(त.दी.) उक्तेरित्येव वाच्ये यथाव्यपदिष्टेत्युक्तिः 'आकाशे तिष्ठन्' (ऐ.आ.३.२.४) इत्यादावपि आकाशादौ स्थितं ब्रह्मेति कुत इति न शङ्क्यम्, श्रुत्यन्तरोक्ताविदितत्वप्रकारस्य 'यमाकाशो न वेद' (ऐ.आ.३.२.४) इत्यादि-श्रवणादित्यन्तर्यामिनयोक्तन्यायस्मारणार्था। इति (पृ.सं.१८०,१८१)

## ॥ अथ समाकर्षाधिकरणम् ॥ ५ ॥

### ( परममुख्यवृत्त्या विष्णुवाचकानां शब्दानां समाकर्षेण जगति व्यवहारः)

### (पूर्वपक्षसिद्धान्तौ)

अत्र यद्यपि समन्वेतव्यशब्दो नोक्तस्तथाऽपि 'कल्पनोपदेशात्' (ब्र.सू. १.४.११) इत्युक्तन्यायेनान्यत्रापि मुख्यत्वे सिद्धे, मुख्यता किमक्षादि-शब्दवदुभयत्रापि तुल्या, किं वा ब्रह्मण्यधिकाऽन्यत्र तु हीनेति संशये, अक्षादिशब्दवदुभयत्रापि तुल्येति पूर्वपक्षे, सिद्धान्तयति -

**ॐ समाकर्षात् ॐ** (१-४-१६ ) इति ॥

(सू.) परममुख्यवृत्त्या विष्णुवाचकानां शब्दानां **सम्** तदधीनमुख्य-वृत्त्या **आकर्षात्** । तत आकृष्य आदायान्यत्र व्यवहारादित्यर्थः । वैश्वानराधिकरणे 'साक्षादप्यविरोधं जैमिनिः' (ब्र.सू. १.२.२८) इत्यत्र ब्रह्मणि मुख्यानां शब्दानामन्यत्र प्रयोगः किमर्थ इति शङ्कायां हानादि-व्यवहारार्थमित्युक्तम् । 'शरीररूपकविन्यस्त' (ब्र.सू. १.४.१) इत्यत्र तर्हि अन्यवाचकानामन्यत्र प्रयोगेऽव्यवस्था स्यात्, निमित्ताभावादिति शङ्का ईश्वरसम्बन्धस्य निमित्तत्वोक्त्या परिहृता । 'कल्पनोपदेशात्' (ब्र.सू.१.४.११) इत्यत्र तर्हि अयसिदग्धृशब्दस्येवान्यत्र लक्षणादिरेव स्यात् ।

ननु मुख्यवृत्तिरिति शङ्काऽन्यत्र रूढ्याद्युक्त्याऽपाकृता । अत्र तु

तर्हि ब्रह्मण्यन्यत्र चाक्षादिशब्दवत् तुल्यतैव स्यादिति शङ्का उभयत्र मुख्यत्वेऽपि ब्रह्मणि परममुख्यत्वमन्यत्र त्वमुख्यत्वमात्रमित्युक्त्वा समाहितेति **चन्द्रिकायां** प्रमेयभेद उक्तः । तथा हि । रूढित्वेऽपि विद्वदविद्वद्रूढ्योः, योगत्वेऽपि योगमहायोगयोस्तारतम्यं युक्तम् । मुख्यत्वेऽपि योगरूढ्योरिवामुख्यत्वेऽपि गौणलक्षणयोरिवेति मुख्यवृत्तौ तारतम्यमस्तीत्येतदधिकरणप्रतिपाद्यं ज्ञेयम् ।

(त.दी.) समित्युक्तिरन्यत्र मुख्यत्वमेव न लक्षणादिरिति सूचनाय । इति (पृ.सं.१८२)

**(भगवतोऽन्यस्य मुख्यवाच्यत्वशङ्का, तन्निरासश्च)**

ननु यदि शब्दाः परमात्मन्येव मुख्याः, अन्यत्र तु ततः समाकृष्य सङ्केतितत्वेनामुख्यास्तर्हि तेषां मुख्यार्थे परमात्मन्येव प्रसिद्धिः स्यान्न त्वमुख्यार्थे जगति । अस्ति चासौ । अतोऽन्यस्यैव मुख्यवाच्यत्व-मित्याशङ्कां परिहरति -

**ॐ जगद्वाचित्वात् ॐ** (१-४-१७) इति ॥

(सू.) सर्वशब्दानां **जगति व्यवहारात्** तत्र प्रसिद्धिरित्यर्थः । लोकानामन्यत्रैव वृद्धव्यवहारेण व्युत्पत्तिग्रहात् तत्र प्रसिद्धिः । हरौ मुख्यज्ञानमूला बालानां चित्रलिखितसिंहादाविवेति भावः ।

**(पूर्वोक्ताक्षेपेण समाधानम्)**

उक्तमाक्षिप्य समाधत्ते -

**ॐ जीवमुख्यप्राणलिङ्गादिति चेन्न तद्व्याख्यातम् ॐ** (१-४-१८) इति ॥

(सू.) सर्वस्य तदधीनत्वात् सर्वं शब्दजातं तस्मिन्नर्थवदित्युक्तं **सर्वस्य**

**तदधीनत्वाख्यं लिङ्गम्**, 'अस्य यदैकां शाखां जीवो जहाति'[१] इति **जीवे** 'वायुना हि सर्वे लोका नेनीयन्ते' (ब्र.सू.भा.उ. श्रुतिः, पृ.३८९) इति **वायौ** श्रूयते । **तस्माल्लिङ्गाज्जीवमुख्यप्राणयोरपि** सर्वशब्दजातं मुख्यत वाचक**मिति चेन्न** । यत**स्तल्लिङ्गं तयो**रन्तर्यामिसम्बन्धितया **व्याख्यातमित्यर्थः** ।

**(वैदिकशब्दानां कर्मादावाकर्षणेन न किमपि प्रयोजनमिति शङ्का तत्परिहारश्च)**

ननु यदुक्तं सर्वशब्दा अन्यत्र समाकृष्य व्यवह्रियन्त इति न तद् युक्तम् । वैदिकानां शब्दानां कर्मादौ समाकर्षेण प्रयोजनाभावादित्यत आह -

**ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ**

(१-४ - १९) इति ॥

**(सू.) अन्यार्थं** सर्वभिन्नब्रह्मज्ञानार्थमेव कर्मदेवतादिकं वेदे उच्यते । 'कस्मिन्नु भगवो विज्ञाते' (मु. १.१३.४) इति शौनक**प्रश्नात्** । 'तस्मै स होवाच द्वे विद्ये वेदितव्ये' (मु. १.१३.४) इत्यङ्गिरो**पाख्यानात्** । कस्य ज्ञानेन सर्वज्ञानफलं भवतीति प्रश्ने परविद्याविषयपरमात्मज्ञानेनेति व्याख्यानतात्पर्यम् । 'कथं नु भगवः असौ आदेशो भवति' (छा. ६.१.३) इति श्वेतकेतु**प्रश्ने** 'यथा सौम्यैकेन' (छा. ६.१.४) इत्याद्युद्दालक**व्याख्यानात्** । **अपि च एवमन्य**ज्ञानस्य परमात्मज्ञानार्थत्वमिति 'यस्तन्न वेद किमृचा करिष्यति' (ऋ. १.१६४.३९) इति **एके** शाखिनः पठन्तीति **जैमिनि**राचार्यो मन्यत इत्यर्थः ।

---

१. 'अस्य यदैकां शाखां जीवो जहाति अथ सा शुष्यति' (छा. ६.११.१२, पृ.सं. ३८९)

कर्मदेवतादिविज्ञानमपि तदाश्रयत्वादिना भगवद् ज्ञानार्थं चेत् सफलं नान्यथेत्यभिप्रायेण कर्मादौ शब्दानां समाकर्ष इत्याशयः ।

**(वैदिकपदानां ब्रह्मवाचकत्वोक्त्यैव ब्रह्मज्ञानसिद्धेस्तदर्थं वेदेन न कर्मप्रतिपादनावश्यकता इति शङ्कानिरासः)**

ननु न ब्रह्मज्ञानार्थं वेदेन कर्मादिकं वक्तव्यम् । वैदिकखण्डपदानामपि ब्रह्मवाचकत्वोक्त्या ब्रह्मज्ञानसिद्धेरित्यत आह -

**ॐ वाक्यान्वयात् ॐ** (१-४-२०) इति ॥

(सू.) पृथक्पृथगर्थेषु वाचकया स्थितपदसमूहस्यान्ततो भगवत्परत्वं **वाक्यान्वयः । तस्मान्निमित्ताद्** ब्रह्मज्ञानार्थं वेदे कर्मादिवचनं युक्त-मित्यर्थः । विना वाक्यान्वयम् उत्तमाधिकारिव्यतिरिक्तानां ब्रह्मज्ञान-स्यैवासम्भवादिति भावः ।

**('ज्ञानमेव मोक्षसाधनम्' इत्यत्र लिङ्गत्वेन कर्मादिवचनमुपयुक्तमिति आश्मरथ्यमतकथनम्)**

यदन्यवचनस्यापि ब्रह्मज्ञानार्थत्वमुक्तं तत् केन प्रकारेणेत्याकाङ्क्षायां तं प्रदर्शयति -

**ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ** (१-४-२१) इति ॥

(सू.) 'नान्यः पन्था अयनाय विद्यते' (तै.आ. ३.१२.७) इति **प्रतिज्ञातार्थनिश्चयस्य लिङ्गं सत्** अन्यार्थं भवति वेदे कर्मादि-वचन**मित्याश्मरथ्यो** मन्यत इत्यर्थः । क्षुद्रफलार्थिनं प्रति तत्तत्फलाय तत्तत्कर्म विदधदपि कर्मवाक्यं मुमुक्षुं प्रति क्षुद्रफलकत्वात् कर्मणां तद्धानेनाक्षुद्रफलकं ज्ञानमेवोपादेयमिति वैराग्यजननद्वारा ज्ञानार्थत्वं कर्मादिवचनस्येति भावः ।

**(कर्मादिवचनस्य प्रकारान्तरेण ज्ञानोपयोगप्रदर्शनम्)**

प्रकारान्तरेणान्यवचनस्य ज्ञानोपयोगं दर्शयति -

**ॐ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॐ** (१-४-२२) इति ॥

(सू.) ब्रह्मज्ञानेन संसारादु**त्क्रमणमिच्छतः** पुंस **एवं** ज्ञानसाधनतया कर्मादेरपि **भावादा**वश्यकत्वात् कर्मादिवचनमिति **औडुलोमिर्म**न्यत इत्यर्थः। अन्तःकरणशुद्धिद्वारा ज्ञानार्थं कर्मादेरप्युपादेयतया इत्याशयः।

**(कर्मादिवचनस्य प्रकारान्तरेण ज्ञानोपयोगितानिरूपणम्)**

रीत्यन्तरेण कर्मादिवचनस्य भगवद्ज्ञानोपयोगं दर्शयति -

**ॐ अवस्थितेरिति काशकृत्स्नः ॐ** (१-४-२३) इति ॥

(सू.) कर्मादिजगतः ब्रह्मणि **अवस्थितेर्हे**तोः स सर्वाधारत्वादिरूपेण ज्ञातव्य **इति** 'एष सेतुर्विधरणः' (बृ.उ.६.४.२२) इत्यादौ वक्तुमाधेयादिरूपं कर्मादिकं वेदेनोच्यत इति **काशकृत्स्नो** वक्तीत्यर्थः। कथं ब्रह्म ज्ञेयमिति जिज्ञासायां स्वेतरसर्वाधारत्वेनेति साक्षाद् ज्ञानापेक्षितप्रकारसमर्पणाय कर्मादिवचनमिति तात्पर्यम्।

**(अधिकारिभेदेन प्रवृत्तत्वान्न मुनिमतानां विरोधः)**

ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्थाविशिष्टाल्पाधिकारिविवक्षयाऽऽश्मरथ्यमतम्, ब्रह्मजिज्ञासुत्वावस्थाविशिष्टाल्पाधिकारिविवक्षयौडुलोमिमतम्। ज्ञानित्वावस्थाविशिष्टाल्पाधिकारिविवक्षया काशकृत्स्नमतमित्यधिकारिणोऽवस्थाभेदेन न मुनिमतानां परस्परविरोध इति द्रष्टव्यम्। अल्पाधिकारिणां प्रथमं तावद् यस्मात् कर्मादिकमनित्यफलमतो ज्ञानमेव मुक्तिसाधनमिति ज्ञानस्य मोक्षहेतुतानिश्चयवत्त्वावस्था। तदनन्तरं तादृशज्ञानसाधनाय कर्मादिना भाव्यमिति

कर्मानुष्ठानवत्त्वावस्था । अनन्तरं कर्मणा प्रक्षीणान्तःकरणमलानां सर्वं परमात्मन्यवस्थितमित्येवंरूपं ज्ञानमुत्पद्यत इति ज्ञानित्वावस्थेत्युत्तरोत्तरावस्थानामुत्तमतातारतम्यं वाऽनेन सूचयतीति सुधाटिप्पणे (टिप्पण्यां) परमगुरुचरणोक्तं (श्रीमद्यादवार्योक्तं) ज्ञेयम् ॥ ५ ॥

**॥ इति समाकर्षाधिकरणम् ॥ ५ ॥**

**(त.दी.)** शिष्यप्रसिध्यर्थं जैमिन्याद्युक्तिः । इति **(पृ.सं.१९०)**

## ॥ ६ ॥ अथ प्रकृत्यधिकरणम् ॥

### (भगवति प्रकृत्यादिस्त्रीलिङ्गशब्दसमन्वयः)

अत्र स्त्रीलिङ्गानां निखिलशब्दानां समन्वयः ।

### (पूर्वपक्षसिद्धान्तौ)

'एष ह्येव प्रकृतिरविकृतिः' (ब्र.सू.भा.उ. वत्सश्रुतिः) इत्यादिश्रुतप्रकृत्यादिपदवाच्यो न विष्णुः । तस्य 'नैनं वाचा स्त्रियं ब्रुवन्' (भाष्योदाहृता स्मृतिः) इति स्त्रीत्वनिषेधादिति पूर्वपक्षे, सिद्धान्तयति-

**ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ** (१-४-२४) इति ॥

**(सू.) प्रकृत्यादिस्त्रीशब्दवाच्यश्च** विष्णुरेव । 'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिसंविशन्ति'[१] इत्यशेषनामवाच्यतां **प्रतिज्ञाय** तत्रैव 'यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसंविशन्त्यैवमेतानि नामानि सर्वाणि पुरुषमभिसंविशन्ति' (ब्र.सू.भा.उ. श्रुतिः, पृ. ४०१) **इति दृष्टान्तः तयोः अनुपरोधाद्** अनुसारादित्यर्थः । विष्णोः स्त्रीशब्दवाच्यत्वा-

१. 'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिसंविशन्ति' इति (ब्र.सू. भा.उ. श्रुतिः, पृ.४०१)

भ्युपगमे प्रतिज्ञादृष्टान्तानुपरोधात् । अन्यथा तदुपरोधादिति भावः । चशब्दस्तु स्त्रीत्वं चेत् तर्हि पुंस्त्वं न स्याद् विरोधादिति न शङ्क्यम् । 'व्यवधानेन सूतिस्तु'[1] इति प्रमाणोक्तरीत्या द्वयोरप्युपपत्तेरिति प्रमाणदर्शनार्थः । सर्वस्त्रीपुंसशब्दग्रहणार्थश्च ।

(त.दी.) श्रीवाचितया प्राधान्यात् प्रकृतिपदस्यान्योपलक्षणत्वात् । इति (पृ.सं.१९)

## (युक्त्यन्तरेण प्रकृतिपदवाच्यत्वसमर्थनम्)

युक्त्यन्तरेणापि प्रकृतिपदवाच्यत्वं प्रतिपादयति -

**ॐ अभिध्योपदेशाच्च ॐ** (१-४-२५) इति ॥

(सू.) 'प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते'[2] इति **अभिध्यायाः** विष्णिवच्छायाः **प्रकृति-त्वोपदेशाच्च**। 'सोऽभिध्या स जूतिः'[3] इत्यादौ परमात्मनोऽभिध्यात्वोपदेशाच्चेत्यर्थः ।

## (पूर्वोक्तप्रमाणैरिच्छाद्वारैव प्रकृतिशब्दवाच्यत्वं विष्णोः न साक्षादिति शङ्का तन्निरासश्च)

ननु तर्हीच्छाद्वारैव प्रकृतिशब्दवाच्यत्वं न साक्षात् तदभिधायक-

---

१. 'व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते । सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः ॥ उभयात्मकसूतित्वाद् वासुदेवः परः पुमान् । प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते ॥' इति (ब्र.सू.भा.उ. ब्रह्माण्डवचनम्, पृ.४०९)

२. 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते ॥' इति (ब्र.सू.भा.उ.स्मृतिः, पृ.४०३)

३. 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः' इति (ब्र.सू.भा.उ. श्रुतिः, पृ.४०३)

विशेषप्रमाणाभावादित्याशङ्कामपाकरोति-

**ॐ साक्षाच्चोभयाम्नानात् ॐ** (१-४-२६) इति ॥

(सू.) चोऽवधारणे । 'एष स्त्री एष पुरुषः'[1] इत्यादिश्रुतौ **साक्षादेव स्त्रीपुरुषत्वोक्तेश्च** प्रकृत्यादिस्त्रीशब्दवाच्यो विष्णुरित्यर्थः ।

**(श्रुत्युक्तप्रकृतिशब्दवाच्यत्वे निमित्तकथनम्)**

ननु प्रकृत्यादिशब्दवाच्यत्वे[2] श्रुत्युक्तेऽपि कथं तद् युज्यते ? योगादिरूपनिमित्ताभावादित्याशङ्कामपाकर्तुं तच्छब्दवाच्यत्वे निमित्तमाह -

**ॐ आत्मकृतेः परिणामात् ॐ** (१-४-२७) इति ॥

(सू.) परिणामादिति पञ्चमी ल्यब्लोपनिमित्ता । **परिणामात्** प्रकृतेर्महदादिरूपेण परिणामं विधाय तत्प्रेरणाय **आत्मनः कृतेः** बहुधाकरणात् प्रकृतिर्ब्रह्मेत्यर्थः । प्रकर्षेण करोतीति प्रकृतिरिति विग्रहोऽवगन्तव्यः ।

(त.दी.) तदधीनत्वे सत्यपि तदनादरेण गुणपूर्त्यर्थं निमित्तान्तरोक्तिः । परिणामादित्युक्तिरात्म-प्रकृतेस्तत्प्रेरणरूपफलोक्त्यर्था । इति (पृ.सं.१९४)

**('परमात्मनः पुंस्त्वात् न स्त्रीलिङ्गप्रकृतिशब्दवाच्यत्वम्' इति शङ्का तत्परिहारश्च)**

तथाऽपि न प्रकृतिशब्दवाच्यत्वं विष्णोर्युक्तम् । तस्य स्त्रीलिङ्गत्वादित्याशङ्कां परिहर्तुं तस्य स्त्रीत्वे निमित्तमाह-

---

१. 'एष स्त्री एष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद् विश्वरूपः' इति (ब्र.सू.भा.उ. पैङ्गिश्रुतिः, पृ.४०५)

२. 'प्रकृतिशब्दवाच्यत्वे' इति क.पाठः ।

**ॐ योनिश्च हि गीयते ॐ** (१-४-२८ )इति ॥

(सू.) **हि** यस्मात् 'यद्भूतयोनिं'[१] इति श्रुतौ **योनिः** स्वदेहादेव प्राणिनामुत्पत्तिहेतु**र्गीयते च** शब्द्यते । अतोऽपि विष्णुरेव स्त्रीशब्दवाच्यः । न केवलं प्रकृष्टकृतित्वादिनेति चार्थः । ईश्वरो हि प्रलये स्वोदरनिवेशितं ब्रह्मादिप्राणिजातं स्वदेहादेव स्थूलदेहविशिष्टतया जनयतीति स्वदेहात् प्राणिनां सूतिहेतुत्वरूपं स्त्रीत्वं तस्यैवेति ज्ञेयम् ॥ ६ ॥

॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥

(त.दी.) प्रकृतिशब्दनिमित्तेन सह तदुपलक्षितस्त्रीशब्दमात्रनिमित्तसमुच्चये चः । (पृ.सं.१९५)

## ॥ अथ एतेनसर्वेव्याख्याताधिकरणम् ॥ ७ ॥

### (एतदधिकरणप्रतिपाद्यविषयः - भगवति निषेधार्थकासच्छून्यादिशब्दसमन्वयः)

अत्र निषेधमुखवेद्यानां शब्दानां समन्वयः कथ्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'असदेवेदमग्र आसीत्' (छा.उ.६.२.१) इति श्रुतासच्छून्यादिनिषेधमुखवेद्यवस्तुवाचकशब्दवाच्यो न विष्णुः । तस्य भावरूपत्वात् । नचासत्वस्य तद्गतत्वाभावेऽपि तदधीनत्वादसच्छब्दवृत्तिः । असतो निःस्वरूपस्य नियम्यताभावेन पराधीनतायोगादिति पूर्वपक्षे, सिद्धान्तयति -

**ॐ एतेन सर्वे व्याख्याता व्याख्याता : ॐ** (१-४-२९ ) इति ॥

---

१. 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति (मु.१.१.६, पृ.४०८)

(सूत्रार्थः)

**एतेन** तदधीनत्वाद्युक्तहेतुसमुदायेन **सर्वे** शून्यासदादिशब्दाः महायोगादिमुख्यवृत्त्या भगवद्विषया एवेति **प्रतिपादिता** इत्यर्थः । प्रसिद्धस्य शून्यत्वादेस्तद्गतत्वाभावेऽपि 'शमूनं कुरुते'[1] इत्यादिना भाष्योदाहृतप्रमाणोक्तस्य निमित्तस्य तद्गतत्वात् ।

'उत्पिपादयिषेदीशो यदि शृङ्गं शशादिके ।
गा(ग)वादाविव जायेत तदभावाद्ध्यभूदसत् ॥' (च.उ. वचनम्)

इति चन्द्रिकोक्तरीत्या शशविषाणादेरत्यन्ताभावप्रतियोगित्वस्येशाधीनत्वाच्च शून्यादिशब्दवाच्यत्वं विष्णोर्युक्तमिति भावः । अध्यायोक्तसर्वप्रमेयावधारणार्थाऽध्यायान्ते द्विरुक्तिः ।

**प्रथमाध्यायसूत्रार्थः सङ्गृहीतो मया यतः ।**
**ततस्तुष्टः प्रवक्तृत्वं दद्यात् पूर्णगुणो हरिः ॥**

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते सूत्रार्थसङ्ग्रहे प्रथमाध्यायस्य चतुर्थःपादः ॥***

**॥ श्रीकृष्णार्पणमस्तु ॥**

---

१. 'शमूनं कुरुते विष्णुरदृश्यः सन् परः स्वयम् । तस्माच्छून्य इति प्रोक्तस्तोदनात्तुच्छ उच्यते ॥ नैष भावयितुं योग्यः केनचित् पुरुषोत्तमः । अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि ॥ सर्वस्य तदधीनत्वात् तत्तच्छब्दाभिधेयता । अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः ॥ इति (ब्र.सू.भा.उ.महाकौर्मवचनम्, पृ. ४११,४१२)

*. एतदनन्तरं मातृकायां कानिचन वाक्यानि दृश्यन्ते । 'सौम्यसंवत्सरफाल्गुणशुद्धसप्तम्यां भानुवासरे समाप्तमिदं लेखनं रघुपतिना नान्येन' । इति । (पत्र सं.९२)

# अथ द्वितीयोऽध्यायः

## प्रथमः पादः

### (युक्त्यादिविरोधचतुष्टयनिरासः)

पूर्वाध्यायोक्तार्थे युक्त्यादिविरोधचतुष्टयं निरस्यतेऽस्मिन् द्वितीयेऽध्याये ।

### (पूर्वाध्यायोक्तार्थे युक्तिसमयविरोधसम्भवेऽपि न श्रुतिन्यायोपेतश्रुतिविरोधः सम्भवतीति शङ्का तत्परिहारश्च)

ननु युक्तिविरोधः समयविरोधश्च यद्यप्युक्तेऽर्थे भवति । नतु श्रुतिविरोधः न्यायोपेतश्रुतिविरोधश्च । तयोश्चाधिभूतादिविषयत्वादिति चेत् । सत्यम् । न ब्रूमो वयमुक्तेऽर्थे साक्षाद् विरोधश्चतुर्विध इति । येनोक्तदोषः। किं नाम ? युक्तिसमयाभ्यां विरोधौ साक्षाद् विरोधौ । श्रुत्यादिविरोधौ तु श्रुत्यप्रामाण्यप्रसञ्जनद्वारा श्रुत्यवष्टम्भेनोक्तस्य जगत्कारणत्वाद्यर्थस्याऽक्षेपहेतुपरम्परया विरोधाविति **अभिनवचन्द्रिकायाम्** ।

### (एतत्पादप्रतिपाद्यविषयः - युक्तिविरोधनिरासः)

आद्यपादे युक्त्यविरोधः कथ्यते ।

### (स्मृतिविरोधनिरासः)

तत्र युक्त्याद्यखिलरूपत्वेन प्रबलस्मृतिविरोधः प्रथमनये निराक्रियते ।

**ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनकाशदोषप्रसङ्गात् ॐ** ( २-१-१ ) इति ॥

(सू.). आप्तशिवादिप्रणीतानां पाशुपतादि**स्मृतीनां** शिवादिकारणत्वपराणाम् अन्यपरत्वाभावरूपा**नवकाशेन** तद्विरुद्धविष्णुजगत्कारणत्वश्रुतेरप्रामाण्याख्य**दोषप्रसङ्गः** । अतो न तत्र तात्पर्य**मिति चेत्** । **न** । **अन्यस्मृतीनां** परमाप्तविष्णुकृतानां श्रुतिसंवादवतीनां पञ्चरात्रादीनामन्यपरत्वाभावरूपा**नवकाशेन** तद्विरुद्धशैवादिस्मृतीनाम् अप्रामाण्याख्य**दोषप्रसङ्गा**च्छ्रुतीनां विष्णोर्जगत्कारणत्वे तात्पर्यं युक्तमित्यर्थः ।

(त.दी.) वृत्त्यन्तरं तु बौद्धार्हतादिस्मृतीनामन्यपरत्वाभावरूपानवकाशेन तासामेवाऽऽप्तोक्तानामप्रामाण्यदोषप्रसङ्ग इति तद्विरुद्धश्रुतिर्न मानमिति चेन्न । अन्यस्मृतीनां श्रौतस्मृतीनामनवकाशेन श्रौतस्मृतीनामेवाप्रामाण्यदोषप्रसङ्गादिति । इति ( पृ.सं.२०० )

### (शैवादिस्मृतीनां प्रकारान्तरेणाप्रामाण्यसमर्थनम्)

प्रकारान्तरेण शैवादीनामप्रामाण्यमाह-

**ॐ इतरेषां चानुपलब्धेः ॐ** (२-१-२) इति ।

(सू.) **इतरेषां** प्रत्यक्षयोग्यफलानां **च** तत्स्मृत्युक्तसाधनानुप्राप्त्य**नुपलम्भात्** प्रत्यक्षविरोधेन दृष्टार्थपरस्मृतिभागस्याप्रामाण्ये सिद्धे तदितरस्य शिवकारणत्वपरस्मृतिभागस्यापि तद्दृष्टान्तेनातद्वाक्यत्वहेतुनाऽप्रामाण्यं साध्यमित्यर्थः ।

(त.दी.) नास्त्युपलब्धिर्यस्य तदनुपलब्धिः उपलब्ध्ययोग्यं फलं तस्मादितरेषाम् उपलब्धियोग्यानां फलानां, तृतीयादिष्विति पुंवद्भावः, अनुपलब्धेरनुपलम्भादित्यावृत्त्या योज्यम् । चशब्दः किञ्चित्फलोपलब्ध्यङ्गीकारार्थः । इति (पृ.सं.२०१)

**(फलोपलम्भाद् योगस्मृत्यादीनामप्रामाण्यानुपपत्तिशङ्का, तत्परिहारश्च)**

नन्वथापि न सर्वस्मृतीनामप्रामाण्यं युक्तम्। योगस्मृत्युक्तस्वेदगात्र-भञ्जनादीनां नियमेनोपलम्भादित्यत आह -

**ॐ एतेन योगः प्रत्युक्तः ॐ** (२-१-३) इति ॥

(सू.) योगशास्त्रोक्तसाधनानुष्ठाने प्रथमं स्वेदनं द्वितीयं गात्रभञ्जन-मित्याद्युक्ताभ्यासावस्थोत्कर्षसम्पत्तिकाले स्वेदादीना**मनुपलम्भेन योगशास्त्रमपि निरस्तमित्यर्थः** ॥ १ ॥

॥ इति स्मृत्यधिकरणम् ॥ १ ॥

**॥ २ ॥ अथ नविलक्षणत्वाधिकरणम् ॥**

**(फलविसंवादेन वेदादीनामप्रामाण्यमिति युक्तिविरोधनिरासः)**

वेदानां वैष्णवस्मृतीनां च तदुक्तानुष्ठानेऽपि फलानुपलम्भसाम्याद् अप्रामाण्यमिति युक्तिविरोधोऽत्रापाक्रियते।

**ॐ नविलक्षणत्वादस्य तथात्वं चशब्दात् ॐ** (२-१-४-) ॥

(सू.) **अस्य** वेदादेः **तथात्वं** शैवादिवत् फलविसंवादेनाप्रामाण्यं **नास्ति**। वेदस्यापौरुषेयत्वरूप**वैलक्षण्यात्** स्मृतेस्तदनुसारित्व-रूप**वैलक्षण्यात्**। स्वतःप्रामाण्यरूप**वैलक्षण्याच्च**। **अस्य** वेदादेः **तथात्वं च** विलक्षणत्वं **च शब्दात्** 'वाचा विरूप नित्यया' (ऋ. ८.६४.६) इत्यादिश्रुतेः सिद्धमित्यर्थः।

(त.दी.) तथात्वं चापौरुषेयत्वं तदनुसारित्वरूपं वैलक्षण्यं संवादानपेक्षत्वरूपं स्वतः प्रामाण्यरूपं च यथाक्रमं 'वाचा विरूप नित्यया' (ऋ.८.६४.६) इति, 'भारतं पञ्चरात्रं च वेदाः' (ब्र.सू.भा.) इति 'न चक्षुर्न श्रोत्रं न तर्को न

स्मृतिर्वेदा ह्येवैनं वेदयन्ति' (ब्र.सू.भा.) इति शब्दात् सिद्धमित्यर्थः । (पृ.सं.२०३ )

**(अधिकारिणां फलोपलम्भात् न श्रुत्याद्यप्रामाण्यमिति समर्थनम्)**

असिद्धश्च फलविसंवाद इत्याह -

**ॐ दृश्यते तु ॐ** (२-१-५ )

(सू.) अधिकारिविशेषाणां फल**मुपलभ्यते** । कचित् फलानुपलम्भस्य कर्तृवैगुण्यादिनिमित्तकत्वोपपत्तेरित्याशयः ।

(त.दी.) तुशब्दोऽधिकारिविशेषद्योतकः । (पृ.सं.२०४)

**॥ इति नविलक्षणत्वाधिकरणम् ॥ २ ॥**

**॥ ३ ॥ अथाभिमान्यधिकरणम् ॥**

**(एतदधिकरणप्रतिपाद्यविषयः - दृढयुक्तिविरोधनिरासः)**

अत्र दृढयुक्तिविरोधो निराक्रियते ।

**(पूर्वपक्षसिद्धान्तौ)**

मृन्न वदति जडत्वादित्यादियुक्तिविरुद्धत्वात् 'मृदब्रवीत्' (श.ब्रा. ६.१.३) इत्यादिवेदोऽप्रमाणमिति पूर्वपक्षे सत्याह -

**ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ** (२-१-६)

(सू.) 'मृदब्रवीत्' (श.ब्रा. ६.१.३) इत्यादा**वभिमानिदेवताया एव व्यपदेशः** ।

ननु अभिमानिदेवताः सन्तीति वदन् प्रष्टव्यः । किं ता अभिमन्यमान-व्यापिन्यस्तदेकदेशवर्तिन्यो वेति । आद्येऽपि विग्रहवत्यो न वा । नाऽद्यः।

उपलम्भप्रसङ्गात् । न द्वितीयः । वचनाद्ययोगात् । नान्त्यः। तद्रहित-देशवद् देशान्तरोपपत्तौ तद्वैयर्थ्यप्रसङ्गादित्यत उक्तम्- **विशेषेति** ॥ अभिमानिदेवतानां च **शक्तिविशेषाद्** **व्याप्तत्वाच्च** वचनादिकं युक्तमित्यर्थः । अभिमन्यमानव्यापिन्यो विग्रहवत्यश्चेत्यङ्गीकारात् । नचोपलम्भप्रसङ्ग इत्युक्तदोषः । 'दृश्यन्ते मुनिभिश्च ताः'[1] इति प्रमाणेन महतामुपलब्ध्यङ्गीकारात् । अज्ञदृष्टचयोग्यत्वलक्षणसामर्थ्य-वत्त्वान्नाज्ञानामुपलभ्यन्त इति बोध्यम् ।

अत्राऽकाङ्क्षाक्रमोल्लङ्घनेऽल्पाक्षरत्वं प्रयोजकम् । यद्वा, कथमभि-मानिनः पृथिव्यादिवस्त्वन्तरमधिष्ठाय वचनादिकम् । कथं च परिच्छिन्न-स्यानेकाभिमन्यमानाधिष्ठातृत्वमित्यत उक्तम्- **विशेषेति** ॥ तस्य तथा सामर्थ्यादभिमन्यमाने सर्वत्रांशतो व्याप्तत्वाच्चेत्यर्थः । शक्तीति वाच्ये विशेषेत्युक्त्याऽस्मदादिभ्यो विशिष्टाऽतिशयिता सेति सूचयति ।

**(त.दी.)** सुधायां त्वभिमानितद्विग्रहतदन्तर्धानशक्त्यादेः मृत्त्वादियुक्ति-मृदादिवक्तृत्वश्रुत्युभयान्यथानुपपत्तिरूपार्थापत्त्यैव सिद्धेर्विशेषानुगतिपदेन तत्प्रतिपादकं पृथिव्याद्यभिमानिन्य इत्यादिवचनं गृह्यते । तथा च न केवलम् अभिमान्यादिकमर्थापत्त्यैव सिद्धमागमसिद्धं चेत्युक्तम् । इति (पृ. २०५-२०८)

**(प्रमाणाभावान्नास्त्यभिमानिदेवता इति शङ्का तत्परिहारश्च)**

ननु देवतासद्भावे प्रमाणाभावात् कथमेतत् ? इत्यत आह -

**ॐ दृश्यते च ॐ** (२-१-७) इति ।

**(सू.)** एकवचनं समुदायापेक्षया । अभिमानिदेवसङ्घः महद्भिः **दृश्यते**

---

१. 'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः । अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः । ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः ॥' इति (ब्र.सू.भा.उ. भविष्यत्पुराणवचनम्, पृ. १८)

प्रत्यक्षेणैवेत्यर्थः । अन्तर्धानशक्त्याऽस्माकमदर्शनेऽपि महतां प्रत्यक्षमेव प्रमाणमिति भावः ।

॥ इत्यभिमान्यधिकरणम् ॥ ३ ॥

## ॥ ४ ॥ अथासदधिकरणम् ॥

### (प्रागभावकर्तृत्वसाधकयुक्तिविरोधनिरासः)

अत्र श्रुत्युपसर्जनप्रागभावकर्तृत्वसाधकयुक्तिविरोधो निराक्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

'असदेवेदमग्र आसीत्' (छा.उ. ६-२-१) इति श्रुत्या कारणं प्रलयेऽसद् भवितुमर्हति वस्तुत्वादिति युक्तिविरोधान्न विष्णोः कारणत्वमिति पूर्वपक्षमाशङ्क्य प्रतिषेधति -

**ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ** (२-१-८) ॥

(सू.) अत्रासच्छब्दोऽभावतत्प्रतियोग्युभयपरश्च । **असत्** जगत्कर्त्रीति **चेत् न** । प्राधान्येन **प्रतिषेधमात्रत्वात्** स्वरूपेण निषेधप्रत्ययवेद्यत्वान्न तस्य कर्तृत्वमित्यर्थः । कारणं नेति प्रतिषेधबुद्धिविषयत्वान्नासत् कर्तृ । व्यधिकरणधर्मावच्छेदमन्तरेण यः प्रतिषेधबुद्धिविषयः नासौ तद्वानिति व्याप्तेरित्यर्थः ।

### (श्रुतिबलादसतः कर्तृत्वं भवत्वित्याशङ्का तत्परिहारश्च)

अन्यत्रादृष्टमप्यसतः कर्तृत्वं किं न स्यादित्यत आह -

**ॐ अपीतौ तद्वत्त्वप्रसङ्गादसमञ्जसम् ॐ** (२-१-९ ) ॥

(सू.) **अपीतौ** प्रलये **तद्वत्त्वप्रसङ्गात्** असन्मात्रवत्त्वप्रसङ्गाद् **असमञ्जसम्** असत्कर्तृत्वमित्यर्थः ।

नेदमनिष्टमित्यत आह-

**ॐ नतु दृष्टान्तभावात् ॐ** (२-१-१०)॥

(सू.) प्रलये सर्वासत्त्वमिष्टमिति **न** युज्यते। तदा पदार्थसत्त्वसाधने **दृष्टान्तभावात्**। विप्रतिपन्नोत्पत्तिः सतो भवितुमर्हति [१]उत्पत्तित्वाद् घटवत्। विमतो विनाशः सशेषः विनाशत्वाद् घटनाशवदित्यनुमानाभ्यां प्रलयकालगतस्य सत्त्वसिध्या तदनङ्गीकारस्य प्रामाणिकहान-रूपत्वेनानिष्टत्वादिति भावः।

प्रलये सर्वासत्त्वमप्रामाणिकत्वाच्चानिष्टमित्याह -

**ॐ स्वपक्षदोषाच्च ॐ** (२-१-११)॥

(सू.) प्रलये **सर्वासत्त्वपक्षे** प्रमाणाभावरूप**दोषाच्चे**त्यर्थः।

प्रलये स्थितानामसत्त्वं किं प्रत्यक्षवेद्यमुताऽगमवेद्यमथवाऽनुमान-वेद्यम्? नाऽद्यः। असन्निकृष्टत्वात्। न द्वितीयः। तदभावात्। 'असद् वा इदमग्रे' (तै.आ. २.७.१) इति श्रुतेश्च ब्रह्मपरत्वात्। नापि तृतीयः। दृष्टान्ताद्यभावादिति भावः।

**(तटस्थशङ्कानिरासः)**

तटस्थस्याऽशङ्कामपाकरोति-

**ॐ तर्काप्रतिष्ठानादन्यथाऽप्यनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ** (२-१-१२)॥

(सू.) 'एतावानेव **तर्कः**' इति **प्रतिष्ठापकप्रमाणाभावेन** उक्तादपि **अन्यथाऽप्यनुमेयं** पूर्वसाध्यविरुद्धमपि साधयितुं शक्य**मिति चेन्न**।

---

१. 'उत्पत्तिमत्त्वात्' इति क. पाठः।

नञः पूर्वसूत्रादनुकर्षः । **एवमपि** तर्कस्याप्रमाण्येऽनिर्मोक्षप्रसङ्गः प्रामाणिकमोक्षस्याप्यभावप्रसङ्ग इत्यर्थः ।

किं प्रामाणिकं तर्कसिद्धं प्रतितर्केण दूषयितुं शक्यमुताप्रामाणिकम् । द्वितीयस्त्वभिमतः । आद्ये किमेवंवादिनो मते मोक्षोऽस्ति न वेति । नेति पक्षेऽवादित्वेनोपेक्षणीयत्वात् । प्रयोजनान्तरस्य शास्त्रमन्तरेणापि सिद्धेः । अस्ति,चेद् विप्रतिपन्नं प्रति आगमेनैव साध्यते ? उत तर्केण । नाऽद्यः । अनिर्मोक्षवादिनाऽऽगमप्रामाण्यानभ्युपगमात् । अतो द्वितीयपक्ष एवाऽश्रयणीयः । तथाच प्रामाणिकस्यापि तर्कसिद्धस्य प्रतितर्केण बाधे सोऽपि चार्वाकतर्केण बाधितः स्यादिति मतं व्यर्थमेव भवेत् । नच परं प्रति प्रतिपादनोपायाभावेऽपि स्वस्याऽगमेन मोक्षसिद्धिरिति वाच्यम् । विप्रतिपन्नप्रमेये स्वस्यापि केवलागमेनानध्यवसायादित्याशयः ।

**(त.दी.)** सुधायां तु तर्कमात्राप्रामाण्ये स्वव्याघातदोषादनिर्मोक्षप्रसङ्ग इत्यर्थ उक्तः। तर्काप्रतिष्ठानादन्यथा तर्क्यमिति वाच्येऽनुमेयमित्युक्तिः न तर्कोऽनुमानाद् भिद्यत इति सूचयितुम्। इति (पृ.सं.२१६)

**(जगत् निष्कारणकम्, अचेतनकारणकं, जीवकारणकं वा भवत्वित्याशङ्का तत्परिहारश्च)**

असतः प्रतिषेधमात्रत्वेन कर्तृत्वाभावेऽपि निष्कारणमचेतनकारणकं जीवकर्तृकं वा किं न स्यादित्यत आह -

**ॐ एतेन [१]शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ** (२-१-१३ )।।

**(सू.) एतेन** सत्कारणत्वादौ दृष्टान्तभावेनान्यपक्षे दृष्टान्ताभावेन

---

१. 'शिष्टापरिग्रहा' इति ह्.पाठः । (पृ.६४)

विप्रतिपन्नं निष्कारणम् अचेतनकारणं जीवकारणं वा कार्यत्वात् कूलपतनदध्यादिवदित्यादिविरुद्धराद्धान्ता निरस्ता इत्यर्थः। परानुमानममानं श्रुतयो ब्रह्मपरा इति भावः ॥ ४ ॥

॥ इत्यसदधिकरणम् ॥ ४ ॥

**(त.दी.)** अत्र शिष्टा इत्येवोक्ते ब्रह्मवादोऽपि प्राप्नोतीत्यपरिग्रहा इत्युक्तम्। तन्मात्रे तूक्तेऽभाव-कर्तृत्ववादोऽपि गृह्येत। अतः शिष्टा इत्युक्तम्। उक्तरीत्या विशेषशङ्कासूचनाय वेति। प्रत्युक्ता इति वाच्ये व्याख्याता इति वचनं 'जीवाद् भवन्ति भूतानि' (ब्र.सू.भा.उ.श्रुतिः), 'अकस्मादिदमाविरासीत्' इत्यादि-पूर्ववाद्यनुकूलश्रुतीनां प्रागुक्तब्रह्मपरत्वस्मारणाय। इति **(पृ.सं. २१७,२१८)**

## ॥ ५ ॥ अथ भोक्त्रधिकरणम् ॥

### (प्रबलयुक्तिविरोधनिरासः)

अत्र बहुश्रुतियुक्तप्रबलयुक्त्यविरोध उच्यते ।

**ॐ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॐ** (२-१-१४ ) ॥

**(सू.) भोक्तुर्**जीवस्य मोक्षे ब्रह्मत्वा**पत्तेः** 'परेऽव्यय सर्व एकीभवन्ति'[1] इत्यादौ श्रवणात् तयो**रविभागः** भेदाभावः । अतो जीवाभिन्नत्वान्न ब्रह्मणः सर्वकर्तृत्वमिति चेत्, नेति शेषः । जीवाभेद एव नास्ति । 'निरञ्जनः परमं साम्यमुपैति' (मु.३.१.३) इति सन्निहितप्रबलभेदश्रुति-विरोधेन 'एकीभवन्ति' (मु.३-२-७) इत्यस्याभेदे तात्पर्याभावात् । का गतिस्तर्ह्यभेदश्रुतेः ? इत्यत (आह)- **स्याल्लोकवत्** ॥ यथा लोके उदकयोरेकीभावव्यवहारः स्थानैक्यनिमित्तस्तथाऽभेदश्रुतिरपि

---

१. 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यय सर्व एकीभवन्ति' इति (मु.३.२.७)

स्थानैक्याद्यालम्बनत्वेनोपचरितेत्यर्थः । पूर्वं भिन्नस्य लोके पश्चादभेदा-दर्शनादिति भावः ॥ ५ ॥

॥ इति भोक्त्रधिकरणम् ॥ ५ ॥

## ॥ ६ ॥ अथाऽऽरम्भणाधिकरणम् ॥

### (बहुयुक्तिविरोधनिरासः)

अत्र बहुयुक्तिविरोधो निराक्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

विप्रतिपन्ना सृष्टिः स्वतन्त्रबहुसाधनसापेक्षा सृष्टित्वाद् घटसृष्टिवद् इत्यनुमानेन ईश्वरस्य स्वतन्त्रसाधनापेक्षयैव सृष्ट्यादिकर्तृत्वेन न सर्वगुणपूर्णत्वं विष्णोरिति पूर्वपक्षे सत्याह -

**ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ** ( २-१-१५ ) ॥

(सू.) **तस्य** स्वतन्त्रसाधनस्य **तदनन्यत्वं** ब्रह्मानन्यत्वं, स्वयमेव स्वतन्त्रमन्यत्सर्वं तदधीनमिति यावत् । 'किं स्विदासीदधिष्ठान-मारम्भणम्'[१] इत्या**रम्भण**रूपसाधनाक्षेपश्रुतेः । अपरतन्त्रत्वसाधन-सत्ताप्रदत्वादिव्यतिरेकिहेतुभ्यश्चेत्यर्थः । श्रुतावग्रे परिहाराभावेन प्रश्नार्थत्वायोगात् किंस्विदित्याक्षेप एव तदर्थ इति बोध्यम् ।

(त.दी.) अत्र स्वतन्त्रसाधनाभाव इत्युक्ते ब्रह्मणोऽपि स्वातन्त्र्यं नेति स्यात् । तदनन्यत्वं स्वतन्त्रसाधनस्येत्युक्ते तदेव स्वतन्त्रसाधनं नान्यदिति लभ्यत इत्येवमुक्तम् । श्रुतावधिष्ठानस्याऽऽदित्वेऽपि आरम्भणशब्दस्य साधकतमरूपकारणवाचितयाऽर्थप्राधान्यात् तस्योक्तिः । इति ( पृ.सं.२२१)

---

१. (ऋ. १०-८१-२) प्रायः सर्वत्र उपनिषद्वाक्यं विषयतया स्वीक्रियते । अत्र तु ऋग्वेदवाक्यमिति विशेषः ।

### (युक्त्यन्तरेण स्वतन्त्रसाधननिरासः)

विपक्षे बाधकाच्चैवमित्याह -

**ॐ भावे चोपलब्धेः ॐ** (२-१-१६) ॥

(सू.) तदन्यस्वतन्त्रसाधनभावे **उपलब्धेः** प्रमाणैरुपलभ्येत । न चोपलभ्यते । तस्मान्नास्तीति भावः ।

'अद्भ्यः सम्भूतः पृथिव्यै' (तै.आ. ३-१३) इत्यादावुपलब्धेः कथं तदनुपलम्भ इत्यत आह -

**ॐ सत्त्वाच्चावरस्य ॐ** (२-१-१७) ॥

(सू.) **अवरस्य** तदधीनस्य साधनस्य **सत्त्वात्**[1] 'अद्भ्यः' (तै.आ. ३-१३) इति श्रुतेस्तद्विषयत्वादित्यर्थः ।

### (पूर्वोक्ताक्षेपेण समाधानम्)

उक्तमाक्षिप्य समाधत्ते -

**ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ** (२-१-१८)॥

(सूत्रार्थः) 'नासदासीत्' (ऋ.१०.१२९.१) इति श्रुत्या सर्वस्य **असत्त्वाभिधानात्** साधनान्तरमङ्गीकृत्य तस्येश्वराधीनत्ववर्णनम् **अयुक्तमिति चेत्** । **न** । अव्यक्तत्वपरतन्त्रत्वाधमत्वविकृतत्वादि-**धर्मापेक्षयैवासत्वमुच्यते** । कुतः ? 'तम आसीत् तस्माद्धान्यात्' (ऋ.स. १०-१२९-३) इति प्रकृत्यादिसत्त्वपर**वाक्यशेषा**दित्यर्थः । अव्यक्तादावसत्त्वव्यपदेशस्य लोके दृष्टत्वादिति भावः ।

---

१. 'सत्यात्' इति क.पाठः ।

**(त.दी.)** यद्वा, 'तस्माद्धान्यन्न परः किञ्चनास' (ऋ.स.१०-१२९-३) इति स्वातन्त्र्यनिषेध-वाक्यशेषादित्यर्थः। अन्यथा पर इति व्यर्थमिति भावः। अत्रेशमुपेत्यान्यस्यासत्त्वशङ्कनात् न असदिति चेदित्यनेन पौनरुक्त्यम्। इति (पृ.सं.२२४.२२५)

**(साधनान्तरमङ्गीकृत्य तस्येश्वराधीनत्वकथनापेक्षया साधनाभावाङ्गीकरणमेव वरमित्याक्षेपस्तत्परिहारश्च)**

ननु साधनान्तरमभ्युपगम्य तस्येश्वराधीनत्वकथनाद् वरं साधनाभाव-कथनमेव। साधनशून्यस्य सृष्ट्यादिकर्तृत्वाभ्युपगमे महिमाधिक्य-लाभादित्यत आह -

**ॐ युक्तेः शब्दान्तराच्च ॐ** (२-१-१९)॥

**(सू.)** स्वेच्छया लीलया स्वाधीनसाधनान्तरोपादानेन **सृष्टेर्युक्त-त्वात्**। लीलया दण्डमालम्ब्य गच्छतोऽपङ्गुत्ववद् ईशत्वाविरोधात्। कुतः? **शब्दान्तराच्च**। न केवलं पूर्वोक्तशब्दात्। अपि तु 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' (महाना.उ. १-१२) इत्यादिशब्दान्तराच्च साधनान्तराभिधानादित्यर्थः।

**(त.दी.)** शब्दविशेषः शब्दान्तरम्। विवक्षितार्थप्रतिपादकः शब्द इति यावत्। तस्मात्

'शक्तोऽपि भगवान् विष्णुरकर्तुं कर्तुमन्यथा।
स्वभिन्नं कारणाभिन्नं भिन्नं विश्वं करोत्यजः॥'

इति शब्दान्तरादित्यर्थः।

न केवलं प्रागुक्त 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' (तै.आ.३.१३) 'तम आसीत्' (ऋ.सं.१०.१२९.३) इत्यादिशब्दात् किन्तु शब्दान्तरादपि साधनसत्त्वमुपेयमित्यर्थः।

पूर्वश्रुतिसङ्ग्रहायैव शब्दान्तरादित्युक्तम्। आद्यश्रुतेरनीश्वरकर्तृकावान्तर-सृष्टिविषयत्वेन अन्त्यश्रुतेः तमःप्रभृतेर्लये सत्त्वोक्तावपीशसृष्टौ कारणत्वं नेत्येवमन्यथानयनसम्भवात् शब्दान्तरोक्तिः। अत्राजस्येशादेव सृष्टतया तत्राबादेर्हेतुत्वोक्तेः। इति (पृ.सं.२२६-२२७)

**(साधनान्तरसत्त्वेऽनुमानप्रमाणकथनम्)**

साधनान्तरसद्भावेऽनुमानमप्याह -

**ॐ पटवच्च ॐ** (२-१-२०)॥

(सू.) विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसापेक्षा सृष्टित्वात् **पटसृष्टिवदित्यनुमानाच्चे**त्यर्थः।

**(साधनानां स्वातन्त्र्यनिरासः)**

नन्वेवं सति विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वादित्यादिना साधनानां स्वातन्त्र्यमपि स्यादित्यत आह -

**ॐ यथा प्राणादिः** (२-१-२१) ॐ॥

(सू.) **यथा प्राणादिः** देहेन्द्रियादिकं 'यः प्राणे तिष्ठन्' (बृ.उ. ५.७.१६) इत्यादिना ईशेनानुप्रविष्टत्वान्न स्वतन्त्रम्। अन्यथा प्रवेशवैयर्थ्यात्। अनुप्रवेशस्य च प्रेरणार्थत्वात्। तथा 'प्रकृतिं पुरुषं चैव प्रविश्य'[१] इत्युक्त्या साधनमीशानुप्रविष्टत्वान्न स्वतन्त्रमित्यर्थः॥६॥

**॥ इत्यारम्भणाधिकरणम्॥ ६॥**

---

६१. 'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतः प्रभुः॥'
इति (ब्र.सू.भा.उ.कौर्मवचनम्, पृ. ६२)

## ॥ ७ ॥ अथ इतरव्यपदेशाधिकरणम् ॥

### (श्रुत्यनुभवसंवादियुक्तिविरोधनिरासः)

अत्र श्रुत्यनुभवसंवादियुक्तिविरोधः परिह्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

'जीवाद् भवन्ति भूतानि' (ब्र.सू.भा.उ. श्रुतिः) इत्यादिश्रुतिबलाज्जीव एव स्वतन्त्रकर्तेति पूर्वपक्षे सत्याह-

**ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ** (२-१-२२) ॥

### (सूत्रार्थः)

'जीवाद् भवन्ति' (ब्र.सू.भा.उ. श्रुतिः) इत्यादौ **इतरस्य** जीवस्य कर्तृत्व**व्यपदेशाद्** अनुभवादेश्च यदि जीवः स्वतन्त्रकर्तेत्युच्यते तर्हि तस्य **हिताकरणस्याऽदिपदोक्ताहितकरणस्य च प्रसक्तिः**, ते न स्याताम् । असत्वप्रसक्तिरित्यर्थः । नहि स्वतन्त्रस्य तद् द्वयं युज्यत इति भावः । अत्र **दोष**शब्दोऽसत्त्ववाची । दोषासतोरनङ्गीकार्यत्व-साम्यात् ।

(त.दी.) तत्त्वप्रदीपे तु इतरस्य जीवस्य स्वतन्त्रकर्तृत्वव्यपदेशादित्युक्तम् । व्यपदेशादित्युक्तिश्चेतनत्वयुक्तेः श्रुतिसंवादोक्त्यर्था । इति (पृ.सं.२२९)

### (यत्किञ्चिद्दोषमात्रेण जीवस्याकर्तृत्वे ब्रह्मणोऽपि न कर्तृत्वमित्याशङ्का तन्निरासश्च)

ननु यत्किञ्चिद्दोषमात्रेण जीवकर्तृत्वं निराक्रियते तर्हि ब्रह्मणोऽपि न स्यात् । तस्यापि श्रमादिदोषनियमादित्यत आह -

**ॐ अधिकं तु भेदनिर्देशात् ॐ** (२-१-२३) ॥

(सू.) तद्ब्रह्म **तु अधिकम्** अखिलशक्त्यादिमत्त्वेनोत्कृष्टम् । 'श्रोता मन्ता'[१] इत्यादिना सर्वेभ्योऽखिलश्रोतृत्वसर्वान्तर्यामित्वत्वादि-**भेदकधर्मविशेषोक्तेरित्यर्थः** । एवंविधस्य न श्रमादिदोषशङ्केत्याशयः।

**(अनुमानाज्जीवस्य स्वातन्त्र्यशङ्का तन्निरासश्च)**

ननु जीवः अन्यनिरपेक्षतया कर्तृ चेतनत्वादीश्वरवदित्यनुमानात् स्वातन्त्र्यमस्त्वित्यत आह-

**ॐ अश्मादिवच्च तदनुपपत्तिः** (२-१-२४) ॐ ॥

(सू.) चेतनत्वेऽपि जीवस्य **अश्मादेरिवा**स्वातन्त्र्यात् स्वतः-**कर्तृत्वानुपपत्तिरित्यर्थः** । अस्वातन्त्र्यं च जननादिनाऽनुभवसिद्धम् । तेनान्यनिरपेक्षाभावस्यापि साधयितुं शक्यत्वात् । चेतनत्वहेतोश्चा-प्रयोजकत्वादिति भावः ।

(त.दी.) आदिपदेन स्तम्भाद्यनेकदृष्टान्तोक्तिरस्वातन्त्र्यहेतोरव्यभिचार-प्रदर्शनाय। इति (पृ.सं.२३१)

**(पूर्वोक्ताक्षेपेण समाधानम्)**

उक्तमाक्षिप्य समाधत्ते -

**ॐ [२]उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॐ** (२-१-२५ ) इति ॥

(सू.) **उपसंहारदर्शनात्** जीवस्याऽरब्धकार्योपसंहारदर्शनान्न स्वतन्त्रकर्तृत्वानुपपत्तिरिति **चेत्** । **न** । यथा गोषु तृणादिना जातं

---

१. 'श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता सर्वेषां भूतानामन्तरपुरुषः'
(ऐ.आ.३-२-४, पृ.६५)

२. 'उपसंहारदर्शनान्नेति चेत् क्षीरवद्धि' इति ह.पाठः (पृ. ६७)

क्षीरं न गोकर्तृकं 'अन्नं रसादिरूपेण'[१] इति वचनात् । एवं 'य आत्मानमन्तरो यमयति'[२] इति श्रुतेर्जीवगतं कार्यावसानमीशकृतमेव न जीवकृतमित्यर्थः । कदाचित् कार्यसमाप्त्यदर्शनादित्याशयः ।

(त.दी.) दर्शनादित्युक्तिर्युक्तेः प्रत्यक्षसंवादोक्त्यर्था। इति (पृ.सं.२३२)

**(जीवनियामकेश्वरादर्शने देवादिदृष्टान्तकथनम्)**

तर्हि तन्नियामकेशस्य दर्शनं स्यादित्यत आह -

**ॐ देवादिवदपि लोके ॐ** (२-१-२६) इति ॥

(सू.) **देवादीनां यथा**ऽन्तर्धानशक्त्याऽनुपलम्भस्तथाऽन्तर्नियामकेशस्यानुपलम्भः ।

न देवादिवदन्तर्धानशक्तिमत्त्वं युक्तम्। तस्या उपासनासाध्यत्वेनेश्वरे तदभावादित्यत उक्तम्- **अपीति** ॥ **लोकेऽपि** पिशाचादीनामनीशानामपि तादृशी शक्तिरस्ति । किम्वीश्वरस्येत्यर्थः । अथ प्रमाणसिद्धान्तर्धानशक्तिः पिशाचादीनां न हातुं शक्येति कारणान्तरं तत्र कल्प्यते तर्हि 'यत्तदद्रेश्यम्' (मु.उ.१.१.६) इत्यादिप्रमाणसिद्धा सा हातुं न शक्येति नित्या सा कल्प्यतामित्याशयः ।

(त.दी.) अदृश्यस्यापि श्रुत्यादिना सद्भावे देवादिदृष्टान्तः । अदृश्यशक्तिमत्त्वोपपादनायापि लोक इत्युक्तिरिति विवेकः। यद्वा, देवादौ विप्रतिपन्नं प्रत्यपि लोक इत्येकार्थ एव दृष्टान्तद्वयम्। उक्तं चैवमेव सुधायामभिमानिनये। (पृ.सं.२३३)

---

१. 'अन्नं रसादिरूपेण प्राणः परिणयत्यसौ' इति (ब्र.सू.भा.उ स्मृतिः, पृ.६८)

२. बृ.माध्यन्दिन पाठः ।

(युक्त्यन्तरेण जीवकर्तृत्वनिरासः)

युक्त्यन्तरेण जीवकर्तृत्वं पराकरोति-

**ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ** (२-१-२७) ॥

(सू.) यदि जीवः स्वतन्त्रकर्ता तर्हि सर्वेषु कार्येषु सर्वसामर्थ्येन प्रवर्ततेंऽशेन वा । नाऽद्यः । तृणादानादावपि **कृत्स्नसामर्थ्यप्रसक्तिः** स्यात् । सा चानुभवविरुद्धा । नान्त्यः । अंशाभावात् । तदङ्गीकारे च 'अथ यः स जीवः स नित्यो निरवयवः'[१] इति **निरवयवत्वश्रुतिविरोधः** स्यादित्यर्थः । वाशब्दः पक्षान्तरसूचकः । 'यद्धि युक्त्या विरुद्धचेत तदीशकृतमेव हि'[२] इति वचनान्नाविचारितरमणीयाविद्यानिमित्तकत्वं शङ्कनीयमित्याशयः ॥ ७ ॥

॥ इति इतरव्यपदेशाधिकरणम् ॥ ७ ॥

(त.दी.) व्यतिरेको गन्धवदिति जीवस्यानेकरूपतोक्त्या सांशत्वसिद्धावपीह निरवयवत्वशब्दकोपापादनं भिन्नांशशून्यत्वाद् युक्तमित्यादि सुधोक्तं बोध्यम् । इति (पृ.सं.२३४,२३५)

## ॥ ८ ॥ अथ श्रुतेस्तु शब्दमूलत्वाधिकरणम् ॥

### (कृत्स्नप्रसक्त्यादिप्रबलयुक्तिविरोधनिरासः)

अत्राणुत्वमहत्त्वादिव्याघातसहितकृत्स्नप्रसक्त्यादिप्रबलयुक्त्यविरोध उच्यते ।

१. 'अथ यः स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थः' इति (ब्र.सू.भा.उ.भाल्लवेयश्रुतिः, पृ. ७०)

२. (ब्र.सू.भा.उ.वचनम्, पृ. ७२)

(पूर्वपक्षसिद्धान्तौ)

यदीश्वरः सर्वकर्ता स्यात् तर्हि कार्त्स्न्येनांशेन वा प्रवृत्तिमान् स्यात्। नच तदीश्वरे सम्भवतीति तर्कबाधितत्वान्नेश्वरस्य स्वातन्त्र्येण कर्तृत्वं युक्तमिति पूर्वपक्षे सत्याह -

**ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ (२-१- २८) ॥**

(सू.) 'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुः'[१] इत्यादिना लोकविरुद्ध-धर्माणामीश्वराविरुद्धत्वश्रवणान्न कृत्स्नप्रसक्त्यादिविरोधः ।

श्रुत्युक्तमपि युक्तिविरुद्धं कथमङ्गीकार्यमित्यत आह- **शब्दमूल-त्वात्**॥ शब्दैकगम्यत्वादीशस्येत्यर्थः । केवलयुक्त्ययोग्यत्वान्न तद्विरोध इत्याशयः ।

**(युक्तिविरोधो जीवपक्ष एव नेश्वरपक्षे इत्यत्र युक्त्यन्तरोपन्यासः)**

हेत्वन्तरमाह -

**ॐ आत्मनि चैवं विचित्राश्च हि ॐ (२-१-२९ ) ॥**

(सू.) **आत्मनि च** ईश्वरे **एवं** एवंविधाः युक्तिविरोधनिरासका विचित्राः अघटितघटकाः शक्तयः सन्ति न जीवस्य । **हि** 'विचित्रशक्तिः पुरुषः पुराणो नचान्येषां शक्तयस्तादृशाः स्युः'[२] इत्यादिश्रुतेरित्यर्थः ।

---

१. 'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मा' इति (ब्र.सू.भा.उ.पैङ्गिश्रुतिः, पृ.७४)

२. ' विचित्रशक्तिः पुरुषः पुराणो नचान्येषां शक्तयस्तादृशाः स्युः । एको वशी सर्वभूतान्तरात्मा सर्वान् देवानेक एवानुविष्टः ॥' इति (ब्र.सू.भा.उ. श्वेताश्वतर-श्रुतिः, पृ. ७७)

(‘जीवेऽपि न युक्तिविरोधः’ इत्यत्र बाधकोक्तिः)

तर्हि चेतनत्वाज्जीवेऽपि न युक्तिविरोध इत्यत आह -

**ॐ स्वपक्षदोषाच्च ॐ** (२-१-३०) ॥

**(सू.) स्वपक्षे** जीवपक्षे कृत्स्नप्रसक्त्यादिदोषादेव युक्तिविरोधपरिहारो नास्तीति भावः । ईशवच्छ्रौताविरुद्धत्वशब्दैकसमधिगम्यत्वविचित्रशक्त्यादिमत्त्वानामविरुद्धत्वकल्पकानामभावादिति भावः ।

**(यच्छक्तिबलान्न विरोधस्तच्छक्तिनाशे विरोधः स्यादिति शङ्का तन्निरासश्च)**

नन्वीश्वरे विचित्रशक्तिबलान्न विरोध इत्युक्तम् । सा विचित्रशक्तिर्यद्विषया यदा च नश्यति तदा विरोधः स्यादित्यत आह -

**ॐ सर्वोपेता च तद्दर्शनात्** (२-१-३१) ॐ ॥

**(सू.)** आत्माख्यपरदेवता **सर्वदा सर्वशक्त्युपेता च** । ‘सर्वैर्युक्ता शक्तिभिर्देवता सा’[१] इति तादृशशक्तिवाचकश्रुतेरित्यर्थः ।

**(त.दी.)** ‘सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम्’ (ब्र.सू.भा.उ.चतुर्वेदशिखाश्रुतिः) इति श्रुतिवाक्यादित्यर्थः । आत्मनीत्युपक्रमाद् उपेत इति वाच्ये ‘उपेता’ इत्युक्तिः श्रुतिविशेषसूचनाय । इति (पृ.सं. २३९)

**(पूर्वोक्ताक्षेपेण समाधानम्)**

उक्तमाक्षिप्य समाधत्ते -

---

१. ‘सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम् । नित्यानन्दा नित्यरूपाऽजरा च या शाश्वतात्मेति च यां वदन्ति ॥’ इति (ब्र.सू.भा.उ. चतुर्वेदशिखाश्रुतिः, पृ.८०)

ॐ विकरणत्वान्नेति चेत् तदुक्तम् ॐ (२-१-३२) ॥

(सू.) 'अचक्षुः श्रोत्रं तदपाणिपादम्' (आथर्व. १.१.६) इति **हस्तादि-करणशून्यत्वान्नेशस्य** कर्तृत्वमिति **चेत्** । **न** । 'न तस्य कार्यं करणं च विद्यते' (श्वे.उ. ६-८) इत्यादिना करणराहित्यं प्राकृतपाण्यादि-विषयत्वेन सर्वोत्तमत्वेन परमशक्तित्वेन चोक्तं यत इत्यर्थः ॥ ८ ॥

॥ इति श्रुतेस्तु शब्दमूलत्वाधिकरणम् ॥ ८ ॥

## ॥ ९ ॥ अथ न प्रयोजनाधिकरणम् ॥

### (फलमुखदढयुक्तिविरोधपरिहारः)

अत्र फलमुखदृढयुक्तिविरोधोऽपाक्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

न विष्णोः सर्वकर्तृत्वं युक्तम् । प्रयोजनोद्देशानुद्देशाभ्यामपूर्णत्वादेरिति पूर्वपक्षे प्राप्ते, आह-

ॐ न प्रयोजनवत्त्वात् ॐ (२-१-३३)

(सू.) सर्वस्यापि **प्रयोजनस्य प्राप्तत्वान्न** प्रयोजनार्थम् आत्मप्रयो-जनार्थमीशस्य कर्तृत्वमित्यर्थः ।

(त.दी.) न प्रयोजनवत्त्वात् । नसमासोऽयम् । व्याख्यानादौ हस्तचालनादाविव प्रयोजनाभावादित्यर्थः । इति (पृ.सं.२४१)

### (फलोद्देशाभावे ईश्वरस्य प्रवृत्त्यनुपपत्तिशङ्का तत्परिहारश्च)

स्वफलानुद्देशे प्रवृत्त्यनुपपत्तिरित्यतस्तत्प्रवृत्तिप्रकारमाह -

ॐ लोकवत्तु लीलाकैवल्यम् ॐ (२-१-३४) ॥

(सू.) मत्तानां नृत्तगानादिक्रियावद् ईश्वरस्यापि सृष्टिक्रिया**लीलायाः कैवल्यं** केवलं प्रयोजनं विना लीलैवेत्यर्थः । स्वप्रयोजनाभावेऽपि

सुखोद्रेकाद् दयालुतया परप्रयोजनाय स्वभावादेव सृष्टिक्रिया युक्तेति भावः ॥ ९ ॥

॥ इति नप्रयोजनाधिकरणम् ॥ ९ ॥

## ॥ १० ॥ अथ वैषम्यनैर्घृण्याधिकरणम् ॥

### (दोषमुखदृढयुक्तिविरोधपरिहारः)

अत्र दोषमुखदृढयुक्तिविरोधो निराक्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

वैषम्यादिदोषवत्त्वान्न विष्णोः सर्वकर्तृत्वमिति पूर्वपक्षे, सिद्धान्तयति-

**ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॐ** (२-१-३५) ॥

(सू.)तत्तत्कर्मानपेक्ष्य निर्निमित्तं विभागेन प्राप्ते ईशस्य **वैषम्यनैर्घृण्ये** ते **न** स्तः । **सापेक्षत्वात्** फलदाने कर्मसापेक्षत्वात् । **हि** यतः **तथा** प्रस्तुतार्थं 'पुण्येन पुण्यं नयति'[१] इति श्रुति**र्वक्ती**त्य**र्थः** ।

(त.दी.) 'प्रस्तुतार्थे तथाशब्द उदीर्यते' इत्युक्तेः । इति (पृ.सं.२४२)

### (पूर्वोक्ताक्षेपेण समाधानम्)

उक्तमाक्षिप्य समाधत्ते -

**ॐ न कर्माविभागादिति चेन्नानादित्वात्** (२-१-३६) ॐ ॥

(सू.) यत्कर्मापेक्ष्य फलं दद्यादीश**स्तत्कर्मैव नास्ति** । **अविभागात्** ईशं विनाऽभावात्, तस्यापीशकृतत्वादिति यावत् । स्वकृतापेक्ष्य-फलदानस्य[२] वैषम्याद्यपरिहारकत्वा**दिति चेन्न** । **अनादित्वात्** कर्मणां

---

१. 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' (प्र.३-७, पृ.९०)

२. 'स्वकृतापेक्षफलदानस्य' इति ख.पाठः ।

प्रवाहतोऽनादित्वादित्यर्थः । पूर्वतनस्य कर्मणोऽनादिप्राचीनकर्म-परम्परानुसारेण कारितत्वान्न वैषम्यादीति भावः ।

(त.दी.)तदनन्यत्वादिनयसिद्धास्वातन्त्र्यजगदविभागादस्वातन्त्र्यमिति सूचनायाविभागादित्युक्तिः । प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य इतिवदित्येके । इति (पृ.सं.२४३)

**(कर्मापेक्ष्य फलदातृत्वे ईश्वरस्यास्वातन्त्र्यशङ्का तत्परिहारश्च)**

नन्वथापि नेश्वरस्य कर्मापेक्षया फलदातृत्वं युक्तम् अस्वातन्त्र्य-प्रसङ्गादित्यत आह -

**ॐउपपद्यते चाप्युपलभ्यते ॐ** ( २-१-३७ ) ॥

**(सूत्रार्थः)**

कर्मापेक्षणेऽपि स्वातन्त्र्यं **युज्यत एव** । तस्य स्वाधीनत्वादिति भावः। तर्हि तदपेक्षाया अनपेक्षत्वात् पुनर्वैषम्याद्यापत्तिरित्यत उक्तम्-**उपलभ्यते चेति** ॥ उपलभ्यते हीदृशं कर्मसापेक्षकृतवैषम्यं नैर्घृण्यं च । 'स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशितापि'[1] इत्यादावित्यर्थः । अतो नेदमनिष्टम् । वेदाप्रामाण्याहेतुत्वादित्याशयः ॥ १० ॥

**॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥**

(त.दी.) तत्त्वप्रदीपे तु उपपद्यते स्वातन्त्र्यम् । उपलभ्यते च कर्मादेस्तदधीनत्वमित्येकमर्थमुक्त्वा उपपद्यते च तादृशं वैषम्यादि उपलभ्यमानत्वात् प्रमाणैरित्यावृत्त्याऽनेकधा योजितम् । इति ( पृ.सं.२४५)

---

१. 'स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशिताऽपि । ईशो यतो गुणदोषादिसत्वे स्वयं परोऽनादिरादिः प्रजानाम्' इति (ब्र.सू.भा.उ. चतुर्वेद-शिखाश्रुतिः. पृ.९५)

## ॥ ११ ॥ अथ सर्वधर्मोपपत्त्यधिकरणम् ॥

(भगवतः गुणपूर्णत्वादौ युक्तिविरोधपरिहारः)

अत्र सर्वगुणपूर्तौ सर्वदोषराहित्ये च युक्तिविरोधो निराक्रियते।

(पूर्वपक्षसिद्धान्तौ)

न विष्णुः सर्वगुणपूर्णश्चेतनत्वात्। अन्यथा देवदत्तादीनामपि तत् स्यादिति पूर्वपक्षिते सत्याह -

**ॐ सर्वधर्मोपपत्तेश्च ॐ** (२-१-३९) ॥

**(सू.) सर्वेषां धर्माणां** ज्ञानानन्दादिसद्गुणानां दुःखादिदोषाभावानां च ईशे **उपपत्तेः**। ब्रह्म सदा प्राप्तसर्वगुणं तत्प्रेप्सुत्वे सति तत्र शक्तत्वात्। सामान्यव्याप्त्या देवदत्तादिरिव। तथा, ब्रह्म सदा त्यक्तदोषं तज्जिहासुत्वे सति तत्र शक्तत्वात् सम्मतवदित्युपपत्तिसिद्धत्वात्। चशब्दात् 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का। चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः'[१] इति श्रुतेश्चेत्यर्थः।

**॥ इति श्रीमच्छ्रीनीवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे द्वितीयाध्यायस्य प्रथमः पादः ॥***

---

१. (ब्र.सू.भा.उ.सौपर्णशाखा श्रुतिः) अथवा जाबालिखिलश्रुतिः गीतातात्पर्यरीत्या- पृ.सं.९७

*. एतदनन्तरं मातृकायां वाक्यमेकमुपलभ्यते- 'विरोधिकृत्संवत्सरवैशाख-कृष्णत्रयोदश्यां सौम्यवासरे मध्याह्ने विदिरहळ्ळि भीमाचार्यतनुजयदुपत्याचार्यपुत्रेण रघुपतिना लेखनमिदं कृतम्' इति।

# अथ सूत्रार्थसङ्ग्रहे द्वितीयाध्यायस्य द्वितीयः पादः

## (समयनिरासः)

समयनिरासार्थोऽयं पादः ।[१]

## (निरीश्वरसाङ्ख्यमतनिरासः)

तत्र प्रथमाधिकरणे निरीश्वरसाङ्ख्यमतं दूष्यते ।

## (पूर्वपक्षसिद्धान्तौ)

महदादिकं स्वसदृशकारणजन्यं कार्यत्वाद् घटादिवदित्यनुमानेन प्रकृतेः कारणत्वे सिद्धे तस्या अनन्याधीनतया कार्योन्मुखत्वान्नेश्वरस्तत्कर्तृत्वं चास्तीति पूर्वपक्षे सत्याह -

**ॐ रचनानुपपत्तेश्च नानुमानम् ॐ** (२-२-१)

(सू.) **अनुमानं** परोक्तानुमानसिद्धं प्रधानं **न** जगत्कर्तृ **रचनानुपपत्तेः**। स्वतन्त्रप्रवृत्ती रचना। जडस्य तदनुपपत्तेरित्यर्थः ।

(त.दी.) चशब्देन साधकमानाभावाच्चेति समुच्चीयते । ननु प्रधानस्य कर्तृत्वेऽनुमानं मानमित्यतोऽप्याह। रचनेति। मानमिति शेषः। करणे ल्युट्। अनुमानं न मानम्। कुतः? अनुमानरचनाया अनुपपत्तेर्दुष्टत्वादित्यर्थः। महदादिकं सकारणकं सजातीयकारणकं सोपादानकारणकं स्वतन्त्रकारणकं चेति रचनायां सिद्धसाधनादिति भावः। एतदर्थमेव रचनेत्यनुमानमिति चोक्तिः। अन्यथा अनुपपत्तेश्च न प्रधानमित्यवक्ष्यत्। इति (पृ.सं.२५०,२५१)

**ॐ प्रवृत्तेश्च ॐ** (२-२-२)

(सू.) पटादिसृष्टेश्चेतनस्य **प्रवृत्ते**र्दर्शनाच्चेत्यर्थः । पटसृष्टेश्चेतनेच्छानु-

---

१. वाक्यमिदं 'ख'मातृकायां न दृश्यते ।

सारित्वदर्शनान्महदादिसृष्टिरपि तथाऽङ्गीकार्येति न प्रधानं कर्त्रित्या-शयः ।

**(त.दी.)** तत्त्वप्रदीपे तु चेतनस्यापि निर्विकारस्य न प्रवृत्तिरित्यत आह - **प्रवृत्तेश्च** । योऽहमनुभविता स एष कार्यमारभ इति चेतनस्य प्रवृत्तेरनुभवादि-त्युक्तम् । इति **(पृ.सं.२५२)**

**(पूर्वोक्ताक्षेपेण समाधानम्)**

उक्तमाक्षिप्य समाधत्ते -

**ॐ पयोऽम्बुवच्चेत् तत्रापि ॐ** (२-२-३) ॥

**(सू.) पयः** क्षीरं स्वतो दधि भवति । **अम्बु** स्वतो गच्छति । अतस्तत्राचेतनत्वहेतोर्व्यभिचारादचेतनस्य स्वतःप्रवृत्तौ तयोरेव दृष्टान्तत्वादचेतनमपि प्रधानं कर्त्रिति चेन्न । 'एतेन ह वाव पयो मण्डं भवति' 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' (बृ.उ. ५.८.९) इति **तत्रापि** पयोम्ब्वादावपीशाख्यप्रवृत्तिसद्भावावगमान्न जडं कर्त्रित्यर्थः ।

**(त.दी.)** स्वतः परिणामि पयः, अम्बु तु प्रवृत्तिमात्रे दृष्टान्त इति द्वयोक्तिः । इति **(पृ.सं.२५३)**

**(अयस्कान्तादिरूपाचेतनप्रवृत्तौ व्यभिचारशङ्का तत्परिहारश्च)**

ननु मा भूत् पयोऽम्बुनोर्व्यभिचारः । अयस्कान्तादौ व्यभिचारो भविष्यतीति चेत्, तत्राऽऽह-

**ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ** (२-२-४) ॥

**(सूत्रार्थः)** 'न ऋते त्वत्क्रियते किञ्चनारे' (ऋ. १०.११३.९) इति श्रुतेरीश्वर**व्यतिरेकेण** कस्यापि कर्मणो**ऽनवस्थानान्न** कोऽपि दृष्टान्त

इति । **अनपेक्षत्वात्** महाजनपरिगृहीतत्वाभावान्नानुमानपरिकल्पितं प्रधानं जगत्कर्त्रित्यर्थः ।

॥ इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥

(त.दी.) यद्वा,अयस्कान्तादेरपि पूर्वेणैव निराससम्भवात् कैमुत्येनोक्तार्थं साधयति- **व्यतिरेकेति** ॥ चेतनप्रवृत्तेरित्यस्ति । ईशव्यतिरेकेण चेतन-प्रवृत्तेरप्यनवस्थानान्नानुमानं स्वतः प्रवृत्तिमदिति किमु वाच्यमित्यर्थः । इति (पृ.सं.२५४)

## ॥ २ ॥ अथान्यत्राभावाधिकरणम् ॥

### (सेश्वरसाङ्ख्यमतनिरासः)

अत्रेशोपसर्जनप्रकृतिकर्तृत्ववादिसेश्वरसाङ्ख्यमतं निराक्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

परमेश्वरानुगृहीतप्रधानादेव पर्जन्यानुगृहीतपृथिव्या अङ्कुरोत्पत्ति-वज्जगदुत्पत्तिसम्भवान्नेश्वरस्य स्वातन्त्र्येण कर्तृत्वमिति पूर्वपक्षे सत्याह-

**ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ** (२-२-५) ॥

(सू.) **तृणादीनां** पर्जन्य इव **ईश्वरादन्याधारत्वेन जगतोऽसम्भ-वात्**। तत्प्रेरणं विना स्वातन्त्र्येण कस्यापि प्रकृत्यादेर्वस्तुनः सत्वाभावाच्च नेशोऽनुग्राहकमात्रं किन्तु स्वतन्त्रकर्तेत्यर्थः ।

॥ इत्यन्यत्राभावाधिकरणम् ॥ २ ॥

(त.दी.) अनन्याधीनत्वेशाधीनत्वयोर्लाभायैवं विन्यासः । इति

(पृ.सं.२५५)

## ॥ ३ ॥ अथाभ्युपगमाधिकरणम् ॥

### (चार्वाकमतनिरासः)

अत्र चार्वाकमतं निराकरोति ।

### (पूर्वपक्षसिद्धान्तौ)

अन्तरेणापीश्वरं पूर्वस्मात् पूर्वस्मादुत्तरोत्तरोत्पत्तिसम्भवाच्छ्रुत्यादेश्चाप्रामाण्यान्न युक्तं विष्णोः कारणत्वमिति पूर्वपक्षे सत्याह -

**ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ** (२-२-६) ॥

**(सू.) अभ्युपगमे** = चार्वाकसिद्धान्तेऽतीन्द्रियपदार्थाभावेनार्थाभावात् विषयप्रयोजनयोरभावात् न तन्मतं युक्तमित्यर्थः ।

॥ इत्यभ्युपगमाधिकरणम् ॥ ३ ॥

**(त.दी.)** त्वदीयशास्त्रस्य सिद्धान्तत्वमुपगम्यते न वा । अन्तेऽस्मदिष्टम् । आद्ये विषयप्रयोजनवत्त्वं नोपेयते उतोपेयते । नाऽद्यः । अभ्युपगमेऽपि सिद्धान्तत्वस्याऽभ्युपगमेऽपि तद्व्यापकयोरर्थयोरभावाऽभ्युगपगमाद् व्याहत्यापातात् । नान्त्यः । दृष्टादृष्टयोर्विषयप्रयोजनयोरभावान्न युक्तं तन्मतमित्यर्थः । इति ( पृ.सं.२५६)

## ॥ ४ ॥ अथ पुरुषाश्माधिकरणम् ॥

### (निरीश्वरसाङ्ख्योक्तजीवोपसर्जनप्रधानकर्तृत्ववादनिरासः)

अत्र निरीश्वरसाङ्ख्योक्तो जीवोपसर्जनप्रधानकर्तृत्ववादोऽपाक्रियते ।

चेतनोपसर्जनशरीरस्याश्मानयनादिकर्तृत्वदर्शनेन पुरुषोपसर्जनप्रधानेनैव जगदुत्पत्तिसम्भवान्नेश्वरस्तत्कारणत्वं चेति पूर्वपक्षे सत्याह-

**ॐ पुरुषाश्मवदिति चेत् तत्रापि[1] ॐ (२-२-७) ॥**

(सू.) अत्राश्मशब्देन सादृश्याद् देह उच्यते । ततश्च **पुरुषाश्मवत्** चेतनयुक्तशरीरवद् अचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात् प्रवर्तत **इति चेत्** । न । **तत्रापि** शरीरजन्यप्रवृत्तावपीश्वरस्यैव कारणत्वे 'न ऋते त्वत्क्रियते किञ्चनारे' (ऋ.१०.११३.९) इति श्रुतिसद्भावेन दृष्टान्तत्वायोग इत्यर्थः ।

**(सूत्रे 'देहवत्' इत्यनुक्त्वा 'अश्मवत्' इति वचने कारणोक्तिः)**

अत्र देहवदिति वक्तव्येऽश्मवदिति वचनं शरीरप्रवृत्तिविषयद्योतनार्थम् इति **अभिनवचन्द्रिकायाम्** ।

" 'न ऋते त्वत्क्रियते' (ऋ.१०.११३.९) इति तत्रापि[2] तथात्वे दृष्टान्ताभावात्" इति 'सन्निधानाच्चेतनस्य वर्तते यद्यचेतनम् । तथाऽप्यबुद्धिपूर्वत्वात्' (अनु.व्या. २.५९२) इति भाष्यानुव्याख्यानाभ्यां 'तत्रापि' 'तथाऽपि' इति पाठद्वयमभ्यनुज्ञायते ।

जीवस्योपसर्जनत्वे दूषणान्तरमाह-

**ॐ अङ्गित्वानुपपत्तेः ॐ (२-२-८) ॥**

(सू.) यदि पुरुषोपसर्जनशरीरमेव कर्तृ तर्हि पुरुषोऽङ्गी शरीरमङ्गमिति प्रामाणिकलौकिकव्यवहारस्यानुपपत्तेर्नायं दृष्टान्तो युक्त इत्यर्थः ।

**॥ इति पुरुषाश्माधिकरणम् ॥ ४ ॥**

(त.दी.) प्रागुक्तश्रुतावस्य हैतुकत्वेनानादरादत्र चशब्दाप्रयोगः । इति (पृ.सं.२५८)

---

१. 'तथाऽपि' इति ह्.पाठः । (पृ.७४)

२. 'इत्यत्रापि' इति मातृकागतः पाठः प्रामादिक इति भाति ।

## ॥ ५ ॥ अथान्यथानुमित्यधिकरणम् ॥

### (प्रकृत्युपसर्जनजीवकर्तृकवादनिरासः)

अत्र प्रकृत्युपसर्जनजीवकर्तृकवादो निराक्रियते ।

### (पूर्वपक्ष-सिद्धान्तौ)

प्रधानोपसर्जनपुरुषादेर्जगदुत्पत्तिसम्भवेनेश्वरवैयर्थ्यान्न तस्य कारणत्वमिति पूर्वपक्षे सत्याह-

**ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ** (२-२-९) ॥

(सू.) **अन्यथानुमितौ** प्रकृतिरप्रधानं जीवः प्रधानकर्तेति पुरुषाश्मदृष्टान्तेनानुमितौ चाङ्गित्वानुपपत्तिः । कुतः ? **ज्ञशक्तिवियोगात्** ज्ञस्य जीवस्य शरीरसम्बन्धे शक्त्यभावात् तदर्थमीशोऽङ्गीकार्य इत्यर्थः ।

(त.दी.) इतरेत्यत्र श्रुत्यादिप्राप्तं जीवकर्तृत्वम् अत्र तु समयप्राप्तं निरस्यत इति भेदः । इति ( पृ.सं.२५९)

उपसंहरति-

**ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ** (२-२-१०) ॥

(सू.) सकलश्रुतिस्मृतियुक्तिविरुद्धत्वात् सर्वमप्यनीश्वरमतमप्रमाणमित्यर्थः।

॥ इत्यन्यथानुमित्यधिकरणम् ॥ ५ ॥

## ॥ ६ ॥ अथ वैशेषिकाधिकरणम् ॥

### (वैशेषिकमतनिरासः)

अत्र वैशेषिकमतमपाक्रियते ।

### (तार्किकाभिमतासमवायिकारणनिराकरणम्)

परमात्मनोऽष्टगुणवत्त्वान्नानन्तगुणवत्त्वं तस्येति कथिते तन्मतस्या-

युक्ततामभिप्रेत्य तदभिमतासमवायिकारणं निराह -

**ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ** ( २-२-११ ) ॥

(सू.) **महद्दीर्घवत्** महत्त्वाद् दीर्घत्वाच्च कारणभूतत्र्यणुकादिगतात् परिमाणात् कार्यगतं परिमाणं जायते। तथा **ह्रस्वपरिमण्डलाभ्यां** ह्रस्वत्वात् पारिमण्डल्याच्च परमाणुद्व्यणुकगतात् परिमाणात् तत्तत्कार्यगतपरिमाणमुत्पद्यत इत्यर्थः । अन्यथा महत्त्वदीर्घत्वाभ्यामपि नोत्पद्येताविशेषादिति **वा**शब्दार्थः ।

**(त.दी.)** अत्र महत्त्वदीर्घत्वेत्यादिवाच्ये महदित्यादिनिर्देशस्तु 'प्रचयविशेषाच्च महत्' इति काणादसूत्रानुसारादिति ध्येयम् । दार्ष्टान्तिकस्य द्वित्वाद् वा विषयव्याप्त्यर्थं वा परोपेतपरिमाणचतुष्कमप्रामाणिकमिति सूचयितुं वा दृष्टान्तद्वयोक्तिः। इति (पृ.सं.२६२,२६३)

**(निमित्तकारणनिरासः)**

एवमसमवायिकारणमपाकृत्य निमित्तकारणं निराकरोति -

**ॐ उभयथाऽपि न कर्मातस्तदभावःॐ** (२-२-१२)

(सू.) यतः **उभयथाऽपि** ईशेच्छाया नित्यत्वानित्यत्वरूपप्रकारद्वयेऽपि **न कर्म** परमाणुषु क्रियाभावो **अतः** क्रियाभावात् **तदभावः** द्व्यणुकादिकार्याभाव इत्यर्थः । ईश्वरेच्छाया नित्यत्वे प्रलये इच्छायां सत्यामपि परमाणुक्रियाभावेन व्यभिचारान्न तद्धेतुत्वम्। अनित्यत्वेऽनवस्थाद्यापातेनोत्पादकाभावेनेश्वरेच्छाया हेतुत्वं न युक्तमिति हृदयम् । स्वमते त्वीश्वरेच्छाया नित्यत्वेऽपि वैदिकत्वान्नोक्तदोष इति द्रष्टव्यम् ।

अत उभयथाऽपि तदभाव इत्येवालं लाघवादित्याशङ्कापरिहारस्तु **अभिनवचन्द्रिकायाम्**[१] बोध्यः ।

## (समवायिकारणनिरासः)

अथ समवायिकारणं पराचष्टे -

**ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ** ( २-२-१३ )

**(सू.)** अवयवावयव्यादीनां भिन्नत्वमभ्युपेत्य तेषां **समवायाभ्युपगमाच्च** तन्मतमसत् । कुतः? समवायस्यापि समवायिभ्यां विभिन्नत्व**साम्यात्** मृद्घटसमवाय इत्यादिविशिष्टबुद्ध्युत्पत्तये समवायान्तरापेक्षायां तत्राप्येवमित्य**नवस्थानादित्यर्थः** । समवायाभावान्न परमाण्वादीनां द्रव्यादिकारणत्वं युक्तमिति भावः ।

## (प्रलयनिरासः)

एवं कारणत्रयनिरासेन सृष्टिं निरस्य प्रलयं निराकरोति -

---

१. अत्र नञ्ग्रहणं कर्मग्रहणं च किमर्थम्, उभयथाऽपि तदभाव इत्येव किं नोच्यते । ईश्वरेच्छायाः कर्मनिमित्तत्ववद् द्व्यणुकादावपि निमित्तत्वेन ईश्वरेच्छा-नित्यत्वानित्यत्वाभ्यां द्व्यकणुककार्यासम्भवस्य व्युत्पादयितुं शक्यत्वात् । सूत्रं चैवं सति लघु स्यात् अतश्शब्दस्याप्यग्राह्यत्वादिति चेत्, सत्यम्- ईश्वरेच्छा कर्मणीव द्व्यणुकादावपि निमित्तम्, तथाऽपि- नेश्वरेच्छाया नित्यत्वे द्व्यणुकाभाव आपादयितुं शक्यते । द्व्यणुकस्य प्रत्युत्पन्नपरमाणुद्वयसंयोगजन्यत्वात् प्रलयकाले ईश्वरेच्छासद्भावेऽपि परमाणुसंयोगाभावाद् द्व्यणुकानुत्पादेऽपि सृष्टिकाले संयोगसद्भावेन ईश्वरेच्छातः परमाणुद्वयसंयोगोत्पत्त्या द्व्यणुकोत्पत्तिसम्भवात् । न हि सहकारिविरहे कारणं कार्योत्पादकं नेति तत्समवधानेऽपि नोत्पादकमिति सम्भवति । परमाणुकर्म तु न प्रत्युत्पन्नकारणजन्यमिति उभयथाऽपि न कर्मोत्पादः सम्भवतीत्यापादयितुं शक्यमिति भावेन 'उभयथाऽपि नकर्म' इत्युक्तम् । -इति अभिनवचन्द्रिकायाम्, (पृ. ३२२)

**ॐ नित्यमेव च भावात् ॐ** (२-२-१४) ॥

(सू.) **चः** समुच्चये । किञ्च सृष्टिकारणभूताया ईश्वरेच्छाया **नित्यं भावात्** नित्यमेव कार्यं स्यात् । न कदाऽपि प्रलय इत्येवार्थः । अथवा, प्रागसतः सत्तासमवायो जनिरिति परैरभ्युपगमात् समवायस्य **नित्यमेव भावात्** सर्वं नित्यं जनिमत् स्यादित्यर्थः । तथाच सृष्टिप्रलययोरनुपपत्तिरित्याशयः ।

**(परमाणुनित्यत्वनिरासः)**

अभ्युपेत्य परमाणुनित्यत्वं तदारम्भवादो दूषितः । इदानीं तन्नित्यत्वमेव नेत्याह -

**ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ** ( २-२-१५ ) ॥

(सू.) किञ्च पार्थिवादिपरमाणूनां **रूपरसादिमत्त्वान्नित्यत्वस्य विपर्ययो**ऽनित्यत्वं स्यात् । घटादौ तथा **दर्शनादित्यर्थः** ।

(त.दी.) भौतिकत्वेन रूपादेर्विशेषणात् नेशादौ व्यभिचारः । इति (पृ.२६८)

**(परमाणुनित्यत्वानित्यत्वयोर्दोषकथनम्)**

रूपादिमत्त्वेऽपि नित्यत्वानित्यत्वयोर्दोषमाह -

**ॐ उभयथा च दोषात् ॐ** (२-२-१६) ॥

(सू.) **उक्तपक्षद्वयेऽपि दोषादित्यर्थः** । रूपादिमत्त्वेऽपि नित्यत्वे घटादेरपि नित्यत्वापत्तिः । अनित्यत्वे कारणाभावे न द्व्यणुकादिकार्याभाव इति भावः ।

**(अप्रामाणिकत्वाच्च परमाण्वारम्भवादोऽयुक्तः)**

उपसंहरति -

**ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ( २-२-१७ ) ॥**

(सू.) परमाण्वारम्भवादस्य श्रुत्यादिपरिग्रहशून्यत्वात् तद्विरुद्धत्वाच्च **अनपेक्षा** अनादरणं युक्तमित्यर्थः ॥

॥ इति वैशेषिकाधिकरणम् ॥ ६ ॥

## ॥ ७ ॥ अथ समुदायाधिकरणम् ॥

### (वैभाषिक-सौत्रान्तिकमतनिरासः)

अत्र बौद्धप्रभेदयोर्वैभाषिकसौत्रान्तिकयोर्मतं निरस्यते ।

### (पूर्वपक्षसिद्धान्तौ)

परमाणुसमुदाय एव घटादिः । स च विद्यमानः सर्वः क्षणिक एव कालकर्माख्यनिमित्तेनैव जायत इति नेश्वरस्तत्कारणत्वं वेति पूर्वपक्षे सत्याह -

**ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ (२-२-१८) ॥**

(सू.) अणु**समुदाय** एव घटादिरिति मते तस्यैकहेतुकत्वमसम्भावितमेव । एकस्मात् समुदाय इत्यस्य व्याहतेः । **उभयहेतुकेऽपि** मिलितानेकहेतुके समुदायेऽङ्गीक्रियमाणेऽपि **तदप्राप्तिः** समुदायानुपपत्तिरित्यर्थः। मेलनस्यैव समुदायत्वेनाऽत्माश्रयात् । समुदायद्वयस्य कार्यकारणभावाङ्गीकारेऽनवस्थानात् । मेलने सति समुदायः समुदाये सति मेलनमित्यन्योन्याश्रयात् । व्यक्तिबाहुल्याङ्गीकारेऽनवस्थानात् । विरलानेकहेतुकत्वे तु विरलपरमाणुप्रवाहस्य सदा सद्भावेन समुदायोऽपि सदा स्यादिति समुदायरूपकार्यविलयात्मकप्रलयाभावप्रसङ्गादिति भावः।

(त.दी.) केचित्तु मिलिता विरलाश्चेत्युभये येऽणवस्तदुभयहेतुकेऽपि समुदाये तदप्राप्तिः । तदिति सन्निहितसमुदायो बुद्धिस्थलयश्चोच्यत इति पक्षद्वयस्यापि सूत्र एव निरास इत्यप्याहुः । इति (पृ.सं.२७२)

(प्रलयाभावानुपपत्तिशङ्का तत्समाधानं च)

ननु तथाऽपि न प्रलयाभावः। समुदायोत्पत्तेः प्रवाहतः सदा सत्वेऽपि वित्तिव्यवहारयोरभावादेव प्रलयोपपत्तेरित्याशङ्क्य समाधत्ते-

**ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ (२-२-१९)।**

(सू.) परमाणुगतानेकत्वसङ्ख्यारूपस्य समुदायस्य सदा प्रवाहतः सत्वेऽपि तत्प्रतीति(तत्प्रमिति)व्यवहारयोः **इतरेतरप्रत्ययत्वात्** सामीप्यहेतुकापेक्षाबुद्ध्यधीनत्वात् तस्याश्च सदाऽभावेन समुदायप्रतीत्यादेरभावाल्लयोपपत्ति**रिति चेत्। न।** विरलपरमाणुभ्यो जातानां मिलितपरमाणूनां परमाणुसमुदाय**मात्रजननिमित्तत्वाद्** अपेक्षाबुद्धिनिमित्तत्वाभावादित्यर्थः। क्षणिकवादे एकैककार्योत्पादेनैव परमाणूनां नाशाद् आदौ परमाणूनां दर्शनं,ततोऽपेक्षाबुद्धिः, ततः समुदायविशेषे वित्तिव्यवहाराविति क्रमः स्यात्। न ह्यन्यत्र दर्शनमन्यत्रापेक्षाऽन्यत्र व्यवहार इति सम्भवति।अतिप्रसङ्गात्। एवं पुरुषस्यापि क्षणिकत्वेनैकस्य दर्शनमन्यस्यापेक्षाबुद्धिरन्यस्य व्यवहार इत्यसम्भवाच्च। अतः कदाऽपि समुदाये वित्तिव्यवहारौ न स्यातामिति सृष्ट्यभावप्रसङ्गादिति भावः।

(त.दी.) इतरेत्याद्युक्तिरपेक्षाबुद्धिस्वरूपोपदर्शनाय। तदप्यन्योन्यसाहित्यरूपसामीप्यहेतुका सेति सूचयितुम्। इति (पृ.सं.२७४)

(‘विरलपरमाणुभ्यो मिलितपरमाणुरूपविसदृशकार्योत्पत्तिरेव न युक्ता’ इति कथनम्)

अङ्गीकृत्य चेदमुदितम्। वस्तुतस्तु विरलपरमाणुभ्यो मिलितपरमाणुरूपविसदृश-कार्यजननमेवायुक्तमित्याह-

**ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ** (२-२-२०)

(सू.) **उत्तरस्य** =विसदृशकार्यस्य **उत्पाद** एव पूर्वस्य कारणस्य **निरोधात्** नाशात् प्रथमं स्वसदृशं कार्यमुत्पाद्य पश्चाद् वैसादृश्यमपि जनयतीति न युक्तमित्यर्थः ।

(त.दी.) सुधायां तूत्पत्तिमात्र एव सदृशकार्योत्पाद एव निमित्तत्वाद् विसदृशकार्ये निमित्तत्वाभावादिति पूर्वसूत्रांशस्यार्थान्तरमुक्त्वोत्तरोत्पादे चेत्यस्य कार्योत्पाद एव पूर्वनाशान्न कार्ये संस्काराधायकत्वम् । तेनाऽत्मादिक्षणिकत्ववादे व्याप्त्याद्यनुसन्धातुरेकस्याभावेऽपि पूर्वपूर्वात्मसंस्कारयोगिनामुत्तरात्मना-मुत्पत्त्या तर्कादिव्यवहारो युक्त इति न युक्तमित्यर्थान्तरमुक्तम् । इति (पृ.सं. २७५,२७६)

(प्रतिक्षणकार्योत्पत्तिनिरासः)

किञ्च, प्रतिक्षणं कार्योत्पत्तिरेव न युक्तेत्याह -

**ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ** ( २-२-२१ ) ॥

(सू.) असति कारणे कार्यमुत्पद्यते उत सति ? आद्ये **असति** कारणे कार्योत्पत्तिरित्यङ्गीकारे तत्तस्य कारणमिति **प्रतिज्ञायाः उपरोधः** हानिः। **अन्यथा** कारणे सति कार्योत्पाद इति पक्षे **यौगपद्यं** कार्याणां स्यादित्यर्थः । प्रथमक्षणोत्पन्नपरमाणूनां कार्योत्पत्तिसमयेऽपि सत्त्वाङ्गीकारे क्षणिकत्वनियमाभावेन विनाशकसम्पत्तिपर्यन्तमवस्थानं स्यात् । तथाच कारणे सति कार्यं भवत्येवेति नियमात् पुनः कार्योत्पत्तिः स्यादिति सकलकार्याणामविच्छिन्नजनिरूपं यौगपद्यं स्यादित्युपपादनं द्रष्टव्यमिति भावः । यद्वा, परमाणूनां क्षणिकत्वाद् यस्मिन् क्षणे परमाणवस्तस्मिन्नेव क्षणे कार्यावस्थानं तत्कार्याणां चैवमिति सर्व-कार्याणां सहानवस्थानरूपं यौगपद्यं स्यात् । ततश्च कार्यकारणयोः

पौर्वापर्यमेव न स्यात् । न च क्षणेषु पूर्वापरमध्यभागोऽस्ति । येन प्रथमभागे परमाणूत्पत्तिर्द्वितीयभागे कार्यजनकत्वमिति विभागः स्यादित्युपपादनं बोध्यम् ।

(त.दी.) पराभिमतत्वाद् असत्पक्षस्य पूर्वनिर्देशः । इति (पृ.सं.२७७)

**(क्षणिकवादे विनाशनिरासः)**

एवं क्षणिकमते उत्पत्तिं निरस्य विनाशं च दूषयति -

**ॐ प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॐ** (२-२-२२) ॥

(सू.) **प्रतिसङ्ख्यानिरोधः** बुद्धिपूर्वनाशः **अप्रतिसङ्ख्यानिरोधः** अबुद्धिपूर्वनाशः तावेव निस्सन्तानविनाशससन्ताननाशावित्युच्येते । **तयोः अप्राप्तिः** अनुपपत्तिः । कुतः? **अविच्छेदात्** प्रवाहोच्छेदाभावादित्यर्थः । कार्यमुत्पाद्य तमपहाय तत्क्षणे नाशस्तस्याप्येवमिति प्रतिक्षणं नाशो हि निस्सन्ताननाशः । स तावन्न युज्यते । कार्यमुत्पाद्य तत्परित्यागसमये सत्वेन सतश्च कार्यजनकत्वनियमेन कार्यमेवोत्पादयेन्न तु नश्येत् । तद्वियोगसमयेऽप्येवमिति न कदाऽपि निस्सन्तानो नाशः । नापि ससन्तानः । कार्यमुत्पाद्य तेन सहैव मुद्गरप्रहारादिना क्षणमात्रे नाशो हि ससन्तननाशः । सतो हि घटस्याऽत्यन्तिको विनाशः । अतोऽसौ सत्त्वात् कार्यमुत्पादयेन्न तु नश्येत् । एवमुत्तरत्रापि सत्वात् कार्यमेवोत्पादयेन्न तु नश्येदिति सन्तानोच्छेदावसराभावादिति भावः।

नन्वर्थक्रियाकारित्वरूपसत्त्वान्यथानुपपत्त्या भावानां क्षणिकत्वमङ्गीकार्यमित्यत आह -

**ॐ उभयथा च दोषात् ॐ** (२-२-२३)

(सू.) कारणे सति कार्यं भवत्येवेति **नियमेऽनियममे वोभयथाऽपि दोषादित्यर्थः**। आद्ये कार्यकारणयोः सव्येतरविषाणवत्समानकालीनत्वात् कार्यकारणभावो न स्यात्। द्वितीये प्रथमक्षणे कार्यानुत्पादकत्वेनार्थक्रियाकारित्वाभावादसत्वं स्यात्। ततः न कदाऽपि कार्योत्पत्तिः स्यात्। ततश्च सत्वान्यथानुपपत्त्या कल्प्यमानं क्षणिकत्वं च न स्यादिति भावः। अस्मन्मते त्वर्थक्रियायोग्यत्वमेव सत्वमिति द्रष्टव्यम्।

**(अनुमानेन भावानां क्षणिकत्वसिद्धिशङ्का, तत्समाधानं च)**

ननु मा भूदर्थापत्त्या क्षणिकत्वसिद्धिः। तथाऽपि यत् सत् तत् क्षणिकं यथा दीपादि, सन्तश्चामी भावा इत्यनुमानेन भावानां क्षणिकत्वं सिद्ध्यतीत्यत आह -

**ॐ आकाशे चाविशेषात् ॐ** (२-२-२४)

(सू.) दीप इवाऽ**काशे** पूर्वोत्तरकालयोः परिमाण**विशेषाभावादित्यर्थः**। तथा चाऽकाशे परिमाणविशेषादर्शनेन तस्याक्षणिकत्वं सिद्धमिति तद्दृष्टान्तेन सत्वादिति हेतुनैव सर्वस्य क्षणिकत्वाभावस्यापि साधयितुं शक्यत्वेन परोक्तो हेतुः प्रकरणसम इति भावः। दुःखाभावं सुखमित्याहुस्तद्दूषयति- **आकाशे चेति**॥ आकाशे यो भावसाधको न्यायधर्मिप्रतियोग्यनपेक्षप्रतीतत्वरूपस्तस्य सुखेऽप्यविशेषान्न सुखमभावरूपमिति वा।

बाधितं चेत्याह -

**ॐ अनुस्मृतेश्च ॐ** (२-२-२५)

(सू.) 'सोऽयं घटः' इति **प्रत्यभिज्ञानाच्चा**क्षणिकत्वमित्यर्थः।

सिद्धान्ते विशिष्टशुद्धयोर्भेदाभेदेन स एवायमिति सावधारणप्रत्यभिज्ञायाः भ्रमत्वेऽपि निरवधारणाया यथार्थत्वमेवेति ज्ञातव्यम् ।। ७ ।।

**।। इति समुदायाधिकरणम् ।। ७ ।।**

## ।। ८ ।। अथासदधिकरणम् ।।

### (शून्यवादमतनिरासः)

अत्र शून्यवादिमतं निराकरोति ।

### (पूर्वपक्षसिद्धान्तौ)

शून्यसमयविरोधान्न विष्णोर्जगत्कारणत्वमिति पूर्वपक्षे आह -

**ॐ नासतोदृष्टत्वात् ॐ** (२-२-२६) ।।

(सू.) **असतः** शून्यस्य जगत्कारणत्वं **न** युक्तम् । **अदृष्टत्वात्** प्रमाणदृष्टत्वाभावादित्यर्थः । **ना** पुरुषः **सतः** आदिकालीनस्य कार्यस्य कर्ताऽनुमातव्यः । कुतः?[१] **दृष्टत्वात्** अधुनातनानां कार्याणां पुरुषकर्तृकत्वस्य निश्चितत्वादिति वा ।

(त.दी.)असतः शून्यस्य जगत्कारणत्वं न युक्तम् । कुतः? मानाभावादिति भावः । कुतो न मानमित्यतः अदृष्टत्वात् शून्यकारणत्वस्याप्रत्यक्षत्वात् । क्वापि तत्कारणत्वस्यादर्शनाद् दृष्टान्ताभावेन नानुमानिकत्वादिति यावत् । तथा अदृष्टत्वात्, आगमस्येति शेषः, शून्यकारणत्वबोधकागमस्यादर्शनादिति परम्परया अदृष्टत्वादिति हेतुर्योज्यः । तेन मानाभावो मेयाभावहेतुर्न तु प्रत्यक्षाभावमात्रमिति न शङ्क्यम् । सुधायां तु असतः शून्याज्जगतो जन्म नेति पञ्चम्यन्ततया व्याख्यातम् । यद्यपि शून्यं नासदित्यभ्युपेतं माध्यमिकैः । तथाऽपि सर्वधर्मशून्यत्वे असत्त्वमापाद्य असत इत्युक्तम् । इति (पृ.सं.२८१,२८२)

---

१. 'अतोऽदृष्टत्वात्' इति ख.पाठः प्रामादिक इत्यवधेयम् ।

(अदृष्टमप्यसतः कारणत्वं भवत्विति शङ्का, तन्निरासश्च)

अदृष्टमप्यसतः कारणत्वं किं न स्यादित्यत आह -

**ॐ उदासीनानामपि चैवं सिद्धिः ॐ (२-२-२७)**

(सू.) **एवम्** असतः कारणत्वे सति **हेयोपादेयबुद्ध्यविषयाणां** खपुष्पादीनामपि सकाशात् सौरभ्यादि**कार्यसिद्धिः** स्यादित्यर्थः। तन्त्वाद्युपादानाद् **उदासीनानामपि** चिकीर्षादिरहितानां च पुंसां सकाशात् पटादि**कार्यसिद्धिः** स्यादिति वा। **उदासीनानां** देशादिनियमानपेक्षाणामपि **कार्याणां सिद्धि**रुत्पत्तिः स्यादिति वा। यदि जगच्छून्यादेव भवेत् तदा 'गोधूमाः कृष्णभूमेः सम्पद्यन्ते न पाण्डुभूमेः', 'वसन्ते किंशुकाः पुष्पिता भवन्ति न वर्षासु', 'त्रिहायण्येव गौर्गर्भं धत्ते नान्यथा', इत्यादिनियमो न स्यादित्यर्थः। तथा च शून्यादेव जगदुत्पत्तौ कर्त्रुपादाननिमित्तापेक्षा न स्यादिति समुदायार्थः।

(त.दी.) खपुष्पादीनामिति वाच्ये उदासीनेत्युक्तिर्हेतुगर्भतया नेष्टापत्तिरिति सूचयितुम्। इति (पृ.सं. २८३,२८४)

('जगच्छून्येऽध्यस्तं भवतु' इति शङ्का तन्निरासश्च)

ननु मा भून्मृदो घट इव शून्यपरिणामः प्रपञ्चस्तथाऽपि शून्येऽध्यस्तः किं न स्यात्? तत्रोक्तदोषाभावादित्यत आह -

**ॐ नाभाव उपलब्धेः ॐ (२-२-२८)**

(सू.) जगत् **अभावः** असत् **न**। सदिति **उपलब्धेः** प्रतीयमानत्वादित्यर्थः।

(त.दी.) सुधायां तु तवासतो जनिरिव मम सतो जनिर्न दृष्टा। जगतः सत्त्वासम्मतेरित्यतो जगतोऽसत्त्वं नेत्याहेत्यवतार्य व्याख्यतम्। इति (पृ.सं.२८५)

(सत्वेन प्रतीयमानस्यापि जगतः स्वाप्नजाग्रत्वादिवद् असत्वं स्यादित्याशङ्का , तत्परिहारश्च)

सदिति प्रतीयमानस्यापि स्वाप्नजाग्रत्वादिवदसत्वं किं न स्यादित्यत आह-

**ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ** (२-२-२९)

(सू.) **स्वप्नजाग्रत्वादिवत् असन्न** । कुतः? **वैधर्म्यात्** 'स्वप्न एवायं न जाग्रत्' इत्यादिबाधकप्रत्ययविषयत्वात् । प्रकृते बाधकप्रत्ययविषयत्वाभावेन वैषम्यादित्यर्थः ॥ ८ ॥

**॥ इत्यसदधिकरणम् ॥ ८ ॥**

(त.दी.) सुधायां दृश्यत्वादिमिथ्यात्वहेत्वपाकरणार्थमप्येतदवतार्य स्वप्नादिवज्जगद् दृश्यत्वादिना न मिथ्या । अर्थक्रियाकारित्वादिवैधर्म्यात् सत्यत्वसिद्धेः , चशब्दोक्तसत्यत्वानुभवबाधात् , तत एव मिथ्यात्वे कस्यापि मानस्याभावाच्चेति सत्प्रतिपक्षबाधमिथ्यात्वमानाभावोक्तिपरमप्युक्तम् । तेन बाधाभावो नासिद्ध इति ध्येयम् ।

तत्त्वप्रदीपे तु स्वप्नादिवज्जगन्न दृश्यत्वादिना मिथ्या । स्वप्न एवायं न जागरित इति प्रतीत्या जाग्रत्वाद्येकदेशस्यैव मिथ्यात्वेन सर्वस्य तदभावेन साध्यवैकल्यात् । जाग्रत्त्वस्य दृष्टान्तत्वे बाधकभावाभावाभ्यां वैधर्म्यादिति योजितम् । एतेनैवाद्वैतमतं च प्रत्युक्तं बोध्यम् । इति (पृ.सं.२८६,२८७)

**॥ ९ ॥ अथानुपलब्ध्यधिकरणम् ॥**

**(विज्ञानवादिमतनिरासः)**

अत्र विज्ञानवादिमतं निराक्रियते ।

**(पूर्वपक्षसिद्धान्तौ)**

एकं विज्ञानमेव तत्त्वं तदात्मकमेवाखिलं जगदिति न तदुत्पत्तावीश्वरेण

कृत्यमिति पूर्वपक्षे, आह -

**ॐ न भावोऽनुपलब्धेः ॐ** (२-२-३०)

**(सू.)** जगद् भावः ज्ञानरूपं न भवति। भवतेरनुभवार्थत्वात्। उपसर्गा हि धातुलीनार्थस्य व्यञ्जका एव। ज्ञानमेव जगदाकारेण परिणमत इति नेत्यर्थः। **अनुपलब्धेः** तथाऽनुभवात् तद्विरोधाच्चेत्यर्थः। ज्ञानज्ञेययोर्भेदस्यैव साक्षिसिद्धत्वादित्याशयः।

**(त.दी.)** ज्ञानमिति वाच्ये भाव इत्युक्तिर्नासत इत्युक्तदोषो नेति दर्शयितुम्। केचित्तु प्राप्तौ भुव् शुद्धिचिन्तयोरिति कविकल्पद्रुमोक्तेश्चिन्तारूपज्ञानार्थस्य भुवो रूपमिति भावः। युष्माकं भाः साकारत्वेनाभिमतं ज्ञानमिति वाऽभिप्रेत्य भाव इत्युक्तिरित्याहुः। इति (पृ.सं.२८८,२८९)

**(हेत्वन्तरेण जगतः विज्ञानात्मकत्वनिरासः)**

हेत्वन्तरमाह-

**ॐ क्षणिकत्वाच्च ॐ** (२-२-३१)

**(सू.)** ज्ञानस्य **क्षणिकत्वाद्** अर्थानां च स्थायित्वस्य साक्षिसिद्धत्वाच्च न तयोरैक्यमित्यर्थः।

किञ्च -

**ॐ सर्वथाऽनुपपत्तेश्च ॐ** (२-२-३२)

**(सू.)** श्रुतिस्मृतिविरुद्धत्वेन **सर्वथाऽनुपपन्नत्वात्** प्रमाणाभावाच्च सकलं बौद्धमतमनुपादेयमित्यर्थः॥ ९॥

॥ इत्यनुपलब्ध्यधिकरणम्॥ ९॥

**(त.दी.)** सर्वथा प्रत्यर्थं क्षणिकत्वकल्पने शून्याद्वैतकल्पने प्रकटने प्रच्छादने वा वेदद्वेषपक्षा न ग्राह्याः। कुतः ? अनुपपत्तेः उपपत्त्युपलक्षितमानाभावात् तद्विरुद्धत्वाच्चेत्यर्थः। इति (पृ.सं.२९०)

## ॥ १० ॥ अथ नैकस्मिन्नधिकरणम् ॥

### (जैनमतनिरासः)

अत्र जैनमतं निराक्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

सप्तभङ्गिजगदात्मा दृष्टसाधनैर्भविष्यति । स च कायपरिमाण इतीश्वरेण कृत्याभावान्न तल्लक्षणं युक्तमिति पूर्वपक्षे आह-

**ॐ नैकस्मिन्नसम्भवात् ॐ (२-२-३३)**

(सू.) सत्वम् असत्वं सदसत्वं सदसद्विलक्षणत्वं सत्वे सति सदसद्विलक्षणत्वम् असत्वे सत्यसद्विलक्षणत्वं सदसत्वे सति सदसद्विलक्षणत्वमित्यनियतसप्तप्रकाराः **एकस्मिन् न** युक्ताः । **असम्भवात्** । अप्रामाणिकत्वेनासम्भावितत्वादित्यर्थः ।

### (जीवस्य जिनाभ्युपगतशरीरपरिमाणत्वस्य निरासः)

यदपि देहपरिमाणत्वं तैरभ्युपेतं जीवस्य सर्वत्र चेष्टासिद्ध्यर्थं तन्निराकरोति -

**ॐ एवं चाऽत्माऽकार्त्स्न्यं ॐ (२-२-३४)**

(सू.) **एवं** देहपरिमाणवत्त्वे **सत्यात्मनो** मशकादिदेहस्थस्य कर्मवशाद् गजादिदेहप्राप्तौ **अकार्त्स्न्यम**पूर्णत्वं सर्वदेहाव्यापित्वं स्यात् । ततश्च न सर्वदेहचेष्टा स्यादिति भावः। तथा **आत्मनो** गजादिदेहस्थस्य मशकादिदेहप्राप्तावात्मनो देह एवाऽ**कार्त्स्न्यम्** अतिरेकः स्यादित्यर्थः। तथाच कायपरिमाणत्वभङ्ग इति भावः ।

(त.दी.) चशब्देनैवैषोऽप्यर्थः सङ्ग्राह्यो न वृत्त्यन्तरेणेत्येके। इति (पृ.सं.२९२)

(‘जीवः यदा यद्देहं प्राप्नोति तदा तत्परिणामः’ इत्यस्य निरासः)

ननु ‘यदा यद्देहमाप्नोति तदा तत्परिमाणः’ इति चेत् तत्राऽऽह -

**ॐ नच पर्यायादप्यविरोधो विकारादिभ्यः ॐ** ( २-२-३५ )

**(सू.) पर्यायादपि** क्रमात् तत्तद्देहपरिमाणत्वाङ्गीकरणादपि **अविरोधः** दोषाभावो न च भवति। कुतः ? **विकारादिभ्यः**। विकारित्वापत्तेः। ततश्चानित्यत्वनिर्मोक्षत्वशास्त्रवैयर्थ्यानि स्युरित्यर्थः।

**(त.दी.)** स्वमते जीवस्य सुखादिभोगकृतोच्चत्वनीचत्वरूपविकारोऽस्ति। तस्य स्वरूपविकास-सङ्कोचरूपत्वात्। तथाऽपि चैतन्यादियावद्द्रव्यभावि-धर्मनिवृत्तावेवानित्यत्वोपगमान्नानित्यत्वमुक्तं सुधायाम्। उक्तं च नय-चन्द्रिकायाम् - सङ्कोचविकासादन्यथाभावान्नाशो नेति। इति (पृ.सं.२९३)

**(जीवस्य शरीरावच्छेदेन परिमाणाङ्गीकारे बाधकोक्तिः)**

जीवस्य स्वतः परिमाणाभावाद् देहपरिच्छेदेन परिमाणाङ्गीकारे दोषमाह -

**ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ** (२-२-३६)

**(सू.) अन्त्यस्य** मोक्षगतात्मपरिणामस्य **अवस्थितेः** तदवच्छेदकतया नित्यदेहावश्यम्भावेन **उभयस्य** मुक्तात्मतद्देहयोः नित्यत्वाद् अद्यतन-देहानामपि नित्यत्वं स्यात्। **अविशेषात्** देहत्वाविशेषादित्यर्थः।

**(जिनोक्तमुक्तिनिराकरणपरतया सूत्रस्य वर्णकान्तरम्)**

यद्वा, क्षपणकोक्तं सततोर्ध्वगमनं मोक्ष इत्येतद्दूषयति - **अन्त्याव-स्थितिः** लोकाकाशादन्त्या सन्ततोर्ध्वगतिलक्षणा, ततश्चानित्यत्वा-पत्तिरिति। एवमन्यथाभावेऽप्यात्मनो **नित्यत्वे** भूधरादीनामपि नित्यत्वं स्यात्। वृक्षादिशरीरस्थस्य विकारप्राप्त्याऽनित्यत्वभयाद् वृक्षादे-

रात्मानधिष्ठितत्वे हस्त्यादिशरीरेष्वप्युत्पत्तिसमये हस्त्यादिपरिमाणस्य यौवने उत्कृष्टपरिमाणत्वप्राप्त्या अन्यथाभावस्य **अविशेषात्** समत्वात्। 'गीतात् पुष्पफलावाप्तिः' (अनुव्या.) इत्युक्तरीत्या वृक्षादीनामिन्द्रियवत्त्वेन प्रसिद्धदेहाविशेषादित्यर्थः ॥ १० ॥

**॥ इति नैकस्मिन्नधिकरणम् ॥ १० ॥**

## ॥ ११ ॥ अथ पत्युरधिकरणम् ॥

### (पाशुपतमतनिरासः)

अत्र पाशुपतमतं निरस्यते ।

### (पूर्वपक्षसिद्धान्तौ)

पशुपतिः खलु सार्वज्ञ्यादिगुणशाली मायागुणमुपादानीकृत्य हरिविरिञ्चादिजगदुत्पत्त्यादि करोतीति न लक्षणसूत्रं युक्तमिति पूर्वपक्षे सत्याह -

**ॐ पत्युरसामञ्जस्यात् ॐ** (२-२-३७)

(सू.) **पत्युः** पशुपतेरीश्वरस्य **असामञ्जस्यात्** पारतन्त्र्याज्ञत्वोत्पत्त्यादिदोषित्वान्न पशुपतिर्जगत्कर्तेत्यर्थः ।

### (युक्त्यन्तरेण पशुपतेर्जगत्कारणत्वनिरासः)

**ॐ सम्बन्धानुपपत्तेश्च ॐ** (२-२-३८)

(सू.) पत्युरीश्वरस्याशरीरत्वाज्जगता कार्यकर्तृत्वरूप**सम्बन्धानुपपत्तेर्न** तस्य कर्तृत्वं युक्तमित्यर्थः।

### ('पशुपतेर्न जगत्कारणत्वं' इत्यत्राधिष्ठानाभावरूपयुक्तिकथनम्)

हेत्वन्तरमाह -

ॐ अधिष्ठानानुपपत्तेश्च ॐ (२-२-३९)

(सू.) पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति। पशुपतेस्तादृशा**धिष्ठानानुपपत्तेश्च** नासौ कर्तेत्यर्थः ।

(त.दी.) अभावादिति वाच्येऽनुपपत्तेरित्युक्तिः कारकत्वात् तस्यैवाधिष्ठानत्वे चेतनान्तरवद् भोगप्राप्त्या तदनुपपत्तेरित्यग्रेतनदोषसूचनाय । इति (पृ.सं. २९६,२९७)

**(पूर्वोक्ताक्षेपेण समाधानम्)**

सूत्रद्वयोक्तमाक्षिप्य समाधत्ते -

**ॐ करणवच्चेन्न भोगादिभ्यः ॐ** (२-२-४०)

(सू.) प्रलयकाले नित्यतया विद्यमानं यत् प्रकृत्यादि तदेव तस्य **करण-वत्**। साक्षात्प्रयत्नाधिष्ठेयतया शरीरवदधिष्ठानरूपं च भवति। (अतः) न सम्बन्धानुपपत्त्यादीति **चेत्** । **न** । **भोगादिभ्यः** शरीरोपादान-त्यागाभ्यां जननमरणवच्छरीरप्रतिनिधिकारकत्वादित्यर्थः । उपादानपरित्यागाभ्यामपि जननमरणप्रसङ्गात् । ततश्च सुखदुःख-भोगप्राप्तिरित्यादिदोषेभ्य इत्यर्थः ।

**(पशुपतेर्जगत्कर्तृत्वे दोषान्तरकथनम्)**

दोषान्तरं चाऽऽह -

**ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ** (२-२-४१)

(सू.) पशुपतिः कर्तेति वदन् प्रष्टव्यः । किमसौ शरीरी उत नेति। आद्येऽ**न्तवत्त्वं** विनाशः स्यात् । द्वितीयेऽ**सर्वज्ञता** स्यादित्यर्थः । शरीरशून्यस्य ज्ञानायोगादित्याशयः । **वा**शब्दो व्यवस्थितविकल्पे ।

नचैते दोषा विष्णुपक्षे । 'यदात्मको भगवांस्तदात्मिकी व्यक्तिः'[१] इत्यादिश्रुत्याऽन्तवत्त्वादिदोषाणां परिहृतत्वादिति द्रष्टव्यम् ।। ११ ।।

**।। इति पत्युरधिकरणम् ।। ११ ।।**

**(त.दी.)** स्वमते चैते दोषा आत्मनि चैवमित्यादिसूत्रैरेव श्रुतिबलान्निरस्ता इत्याकूतम्। इति (पृ.सं.२९९)

## ।। १२ ।। अथोत्पत्त्यधिकरणम् ।।

**(शक्तिमतनिरासः:)**

यद्यप्युक्तदिशैव शाक्तेयसौरस्कान्दगाणपत्यादिसमया निराकृताः। तथाऽप्यत्र नये शक्तिपक्षं विशेषदोषेण ।

**(पूर्वपक्षसिद्धान्तौ)**

शक्तिरेव सार्वज्ञादिगुणशालिनी सकलजगज्जनयित्री श्रुत्यादिषु श्रूयते। अतो न युक्तं लक्षणं विष्णोरिति पूर्वपक्षे आह -

**ॐ उत्पत्त्यसम्भवात् ॐ** (२-२-४२)

**(सू.)** पुरुषाननुगृहीतायाः केवलशक्ते**रपत्योत्पत्त्यसम्भवान्न** शक्तिर्जगत्कारणमित्यर्थः । सार्वज्ञादिगुणविधुरः सदाशिवः शक्त्यनुग्राहकोऽस्ति । ततस्तदनुगृहीतायाः शक्तेः जगत्कारणत्वं युक्तमिति मतान्तरं निराकरोति-

**ॐ न च कर्तुः करणम् ॐ** (२-२-४३)

**(सू.) कर्तुः** सदाशिवस्य **करणं** ज्ञानादिसाधनं **ना**स्तीत्यनुग्राहकत्वायोग इत्यर्थः ।

---

१. 'यदात्मको भगवांस्तदात्मिकी व्यक्तिः । किमात्मको भगवान् ? ज्ञानात्मक ऐश्वर्यात्मकः' इति (ब्र.सू.भा.उ. एकायनश्रुतिः, पृ. १६०)

(अणुवामनमतनिरासः)

केचिच्छाक्ताः शक्त्यनुग्राहकस्य सार्वज्ञ्यादिकं मन्यन्ते। तत्राऽऽह -

**ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ (२-२-४४)**

(सू.) शिवस्य **विज्ञानादिभावे**ऽङ्गीकृते सति **तस्य** शैवमतस्य **अप्रतिषेधः** प्रतिषेधो न कृतः स्यादित्यर्थः। शिवसार्वज्ञ्याङ्गीकारे शक्तिकारणत्वाङ्गीकारवैयर्थ्यात्। तन्मतं पाशुपतमतेऽन्तर्भवतीति तन्निरासेनैव निरस्तमित्यर्थः।

('शक्तिकर्तृत्वमतमसमञ्जसम्' इत्यत्र हेत्वन्तरकथनम्)

हेत्वन्तरमाह -

**ॐ विप्रतिषेधाच्च ॐ (२-२-४५)**

(सू.) सकलश्रुतिस्मृति**विरुद्धत्वाच्च**ायुक्तं शक्तिमतमित्यर्थः।

॥ इत्युत्पत्त्यधिकरणम्॥ १२॥

॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे द्वितीयाध्यायस्य द्वितीयःपादः॥१५८॥*

---

*. एतदनन्तरं लिपिकर्तुः वाक्यमेकं हस्तलिखिते एवमुपलभ्यते- 'विरोधिकृत्संवत्सरज्येष्ठशुद्धनवम्यां भानुवासरे बिदिरहळ्ळिरघुपतिना कृतं लेखनम्।' इति

# अथ द्वितीयाध्यायस्य तृतीयः पादः

## (श्रुतिविरोधपरिहारः)

परस्परश्रुतिविरोधपरिहारार्थोऽयं पादः ।

### ॥ १ ॥ वियदधिकरणम् ॥

### (वियदुत्पत्यनुत्पत्तिश्रुत्योः विरोधपरिहारः)

प्रथमनये वियदुत्पत्यनुत्पत्तिश्रुत्योरविरोध उच्यते -

**ॐ न वियदश्रुतेः ॐ (२-३-१)**

(सू.) 'उत्पत्यसम्भवात्' (ब्र.सू. २.२.४०) इति प्रकृतत्वादनुत्पत्तिमदित्यन्वेति । **वियद्** अनुत्पत्तिम**न्न** भवति । कुतः ? **अश्रुतेः** तदनुत्पत्तिश्रुत्यभावादित्यर्थः । भूताव्याकृताकाशौ[1] तदभिमानिनौ चेति चतुष्टयमिह वियत्पदेन कथ्यते । वियदिति प्रकृतिजीवचैतन्यकालवेदमहदादीनां तदभिमानिनां चोपलक्षणम् । उत्पत्तिश्चात्र पराधीनविशेषावाप्तिलक्षणा । सा च नित्येषु यथायोग्यं सिसृक्षुत्वादिलक्षणा । अनित्येष्वभूत्वाभवनरूपेति सुधायाम् ।

### (उत्पत्तौ प्रमाणाभावाद् वियतोऽनुत्पत्तिमत्त्वमिति शङ्का तन्निरासश्च)

उत्पत्तौ प्रमाणाभावादेवानुत्पत्तिमत्त्वं सिद्ध्यतीत्यत आह -

**ॐ अस्ति तु ॐ (२-३-२)**

(सू.) तुशब्दोऽवधारणे । 'आत्मन आकाशः सम्भूतः' (तै.उ. २-१) इति वियदुत्पत्तिश्रुति**रस्त्येवे**त्यर्थः ।

---

१. 'भूताकाशौ' इति क. पाठः ।

(पूर्वोदाहृतश्रुत्या न वियदुत्पत्तिः 'अनादिर्वाऽयमाकाशः' इति श्रुतिविरोधादित्याशङ्का तत्परिहारश्च)

'अनादिर्वाऽयमाकाशः' (ब्र.सू.भा.उ.श्रुतिः) इति श्रुतिविरोधान्नानया श्रुत्योत्पत्तिमत्त्वं सिद्ध्यतीत्यत आह -

**ॐ गौण्यसम्भवात् ॐ (२-३-३)**

(सू.) अनादित्वश्रुतिः **गौणी** गौणानादित्वपरा, अमुख्यार्थेति यावत् । ननु किमेतया कल्पनया ? अनुत्पत्तिरेव किं नाऽश्रीयत (नाऽश्रियत) इत्याशङ्कायामुक्तम्- **असम्भवात्** । (इति) अस्तीत्युक्तोत्पत्तिश्रुतीनामिव बाहुल्यासम्भवादित्यर्थः । अनुत्पत्तेर्भूताकाशे कथमप्यसम्भवेनासर्व-विषयत्वात् । अनुत्पत्तिश्रुतिर्भूते चिरन्तनत्वमात्रेण गौणी वा, छत्रिन्यायेन लाक्षणिकी वा । उत्पत्तेर्भूते स्वरूपतः, तदभिमानिनो देहतः, अवकाशतदभिमानिनोः पराधीनविशेषावाप्तितः सम्भवेन चतुष्टयविषयत्वाद् बहुत्वाच्चोत्पत्तिर्मुख्येति भावः ।

(अनादित्वश्रुतिर्गौणीत्यत्र श्रुत्युदाहरणम्)

इतश्च गौणीत्याह -

**ॐ शब्दाच्च ॐ (२-३-४)**

(सू.) न केवलमसम्भवादिति युक्त्यैव, किन्तु 'अथ हवाव नित्यानि'[१]

---

१.'अथ हवाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति । अथ यान्यनित्यानि प्राणः श्रद्धा भूतानि भौतिकानीति । यानि ह वाव उत्पत्तिमन्ति तान्यनित्यानि । यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि, न ह्येतानि कदाचनोत्पद्यन्ते न विलीयन्ते पुरुषः प्रकृतिरात्मा काल इति अथैतान्युत्पत्तिमन्ति च अनुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्ते' इति (ब्र.सू.भा.उ.भाल्लवेयश्रुतिः, पृ.१६९)

इत्यादिश्रुतेश्चानादित्वश्रुतिर्गौणी, अन्या मुख्यार्थेत्यर्थः । अस्यां हि श्रुतौ 'भागशो ह्युत्पद्यन्ते' इति भूतादिचतुर्भिर्भागैराकाशार्धस्योत्पत्युक्तेरवकाशादिस्वरूपगकतिपयभागैरनुत्पत्युक्तेरिति भावः ।

**(अनुत्पत्तिश्रुतिर्वियति मुख्यैव भवत्विति शङ्का, ब्रह्मशब्ददृष्टान्तेन तत्परिहारः)**

ननु 'न जायते म्रियते वा' (भ.गी. २.२०) इति श्रुतावनुत्पत्तिमच्छब्दस्य विष्णौ मुख्यार्थत्वदर्शनादाकाशेऽप्यनुत्पत्तिश्रुतिर्मुख्यैवेत्यत आह -

**ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ (२-३-५)**

(सू.) **चो**ऽवधारणार्थ उभयत्राप्यन्वेति । **एकस्यैव** अनुत्पत्तिमच्छब्दस्य ब्रह्मणि मुख्यत्वेऽप्याकाशेऽमुख्यत्वं **स्यादेव** । **ब्रह्मशब्दवत्** । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वेऽपि चतुर्मुखादिषु गौणत्वं यद्वदित्यर्थः।

**(अनुत्पत्तिशब्दस्याऽकाशे मुख्यत्वे बाधककथनम्)**

नन्वस्तु ब्रह्मशब्दः बाधकादन्यत्रामुख्यः, प्रकृते कुत इत्यत आह-

**ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ (२-३-६)**

(सू.) यद्याकाशेऽनुत्पत्तिमच्छब्दः मुख्यस्तर्हि 'स इदं सर्वमसृजत' (तै.उ. २-६) इति **प्रतिज्ञाहानिः** स्यात् । न च वाच्यमत्राऽकाशशब्दो न श्रूयत इति न प्रतिज्ञाहानिरिति । **अव्यतिरेकात्** आकाशस्य सर्वमध्यपतितत्वादित्यर्थः । स्पष्टमाकाशस्योत्पत्तिरत्र न श्रूयत इत्यत उक्तम्- **शब्देभ्य इति** ॥ 'आत्मा वा इदमेकमग्रे' (ऐ. १-१) 'सदेवेदमग्रे' (छा.उ.६.२.१) 'इदं वा अग्रे नैव किञ्चन' (तै.ब्रा.२-२-९) इत्याद्युत्पत्तिप्रतिपादकश्रुतिभ्यः स्पष्टमुत्पत्तिरुच्यत इत्यर्थः । शब्देभ्य इति बहुवचनेन

बहुश्रुतिविरोधादेकस्यानुत्पत्तिमच्छब्दस्यामुख्यत्वं न्याय्यमिति सूचयामास ।

(अनुमानेन वियदनुत्पत्तिश्रुतेरमुख्यत्वसाधनम्)

एवं शब्देभ्य उत्पत्तिं प्रसाध्येदानीमनुत्पत्तिश्रुतेरमुख्यत्वसिध्यर्थं वियदुत्पत्तिमद् विभक्तत्वाद् घटवदित्यनुमानेनापि वियदुत्पत्तिसाधनमभिप्रेत्य तत्र व्याप्तिमाह -

**ॐ यावद्विकारं तु विभागो लोकवत् ॐ (२-३-७)**

(सू.) **यावद्विकारमित्यव्ययीभावः । तुः** हेत्वर्थकहिशब्दार्थः । अनुमानस्य प्राक्तनशब्दसमुच्चयार्थश्च । 'अल्पशक्तिमत्त्वाच्च' इति तत्त्वप्रदीपोक्तेः, 'अनुमानेनापि' इति तत्त्वप्रकाशिकोक्तेश्च **विकार** इति **विभाग** इति च कर्मणि घञ् । तथा च तु यस्मात् **यावद्विकारं** विक्रियमाणः पदार्थः **विभागः** विभक्तः अल्पशक्तिमान् **लोकवत्** घटादिवदित्यर्थः । यावदनित्यं कृतकमिति यो विभक्तः सः विक्रियमाण इति व्याप्तिरुक्ता भवति ॥ १ ॥

॥ इति वियदधिकरणम् ॥ १ ॥

(त.दी.) यदुत्पत्तिमत् न तदविभक्तं व्यतिरेकेण यथा ब्रह्मेति तोरर्थ इत्यप्याहुः। इति ( पृ.सं.३०९)

**॥ २ ॥ अथ मातरिश्वाधिकरणम् ॥**

(वायूत्पत्यनुत्पत्तिश्रुत्योः विरोधपरिहारः)

**'आकाशाद् वायुः'** (तै.उ. २.१) **'वायुर्वाव नित्यः'** (ब्र.सू.भा.उ. श्रुतिः) इति श्रुत्योरविरोधोऽत्र कथ्यते ।

## ॐ एतेन मातरिश्वा व्याख्यातः ॐ (२-३-८)

(सू.) अत्र भूततदमुख्यमुख्याभिमानिरूपत्रितयवाचकं मातरिश्व-पदम्। तेन तदुत्पत्त्यनुत्पत्तिपरशब्दो गृह्यते। **एतेन** अश्रुतेरित्याद्युक्त-हेतुसमुदायेन **मातरिश्वा** मातरिश्वनः उत्पत्त्यनुत्पत्तिपरशब्दो **व्याख्यातः** गौणमुख्यत्वेन व्याख्यात इत्यर्थः। भूतवायोरमुख्याभिमानी मरीचिनामा वायुसुतः। मुख्याभिमानी प्रवहः। 'प्रधानवायुजो भूतवायुर्नाम्ना मरीचकः' (गी.ता.उ.वचनम्) इति गीतातात्पर्ये इति **अभिनवचन्द्रिकायाम्**। उत्पत्त्यनुत्पत्तिशब्दो व्याख्यातः गौणमुख्यत्वेन व्याख्यात इत्यर्थः।

### (मुख्यवायोः ज्ञाननित्यत्वरूपविशेषकथनायेदमधिकरणमिति चन्द्रिकोक्तं समाधानम्)

यद्यपि 'पुरुषः प्रकृतिः कालो देहास्तदभिमानिनः। महदाद्याश्च जायन्ते पराधीनविशेषिताः।'[1] इति पूर्वाधिकरणीयानुव्याख्याने चित्प्रकृतेरपि पराधीनविशेषावाप्तिरूपोत्पत्तेरुक्तत्वान्मुख्यवायोरपि सा कैमुत्येन सिद्धा। तथाऽपि मुख्यवायोर्न पार्थिवादिवत् परानित्यत्वम्। नापि भूताकाशाभिमानिविनायकादिवत् स्वरूपानादित्वेऽपि स्वरूपाति-रिक्तज्ञानसादित्वरूपानित्यत्वं, प्रलयेऽपि प्रतिभातपरावरत्वात्। नापीश्वरवत् स्वातन्त्र्यरूपं परात् परनित्यत्वम्। देहोत्पत्तेः सत्वात्। किन्तु स्वरूपातिरिक्तज्ञानस्यापि नित्यत्वरूपं नित्यत्वमिति विशेषं वक्तुमिदमधिकरणमिति **चन्द्रिकायां** व्यक्तम्॥ २॥

**॥ इति मातरिश्वाधिकरणम्॥ २॥**

---

१. (अनु.व्या.२. ८७१), ('वेदास्तदभिमानिनः, 'देवास्तदभिमानिनः' इति क्वचित् पाठः)

(त.दी.) विशेषशङ्कायां मुख्यवायोर्ज्ञाननित्यत्वरूपविशेषं वक्तुमयं योगः। इति (पृ.सं.३१०)

## ॥ ३ ॥ अथासम्भवाधिकरणम् ॥[1]

### (पूर्वपक्षसिद्धान्तौ)

एवमधिकरणद्वयेनासम्भवदुत्पत्तिकस्यापि नभःप्रभृतेः सर्वस्योत्पत्तौ श्रुत्योक्तायां तर्हि तद्वदेव ब्रह्मणोऽप्युत्पत्तिरस्त्विति पूर्वपक्षे, सिद्धान्तयति-

**ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ (२-३-९)**

(सू.) तुरवधारणे। **सतः** ब्रह्मणः **असम्भवस्तु** अनुत्पत्तिरेव। कुतः? **अनुपपत्तेः** असतः सकाशाज्जन्मनोऽनुपपत्तेरित्यर्थः। क्वाप्यदर्शनादिति भावः। अत्र तुशब्देन भागोत्पत्तिं पराधीनविशेषावाप्तिं च पूर्वोक्तां निराह। अत्र 'ब्रह्मणः' इत्यनुक्त्वा 'सतः' इत्यभिदधता 'सदजायत'[2] इति श्रुतिसूचनेन ब्रह्मणोऽप्यसदाख्यं कारणमस्तीति पूर्वपक्षयुक्तिः स्वातन्त्र्यरूपसिद्धान्तयुक्तिश्च सूचिता। 'सत्वं स्वातन्त्र्यमुद्दिष्टम्'[3] इति वचनात्।

### (सूत्रेऽसम्भवपदग्रहणे कारणवर्णनम्)

ननु 'उत्पत्त्यसम्भवात्' (ब्र.सू.२.२.४०) इति पूर्वसूत्रादेवोत्पत्त्यसम्भवपदस्यानुवृत्तेः सम्भवाद् असम्भव इति पदोपादानं कुत इति

---

१. अधिकरणेऽस्मिन् ब्रह्मोत्पत्तिश्रुत्यविरोधः कथ्यत इति ज्ञेयम्।

२. 'असतः सदजायत' (ऋ.१०.७२.२), 'असद्वा इदमग्र आसीत्। ततो वै सदजायत' (तै. २.७, पृ. १८५)

३. (भाष्य.दी.उ.भारतवचनम्, पृ. १८५)

चेत्। न। तस्य 'न वियदादिवत्' इत्यत्रान्वितत्वाद् अत्र पुनरसम्भव इत्युक्तिरिति **राघवेन्द्रीये** ।

**॥ इत्यसम्भवाधिकरणम्॥ ३ ॥**

## ॥ ४ ॥ अथ तेजोऽधिकरणम्॥

### (तेजोजन्मविषयश्रुतिविरोधपरिहारः)

एवं ब्रह्मान्यस्य सर्वस्योत्पत्तिसिद्धौ ब्रह्मणश्चानुत्पत्तौ सिद्धायामिदानीं कार्यविशेषे कारणविशेषविप्रतिपत्तिर्निरस्यत इति चन्द्रिकातः सङ्गतिर्ज्ञेया ।

अत्र 'वायोरग्निः' (तै.उ. २.१) 'तत्तेजोऽसृजत' (ब्र.सू.भा.उ.श्रुतिः) इति श्रुत्योरविरोध उच्यते ।

### ॐ तेजोऽतस्तथा ह्याह ॐ (२-३-१०)

**(सू.) तेजः**शब्देन तद्देवता चोच्यते । तुशब्दोऽनुवर्तते । **तथा**शब्दः समुच्चये । **अतस्तु** ब्रह्मण एव, नतु वायोः । **तेजस्तथा** तेजोऽपि उत्पत्तिमत्, न केवलं वियदादि । कुतः ? **आह** 'तत्तेजोऽसृजत' (ब्र.सू.भा.उ.श्रुतिः) इति श्रुतिरित्यर्थः ।

यद्यपि 'आकाशाद् वायुः' (तै. २-१) 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिः' (मु. २-१-३) इति श्रुत्योर्विवादोऽस्ति । तथाऽप्यतिव्यवहितस्य तेजसो ब्रह्मजत्वसाधकैतदधिकरणन्यायेनैवाव्यवहितस्य वायोस्तत्सिद्धेः पृथग्विवादाभाव इति **चन्द्रिकायां** व्यक्तम् ।

(तदनन्यत्वाधिकरणेनास्याधिकरणस्यागतार्थताकथनम्)

तदनन्यत्वमित्यधिकरणे कारणान्तरस्य युक्तिप्राप्तं स्वातन्त्र्यं निरस्तम्। इह तु श्रुतिप्राप्तमिति च ॥ ४ ॥

॥ इति तेजोऽधिकरणम् ॥ ४ ॥

## ॥ ५ ॥ अथाबधिकरणम् ॥[1]

(पूर्वपक्षसिद्धान्तौ)

घर्मात् स्वेदादिदृष्टेः 'अग्नेरापः' (तै.उ. २.१) इति श्रुतेश्चाग्नेरेवाब्जन्मेति पूर्वपक्षे सत्याह-

**ॐ आपः ॐ (२-३-११)**

**(सू.)** 'अतस्तथा ह्याह' इत्यनुवर्तते। **आपो**ऽप्यत एवोत्पत्तिमत्यः न त्वग्नेः, यस्माद् 'ब्रह्मैवेदमग्र आसीत् तदपोऽसृजत' (ब्र.सू.भा.उ. श्रुतिः) इति श्रुतिराहेत्यर्थः। द्वारकारणपरा श्रुतिरिति भावः। आप इति पृथिव्यौषध्यादेरुपलक्षणम् ॥ ५ ॥

॥ इत्यबधिकरणम् ॥ ५ ॥

**(त.दी.)** घर्मात् स्वेदादिदृष्टेरग्नेरब्जन्म प्रत्यक्षमिति विशेषशङ्कानिवृत्त्यर्थोऽयं विभागः। इति **(पृ.सं.३१४)**

## ॥ ६ ॥ अथ पृथिव्यधिकरणम् ॥

**('ता अन्नमसृजन्त' 'अद्भ्यः पृथिवी' इति श्रुत्योर्विरोधपरिहारः)**

'ता अन्नमसृजन्त'[2] 'अद्भ्यः पृथिवी' (तै.उ. २-१) इति द्वारश्रुत्यविरोधं वक्त्यत्र।

---

१. अधिकरणेऽस्मिन् अब्जन्मविषयश्रुतिविरोधः परिह्रियते।

२. 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति। ता अन्नमसृजन्त' इति (छा.उ. ६.२)

(पूर्वपक्षसिद्धान्तौ)

श्रुतिद्वयस्य परस्परविरोधादादप्रामाण्यमेवेति पूर्वपक्षे सत्याह -

**ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ (२-३-१२)**

**(सूत्रार्थः)** अन्नमिति शेषः । **पृथिवी** अन्नशब्देनोच्यते । **अधिकारात्** 'तत्तेजोऽसृजत' (छा.उ.) इत्यादिभूतप्रकरणात् । न प्रकरणमात्राच्छ्रुति-बाध इत्यतः 'यत्कृष्णं तदन्नस्य' (भाष्य.दी.उ.श्रुतिः) इति कार्ष्ण्यरूपात् 'पृथिवी चान्नम्' (ऐ.आ. २.३.१) इति **शब्दान्तरात्** शाखान्तरस्थ-शब्दात् । **आदिपदाद्** वेदो नाप्रमाणम् अपौरुषेयत्वादिति युक्तेश्च न श्रुत्योर्विरोधेनाप्रामाण्यमित्यर्थः ।

(सूत्रस्थान्तरपदसार्थक्यकथनम्)

अत्र शब्देत्येव वाच्यमन्तरपदमधिकमिति चेत् । सत्यम् । उक्तरीत्या शाखान्तरगतत्वसूचनाय वा 'आपोऽन्नमसृजन्त पृथिवी वा अन्नम्' (ब्र.सू.भा.उ.श्रुतिः) इत्येवंरूपशब्दविशेषद्योतनाय वाऽन्तरपदस्य सार्थकत्वात् ।। ६ ।।

**।। इति पृथिव्यधिकरणम् ।। ६ ।।**

**।। ७ ।। अथ तदभिध्यानाधिकरणम् ।।**

**('यत्प्रयन्ति' 'रुद्रो मा विशान्तकः' इति श्रुत्योर्विरोधपरिहारः)**

एवमधिभूतादिविषयश्रुत्यविरोधमुक्त्वेदानीं 'यत्प्रयन्त्यभिसंविशन्ति' (तै.उ. ३.१) 'रुद्रो मा विशान्तकः' (महाना. १६.२) इति संहारविषय-श्रुत्योरविरोधः कथ्यते ।

**ॐ तदभिध्यानादेव तु तल्लिङ्गात् सः ॐ (२-३-१३)**

(सू.) तुशब्दः इच्छावाचकाभिध्यानगतसञ्जिहिर्षात्वरूपविशेष-

द्योतकः । अवधारणार्थश्च स इत्यत्र सम्बध्यते । संहर्तेति योग्यतयाऽन्वेति । तथा च **तदभिध्यानात्** 'तस्याभिध्यानात्'[१] इति श्रुत्युक्तत्वाद्धरेरनादिबन्धसञ्जिहिर्षारूपात् **तल्लिङ्गात्** तस्य सादिजगत्संहर्तृत्वस्य साधकाल्लिङ्गात् । **स तु** योऽबादिस्रष्टृत्वेन प्रकृतः यश्च जनकत्वेनामारकतया शङ्कितः यश्च 'ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' (भ.गी.१७.२३) इति स्मृतौ तच्छब्दत्वेनोक्तः 'स नो हरिर्घृतम्' (च.उ.श्रु.) इति श्रुतौ च स इत्युक्तः स एष हरिरेव संहर्ता न रुद्र इति चन्द्रिकानुसारेणार्थो बोध्यः । अनादेरपि बन्धस्य लयकर्ता विष्णुः, किमु सादेर्जगत इति **एवकारः** कैमुत्यसूचकः ॥ ७ ॥

**॥ इति तदभिध्यानाधिकरणम् ॥ ७ ॥**

## ॥ ८ ॥ अथ विपर्ययाधिकरणम् ॥

**(संहारक्रमविषयश्रुतिविरोधपरिहारः)**

अत्र 'क्रमादुत्पद्यते क्रमाद् विलीयते'[२] 'व्युत्क्रमाद् विलयश्चैव'[३] इति संहारक्रमश्रुत्योरविरोधोऽभिधीयते ।

**ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ (२-३-१४)**

**(सूत्रार्थः)**

**क्रम**स्त्विति सम्बन्धः । **अत** इत्यस्याऽवृत्तिः ।'क्रमाद् विलीयते'

---

१. 'तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.उ.१-१०, पृ.२०४),

२. 'अत एव हीदं परात् क्रमादुत्पद्यते क्रमाद् विलीयते नासावुदेति नास्तमेति' इति (ब्र.सू.भा.उ. भाल्लवेयश्रुतिः, पृ.२१२)

३. 'अक्षरात् परमादेव सर्वमुत्पद्यते क्रमात् । व्युत्क्रमाद् विलयश्चैव तस्मिन्नेव परात्मनि' (ब्र.सू.भा.उ.चतुर्वेदशिखाश्रुतिः, पृ.२१२)

(ब्र.सू.भा. उ.भाल्लवेयश्रुतिः) इति श्रुत्युक्तः **क्रमस्तु अतः** प्रकृतात् सृष्टिक्रमाद् **विपर्ययेण** भवति । कुतः ? **अतः** अस्मादेव शब्दात् । यस्यां भाल्लवेयश्रुतौ 'क्रमादुत्पद्यते' (ब्र.सू.भा.उ.भाल्लवेयश्रुतिः) इत्यादिना क्रमाल्लयः श्रुतस्तस्यामेव श्रुतौ 'यः क्रमाद् व्युत्क्रमाच्चैव'[1] इति व्युत्क्रमाल्लयश्रवणात् । तर्हि लोके क्रमाल्लयदर्शनात् तद्विरोध इत्ययः उक्तम्- **उपपद्यते चेति** ॥ विपर्यय इति व्यत्ययेनानुवर्तते । पूर्वोत्पन्नानां सामर्थ्याधिक्यादित्याशयः । तुशब्देन विपरीतक्रमस्यापि क्रमत्वात् 'क्रमाल्लीयते'[2] इति श्रुतिर्युक्तेति सूचयति ॥ ८ ॥

**॥ इति विपर्ययाधिकरणम् ॥ ८ ॥**

## ॥ ९ ॥ अथान्तराधिकरणम् ॥

**('क्रमादुत्पद्यते क्रमाल्लीयते' 'व्युत्क्रमाद् विलयश्चै' इति श्रुत्योर्विरोधपरिहारः)**

पूर्वोक्तस्य व्युत्क्रमेण लय इत्यस्य क्वचिदपवादशङ्कानिरासेन लयक्रमश्रुत्यविरोधः कथ्यते ।

**ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ**
**(२-३-१५)**

(सू.) **विज्ञानमनसी** विज्ञानमनस्तत्त्वे **अन्तरा** विना **क्रमेण** प्रागुक्त-व्युत्क्रमेण । अन्येषां तत्त्वानां लय इति शेषः । कुतः? **तल्लिङ्गात्** तत्रोक्तेऽर्थे 'मनसश्च विज्ञानम्'[3] 'यच्छेद् वाङ्मनसी प्राज्ञस्तद्यच्छेद् ज्ञान

---

१. 'कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च । यः क्रमाद् व्युत्क्रमाच्चैव स हरिः पर उच्यते ॥' इति (ब्र.सू.भा.उ.भाल्लवेयश्रुतिः, पृ.२१३)

२. (भाल्लवेयश्रुतिः) 'क्रमाद् विलीयते' इति पाठेन भाव्यमिति भाति ।

३. 'प्राणान्मनो मनसश्च विज्ञानम्' (कठ.उ.३-१३, पृ. २१६)

आत्मनि' (क.उ. ३.१३) इति श्रुत्युक्तत्वात् क्रमादुत्पन्नयोः क्रमाल्लयाख्यलिङ्गादिति चेत् । न । **अविशेषात्** । 'व्युत्क्रमाद् विलयश्चैव'[1] इत्यविशेषप्रमाणात् । विज्ञानमनसोर्यथोत्पत्तिस्तथा लय इति विशेषप्रमाणाभावाच्चेत्यर्थः । 'विज्ञानमनसोः क्रमेण' इति निर्देष्टव्ये 'अन्तरा विज्ञानमनसी' इति निर्देशस्तु तदुभयव्यतिरिक्तानां व्युत्क्रमेण लय इत्यर्थस्यानुमतिसूचनायेति **भावबोधे** ।

**(केषाञ्चित्क्रमाल्लयः केषाञ्चिद् व्युत्क्रमादित्यत्रोक्तलिङ्गदर्शनरूपप्रमाणसद्भावात् कथं विशेषप्रमाणाभावः ? इति शङ्का तन्निरासश्च )**

उक्तलिङ्गदर्शनस्यैव प्रमाणत्वात् कथं विशेषप्रमाणाभाव इत्याशङ्कामपाकरोति -

**ॐ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ (२-३-१६)**

**(सू.) तद्व्यपदेशः** स चासौ व्यपदेशश्च तद्व्यपदेशः । [2]मनसो विज्ञानमिति शब्दरूपो व्यपदेशः । **चराचरव्यपाश्रयः स्यात्** । यद्यपि चञ्चलान्तःकरणतद्वृत्त्यवबोधरूपचर अचञ्चलत्वान्मनस्तत्त्वविज्ञान-तत्त्वरूपाचरविषयकः स्यात् । तथाऽपि 'प्राणान्मनो मनसश्च विज्ञानम्' (कठ.उ.१-१३) इति श्रुतौ **तद्व्यपदेशस्तु भाक्तः** । भागवाचिभक्ति-शब्दात् 'तस्येदं' (पा.सू.४.३.१२०) इति सम्बन्धसामान्येऽणि कृते निष्पन्नो भाक्तशब्दः अन्तःकरणावबोधरूपभागविषयकः स्यात् । नतु

---

१. 'अक्षरात् परमादेव सर्वमुत्पद्यते क्रमात् । व्युत्क्रमाद् विलयश्चैव तस्मिन्नेव परात्मनि' इति (ब्र.सू.भा.उ.चतुर्वेदशिखाश्रुतिः, पृ. २१२)

२. 'मनो विज्ञानम्' इति क.पाठः ।

तत्त्वविषयकः । **तद्भावभावित्वात्** । तद्भावेति तच्छब्दस्तन्त्रन्यायेन प्रकृतचराचरस्यात्र स्थावरजङ्गमरूपसर्ववाचकस्य मनसश्च परामर्शकत्वेन सप्तम्यन्तः षष्ठ्यन्तश्चोपात्तः । तथाच तेषु चराचरेषु स्थावरजङ्गमादि-सर्ववस्तुषु, तस्य मनसः भावेन आलोचनेन भावित्वाद् उत्पद्यमानत्वाद् वृत्तिरूपज्ञानस्येत्यर्थः । मनःशब्देन मनोरूपेन्द्रियं मनस्तत्त्वं च विज्ञानशब्देनापि वृत्तिर्विज्ञानतत्त्वं च । तथा च 'मनसो विज्ञानम्' इत्युक्तिर्वस्तुनि मनोभावेन वृत्तेर्ज्ञायमानत्वान्मनोरूपेन्द्रियतज्जन्यवृत्ति-विषया, न तत्त्वविषेति न तल्लिङ्गमिति भावः । श्रुतेर्गतिसूचनार्थस्तुशब्दः ॥ ९ ॥

**॥ इत्यन्तराधिकरणम् ॥ ९ ॥**

## ॥ १० ॥ अथाऽत्माधिकरणम् ॥

### (ब्रह्मलयालयश्रुतिविरोधपरिहारः)

अत्र 'नित्यो नित्यानाम्' (कठ. ५-१३) 'अन्तस्तमसि निलीनः'[१] इति ब्रह्मलयालयश्रुत्यविरोध उच्यते ।

**ॐ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॐ (२-३- १७)**

**(सू.)** प्रकरणबलाल्लयवानिति लभ्यते । **आत्मा** विष्णुः देहनाशाख्य-लयवान्न भवति । **अश्रुतेः** तल्लयस्याश्रवणात् । 'अन्तस्तमसि निलीनः' (ब्र.सू.भा.उ.श्रुतिः, पृ. २२१) इति श्रुतिस्त्वपिहितत्वपरेति भावः । कुत एवमन्यार्थः कल्प्यत इत्यतः **श्रुतेरि**त्यपि विच्छेद्यम् । 'तुच्छेनाभ्वपिहितं यदासीत्' (ऋ.स.१०.१२९.३)इति **श्रुते**स्तत्समाख्यानादिति यावत् ।

---

१. 'स इदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद्विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति विलापयति विस्थापयति प्रस्थापयत्याच्छादयति प्रकाशयति विमोचयत्येक एव' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. २२१)

कुत एवम् ? 'समाख्यातो लयश्रुतेः प्राबल्याल्लय एव किं न स्यादित्यतो **'नित्यत्वाच्च ताभ्यः'** इत्युक्तम् । **ताभ्यः** 'नित्यो नित्यानां'[१] 'स नित्यो निर्गुणः'[२] 'स नित्यो विभुः' (ब्र.सू.भा.उ.श्रुतिः) इत्यादि-भाष्योदाहृतश्रुतिभ्यो आत्मनो **नित्यत्वावगमान्निलीनश्रुतिरन्यार्थेति** भावः । बहुत्वेन प्राबल्यमुपपादयितुं **ताभ्य** इति बहुवचनम् ॥ १० ॥

॥ इत्यात्माधिकरणम् ॥ १० ॥

## ॥ ११ ॥ अथ ज्ञाधिकरणम् ॥

सूचीकटाहन्यायेन लयाधिभूतादिविचारं कृत्वेदानीमापादसमाप्ति जीवश्रुत्यविरोधश्चिन्त्यते ।

### (जीवोत्पत्यनुत्पत्तिश्रुतिविरोधपरिहारः)

'नित्यो नित्यानाम्' (कठ. ५-१३) 'सर्व एते चिदात्मनो व्युच्चरन्ति' (ब्र.सू.भा.उ. श्रुतिः) इति जीवोत्पत्त्यनुत्पत्तिविषयषश्रुत्यविरोधोऽत्र कथ्यते ।

### ॐ ज्ञोऽत एव ॐ (२-३-१८)

**(सू.)** जानातीति **ज्ञः** जीवः । **अत एव** । प्रकृतात्मन एवोत्पद्यते । अत एव 'अविनष्टा एवोत्पद्यन्ते'[३] इति नित्यत्वाविरोधेनोत्पत्तेरुक्तत्वा-देवेत्यर्थस्तन्त्रेण ज्ञेयः । नित्यत्वश्रुतिः स्वरूपनित्यत्वपरेति भावः ।

---

१. 'नित्यो नित्यानां चेतनश्चेतनानाम्' इति (कठ.५-१३, पृ. २२३)

२. 'स नित्यो निर्गुणो विभुः परः परमात्मा' इति (ब्र.सू.भा.उ.श्रुतिः)

३. 'ते वा एते चिदात्मनोऽविनष्टाः परं ज्योतिर्निविशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचन' इति (ब्र.सू.भा.उ.काषायणश्रुतिः, पृ. २२५)

('अनादिनित्यस्यापि जीवस्य पराधीनविशेषलाभरूपोत्पत्तिर्युक्ता' इति कथनम्)

अनादिनित्यस्योत्पत्तिरयुक्ता व्याहतेरित्यत आह -

ॐ [१]युक्तेश्च ॐ (२-३-१९)

(सू.) अनादिनित्यस्याप्युत्पत्तेर्युक्तत्वाच्चेत्यर्थः । पराधीनविशेषलाभस्योत्पत्तेरत्र विवक्षितत्वादिति हृदयम् । जनेर्वियदधिकरणे जीवादौ सिद्धत्वाद् व्यर्थमिति चेत् । उच्यते । उत्पत्तिश्रुतिरेवंरूपजनिपरा चेद् अनुत्पत्तिश्रुतिरीश इव जीववियदादावपि तदभावपरेति पूर्वपक्षे (पूर्वाक्षेपे) तादृशजनिश्रुतिरीशे नास्ति, जीवादौ तु

'प्रकृतिः पुरुषः कालो देशश्चेति चतुष्टयम् ।
नित्यं स्वरूपतो विष्णोर्विशेषावाप्तिमात्रतः ॥
उत्पत्तिमदिहास्ति .................. ॥' (त.दी.उ.श्रुतिः)

इति समाधानार्थमिदमिति **तन्त्रदीपिकायाम्** ॥ ११ ॥

॥ इति ज्ञाधिकरणम् ॥ ११ ॥

## ॥ १२ ॥ अथोत्क्रान्त्यधिकरणम् ॥

**(जीवपरिमाणविषयश्रुतिविरोधपरिहारः)**

अत्र 'अणुर्ह्येष आत्मा'[२] 'व्याप्ता ह्यात्मानः'[३] इति जीवपरिमाणविषयश्रुतिविरोधः परिह्रियते ।

---

१. 'हृ.'पाठरीत्या नेदं सूत्रं किन्तु भाष्यवचनम् ।

२. 'अणुर्ह्येष आत्मा यं वा एते सिनीतः । पुण्यं च पापं च' इति (ब्र.सू.भा.उ.गौपवनश्रुतिः, पृ.२२८)

३. 'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मानः सर्वरूपा अनन्ताः' इति (ब्र.सू.भा.उ.काषायणश्रुतिः, पृ. २२८)

### ॐ उत्क्रान्तिगत्यागतीनां ॐ (२-३-२०)

(सू.) ज्ञ इत्यनुवर्तते। अणुरिति वक्ष्यमाणं सिंहावलोकनेनान्वीयते। 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छति अमुष्मादिमं लोकमागच्छति'[1] इति श्रुतानामुत्क्रान्तिगत्यागतीनां सकाशादिति शेषः। उत्क्रान्त्यादिमत्त्वादिति यावत्। जीवोऽणुरेवेत्यर्थः। व्याप्तस्योत्क्रन्त्याद्ययोगान्मध्यमपरिमाणत्वेऽनित्यत्वापत्तेरिति भावः।

(त.दी.) व्याप्तस्यापीशस्य भूमज्योतिर्नययोरुत्क्रान्त्याद्युक्तिः अक्षरनयन्यायेनाणुत्वस्यापि सत्त्वादिति भावः। इति (पृ.सं.३२९)

#### (उत्क्रान्त्यादेः परायत्तत्वकथनम्)

उत्क्रान्त्यादेरीशाधीनप्रसङ्गादाह -

### ॐ स्वात्मना चोत्तरयोः ॐ (२-३-२१)

(सू.) चोऽवधारणे। स्वात्मनैव उत्क्रान्त्यादय इति विभक्तिपरिणामेनानुवर्तते। 'स एतेनैव स्वात्मना परेणेमं गर्भमाविशति'[2] 'एष ह्येनं जीवमभिजीवयति'[3] इत्युत्तरयोर्वाक्ययोः सकाशादित्यर्थः। 'सोऽस्माच्छरीरात्'[4] इति वाक्ये उत्क्रान्त्यादौ स्वातन्त्र्यप्रतीतावप्युत्तरवाक्यद्वये परायत्तत्वोक्तेरिति भावः।

---

१. 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छति अमुष्मादिमं लोकमागच्छति स गर्भीभवति स प्रसूयते स कर्म कुरुते' इति (ब्र.सू.भा.उ.पौष्यायणश्रुतिः, पृ. २२०)
२. 'स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते तं वा एतमभिवदन्ति स्वात्मा' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. २३०)
३. 'एष ह्यानन्दमादत्ते एष ह्येनं जीवमभिजीवयत्येष उद्गमयत्येष आगमयति' इति (ब्र.सू.भा.उ. पौष्यायणश्रुतिः, पृ. २३०)
४. 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छति अमुष्मादिमं लोकमागच्छति स गर्भीभवति स प्रसूयते स कर्म कुरुते' इति (ब्र.सू.भा.उ.पौष्यायणश्रुतिः, पृ.२२०)

(सूत्रे स्वात्मपदग्रहणौचित्यम्)

ननु 'स्वेन' इति वा 'आत्मना' इति वाऽलम्। स्वात्मनेति कुत इति चेत्। न। ईशस्स्योत्क्रान्त्यादिना न दुःखमिति प्रदर्शनाय सुखमादत्त इत्यर्थकस्य स्वात्मनेत्यस्य श्रुत्यनुगमार्थमुपादानात्।

(उक्ताक्षेपेण समाधानम्)

उक्तमाक्षिप्य समाधत्ते -

**ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ (२-३-२२)**

(सू.) **न** जीवोऽ**णुः** 'व्याप्ता ह्यात्मानः'[१] **इत्यनणुत्वाभिधायक-श्रुतेः**। उत्क्रान्त्यादिकं तु मनोगतं जीवे उपचर्यत **इति चेन्न**। श्रुतेर्ब्रह्म-परत्वादिति ग्राह्यम्। कुतः ? **इतराधिकारात्** **इतरस्य** जीवान्यस्य ब्रह्मणः **अधिकारात्** 'स आत्मेदं सृजति'[२] इति प्रकरणात्। आत्मान इति बहुवचनबाधेन ब्रह्मपरत्वमित्यर्थः।

(प्रकरणमात्रेण कथं बहुवचनबाध इति शङ्का तत्परिहारश्च)

कथं प्रकरणमात्रेण बहुवचनबाध इत्यत आह -

**ॐ स्वशब्दोन्मानाभ्यां च ॐ (२-३-२३)**

(सू.) 'एषो ह्यात्मा ह्युद्गतो मानशक्तेः'[३] इति वाक्यशेषे श्रुताभ्यां **स्वस्य**

---

१. 'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मानः सर्वरूपा अनन्ताः' इति (ब्र.सू.भा.उ.काषायणश्रुतिः, पृ.२२८)

२. 'स आत्मेदं सृजति स द्विधेदं बिभर्ति अन्तर्बहिश्च। स बहुधेदमनुप्रविश्याऽ-त्मनोऽभिनयति। स आत्मा स आत्मानः स ईशः स विष्णुः स परः परोवरीयान्' इति (ब्र.सू.भा.उ.श्रुतिः, पृ.२३२)

३. 'एषो ह्यात्माऽध्युद्गतो मानशक्तेस्तथाऽप्यसौ प्रमितिं याति वेदैः। पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः सर्वाधीशः सर्ववित् सर्वकर्ता॥' इति (ब्र.सू.भा.उ.श्रुतिः, पृ.२३५)

**शब्दः** आत्मशब्दः **उन्मानम्** अपरिमितं भावप्रधानं चेदम् । **आत्म-श्रुत्यपरिमितत्वलिङ्गाभ्यां च** ब्रह्मपरत्वं श्रुतेः, न केवलं प्रकरणादिति चार्थः ।

**(जीवस्याणुत्वे सर्वशरीरव्याप्त्यनुपपत्तिशङ्का, चन्दनदृष्टान्तेन तत्परिहारश्च)**

अथापि जीवस्याणुत्वं न युक्तम् । देहे तत्र तत्र परिज्ञानायोगादित्यतो वक्ति-

**ॐ अविरोधश्चन्दनवत् ॐ (२-३-२४)**

**(सू.)** जीवस्याणुत्वेऽपि **देहव्याप्त्यविरोधः चन्दनवत्** चन्दनबिन्दुवत् । एकदेशे पतितस्य चन्दनबिन्दोरंशैः शरीरव्याप्तिवद् अणोरपि जीवस्य स्वांशैर्व्याप्तिर्युक्तेत्यर्थः ।

**(त.दी.)** चन्दनेत्युक्त्या 'अणुमात्रोऽप्ययं जीवः' (ब्र.सू.भा. उ. ब्रह्माण्ड-वचनम्) इति स्मृतिः सूचिता। इति (पृ.सं.३३३)

**('अवस्थावैशेष्याच्चन्दनस्य व्याप्तिसम्भवेऽपि जीवस्य न तथा' इत्याक्षेपः, तत्परिहारश्च)**

उक्तमाक्षिप्य समाधत्ते -

**ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ (२.३.२५)**

**(सू.)** चन्दनबिन्दोः क्वचिच्छरीरदेशे सम्यगवस्थानमन्यत्रासम्यगिति **अवस्थानवैशेष्याद्** व्याप्तिसम्भवेऽपि जीवस्य तदभावान्न युक्ता व्याप्तिरिति **चेन्न । अभ्युपगमात्** । ज्ञस्याप्यवस्थितिवैशेष्यस्येति व्यत्ययेनानुवर्तते । **हृदि हीति** श्रुतिप्रतीकग्रहणम् । 'हृदि ह्येष आत्मा' (प्र. ३-६) इति श्रुतेरित्यर्थः । आत्मनोऽपि हृदि सम्यगवस्थानमन्यत्रा-सम्यगित्यभ्युपगमादिति भावः ।

(प्रकारान्तरेण शरीरव्याप्तिकथनम्)

देवानामंशत व्याप्तिसम्भवेऽप्यन्येषां निरंशत्वान्न सम्भवतीत्यतः प्रकारान्तरेण शरीरव्याप्तिमाह-

**ॐ गुणाद् वाऽऽलोकवत् ॐ (२-३-२६)**

(सू.) हृदि स्थितस्याप्यणोर्जीवस्य **चिद्गुणाद् वा** देहे व्याप्तिः । अणुजीवाभिन्नस्य चिद्गुणस्य कथं व्याप्तिरित्यत उक्तम्-**आलोकवदिति** ॥ आलोकस्य दीपादेः स्वरूपेण दीपिकादावेकत्रावस्थानेऽपि प्रकाशगुणेनापवरकादिव्याप्तिवदित्यर्थः ॥ १२ ॥

॥ इत्युत्क्रान्त्यधिकरणम् ॥ १२ ॥

**॥ १३ ॥ अथ व्यतिरेकाधिकरणम् ॥**

**(जीवस्यैकरूपत्वानेकरूपत्वश्रुत्योर्विरोधपरिहारः)**

अत्र जीवस्यैकरूपत्वानेकरूपत्वश्रुत्योर्विरोधः परिह्रियते ।

**ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ (२-३-२७)**

(सू.) अंशैरस्तीति शेषः। ज्ञस्य अणोरपीत्यनुवर्तते । अणोरपि जीवस्य अंशैर्**व्यतिरेकः** विभागोऽस्ति । अत्यन्ताभेदस्य[१] भेदोऽसम्भावित इत्यत उक्तम्- **गन्धवदिति** ॥ यथा पुष्पगन्धस्य स्वांशैर्विभागस्तथा । कुतः? **दर्शयति** ॥ 'अथैक एव सुगन्धवद् व्यतिरिच्यते । अथैकीभवति बह्वीभवति'[२] इति श्रुतिः, चशब्दात् 'अचिन्त्ययेशशक्त्यैव ह्येकोऽ-

---

१. 'अत्यन्तभेदस्य' इति क.पाठः प्रामादिक इति भाति ।

२. 'अथैक एव सन् गन्धवद् व्यतिरिच्यते । अथैकीभवति अथ बह्वीभवति । तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयान्' इति (ब्र.सू.भा.उ.शाण्डिल्यश्रुतिः, पृ. २४९)

वयववर्जितः । आत्मानं बहुधा कृत्वा क्रीडते'[१] इति स्मृतिश्चांशैर्बहुरूपत्वं **दर्शयतीत्यर्थः** । तथा च भिन्नांशशून्यस्यापि योगाराधितेशप्रसादायत्त-योगसम्पदांऽशसम्भवेन 'स पञ्चधा स सप्तधा स दशधा'[२] इति श्रुत्युक्तं बहुरूपत्वं युक्तम्। 'स एकधा न सप्तधा'[३] इति श्रुतिस्तु स्वरूपैक्यविषयेति भावः ॥ १३ ॥

॥ इति व्यतिरेकाधिकरणम् ॥ १३ ॥

## ॥ १४ ॥ अथ पृथगधिकरणम् ॥

**(जीवेशभेदाभेदश्रुतिविरोधपरिहारः)**

अत्र जीवेशभेदाभेदश्रुत्योर्विरोधोऽपाक्रियते ।

**ॐ पृथगुपदेशात् ॐ** (२-३-२८)

(सू.) ज्ञः स्वात्मनेत्यनुवर्तते । जीवः स्वात्मना परमात्मना **पृथक्** भिन्नः । कुतः? **उपदेशात्** 'भिन्नोऽचिन्त्यः (जीवः) परमो जीव-सङ्घात्'[४] इति श्रुतेरित्यर्थः ।

---

१. 'अचिन्त्ययेशशक्त्यैव ह्येकोऽवयववर्जितः । आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा ॥' इति (ब्र.सू. भा.उ.पाद्मवचनम्, पृ. २४५)

२. 'स पञ्चधा स सप्तधा स दशधा भवति स शतधा च सहस्रधा स गच्छति स मुच्यते' इति (ब्र.सू.भा.उ. पाराशर्यायणश्रुतिः, पृ. २४३)

३. 'स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुं चाऽवर्तते स विमुच्यते स एकधा न सप्तधा न दशधा न शतधा' इति (ब्र.सू.भा.उ. गौपवनश्रुतिः, पृ.२४३)

४. 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः । यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत् ॥' इति (ब्र.सू.भा.उ. कौशिकश्रुतिः, पृ. २४७)

(अद्वैतश्रुतेरप्रामाण्यशङ्का तन्निरासश्च)

नन्वेवं सत्यद्वैतश्रुतेर्निर्विषयत्वेनाप्रामाण्यं स्यादित्याशङ्कामपाकरोति-

**ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ (२-३-२९)**

(सू.) **तदिति** स्वात्मपरामर्शः । **तद्गुणसारत्वात्तु** परमात्मगुण-सदृशानन्दादिगुणस्वरूपत्वादेव गौण्या वृत्त्येति यावत् । **तद्व्यपदेशः** अभेदव्यपदेशः । जीवस्येत्यनुवर्तते । **प्राज्ञवत्** यथा प्राज्ञस्य ब्रह्मणः भूम्यादिसकलजगद्धृतधारकत्वादिगुणसदृशगुणात्मकत्वात् 'सर्वं खल्विदं ब्रह्म' (छा.उ. ३.१४.१) इत्यादौ जगदभेदव्यपदेशस्तथैवेत्यर्थः ।

(अयोग्यानामनानन्दरूपत्वेन तान् प्रति 'तत्त्वमसि' इत्युपदेशः कथमिति शङ्का तत्परिहारश्च)

ननु मुक्तियोग्यानामानन्दादिरूपत्वेन तान् प्रति तत्त्वमसीत्युपदेश-सम्भवेऽपि मुक्त्ययोग्यान् अनानन्दरूपान् प्रति कथं तत्त्वमसीति वैदिकोक्तिरिति चेत् । न । शास्त्रस्य सन्मात्राधिकारिकत्वेन तान् प्रत्येवेयमुक्तिरित्यङ्गीकारात् ॥ १४ ॥

॥ इति पृथगधिकरणम् ॥ १४ ॥

## ॥ १५ ॥ अथ यावदधिकरणम् ॥

(उपाध्युत्पत्ति-जीवानुत्पत्तिश्रुत्योर्विरोधपरिहारः)

उपाध्युत्पत्तिजीवानुत्पत्तिश्रुत्योरविरोधः । उपाध्युत्पत्तौ प्रतिबिम्ब-भूतजीवानुत्पत्त्ययोगादिति शङ्कायां येन स्वरूपोपाधिना जीवः प्रतिबिम्बः न तस्योत्पत्तिरित्यत्र निरूप्यते ।

**ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ (२-३-३०)**

(सू.) ज्ञस्येत्यनुवर्तते । उपाधेश्चेति शेषः । जीवस्य तदुपाधेश्च

**यावदात्मभावित्वात्** यावत्परमात्मसत्त्वान्न दोषः । 'सोऽनादिना पुण्येन पापेनानुबद्धः'[१] (पापेन चानुबद्धः) इत्यनादिपुण्यपापसम्बन्धबोधक-श्रुत्यप्रामाण्य**दोषो न** । कुतः ? **तद्दर्शनाच्च** । **तस्य** यावदात्मभावित्वस्य 'नित्यः परो नित्यो जीवः'[२] इति **दर्शनात्** । 'आत्मा नित्यः सुखदुःखे त्वनित्ये'[३] इत्यादिस्मृतेश्चेत्यर्थः ।

'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च[४] ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ।।' (त.दी.उ. स्मृतिः)

इत्यादिवचनेन 'अविनष्ट एवोत्पद्यते' (त.दी.उ. वचनम्) इत्युपाध्युत्पत्तिवचनं बाह्योपाधिविषयमिति भावः ।

**('अनादिनित्यत्वात्' इत्यनुक्त्वा 'यावदात्मभावित्वात्' इति कथने कारणनिरूपणम्)**

अनादिनित्यत्वान्न दोष इत्येव वक्तव्ये यावदात्मभावित्वादिति वचनं बिम्बोपाधितत्सन्निधीनां त्रयाणामप्यनाद्यनन्तत्वमुपपादयितुमिति द्रष्टव्यम् ।। १५ ।।

**।। इति यावदधिकरणम् ।। १५ ।।**

---

१. 'सोऽनादिना पुण्येन पापेना चानुबद्धः । परेण निर्मुक्त आनन्त्याय कल्प्यते' इति (ब्र.सू.भा.उ. श्रुतिः, पृ. २५१)

२. 'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवः । अत उत्पद्यते च म्रियते च विमुच्यते च' इति (ब्र.सू.भा.उ. आग्निवेश्यश्रुतिः, पृ.२५२)

३. 'आत्मा नित्यः सुखदुःखे त्वनित्ये, जीवो नित्यो धातुरस्य त्वनित्यः' इति (ब्र.सू.भा.उ. भारतवचनम्, पृ.२५३)

४. बाह्यमेव च इति ख.पाठः ।

## ॥ १६ ॥ अथ पुंस्त्वाधिकरणम् ॥

### (ज़ीवस्य सुखादिरूपत्व-तदभावश्रुत्योर्विरोधपरिहारः)

जीवस्य सुखादिरूपत्वतदभावश्रुत्योर्विरोधः परिह्रियतेऽस्मिन्नये ।

**ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ (२-३-३१)**

(सू.) तुशब्दोऽवधारणे । **सतस्तु** प्राग् विद्यमानस्यैव ज्ञानानन्दादिरूपत्वस्य **पुंस्त्वादिवत्** बाल्ये विद्यमानपुंस्त्वस्त्रीत्वादेरिव **अभिव्यक्तियोगात्** अभितः सुष्ठु व्यक्त्या हेतुना योगात् 'स दुःखाद् विमुक्तः आनन्दीभवति'[१] इत्यादिव्यपदेशोपपत्तेरित्यर्थः । यथा पुरुषादीनाम् अपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि यौवने तदभिव्यक्तेर्नायं पूर्वं पुमानिदानीं पुमानित्युच्यते । एवं जीवस्वरूपस्याप्यानन्दादेरावरणनिवृत्तिरूपव्यक्त्या आनन्दीभवतीत्यादिव्यपदेशोपपत्तेर्न तद्विरोधेनाऽनन्दरूपत्वाभिधायक (आनन्दरूपत्वाभिधायकस्य) 'विज्ञानात्मा'[२] इत्याद्युदाहृतषट्प्रश्नवाक्यस्य 'स आनन्दः'[३] इति श्रुत्यन्तरस्य च नाप्रामाण्यमिति भावः।

(त.दी.) सत एवेत्यर्थकतुस्तु पूर्वपक्षद्योतनाय । अभीत्युक्तिः सुप्तावानन्दादेर्व्यक्तावपि मुक्ताविव न सम्यक् । तेन साऽपि न व्यपदेशहेतुरिति न शङ्क्यमिति सूचयितुम् । तुः सुष्ठ्वर्थः सन्नभिव्यक्तेः विशेषणीभूय इममर्थमाहेत्येके । इति (पृ.सं.३४१,३४२)

---

१. 'स दुःखाद् विमुक्तः आनन्दीभवति । सोऽज्ञानाद् विमुक्तो ज्ञानीभवति । सोऽबलाद् विमुक्तो बलीभवति । स नित्यो निरातङ्कोऽवतिष्ठते' इति (ब्र.सू.भा.उ.पैङ्गिश्रुतिः, पृ. २५४)

२. 'विज्ञानात्मा सह देवैश्च सर्वैः' इति (प्र.४-११, पृ. २५४)

३. 'स आनन्दः स बलः स ओजः स परेणामुं लोकं नीयते स विमुच्यते ।' इति (ब्र.सू.भा.उ.श्रुतिः, पृ.२५४)

(‘जीवस्याऽनन्दादिरूपत्वेऽपि तदावरणाभावात् न तन्निवृत्तिः’ इति शङ्का तत्समाधानं च)

ननु ‘नित्यानन्दः’[१] इत्यादिश्रुत्या जीवस्याऽनन्दादिरूपत्वेऽपि तदावरणाभावात् तन्निवृत्तिर्नाभ्युपगम्यत इत्याशङ्कायामाह -

**ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॐ**

(२-३-३२)

**(सू.) अस्येति** पूर्वसूत्रादनुवर्तते। **वा**शब्दो व्यवस्थितविकल्पे। **अन्यथा** आवरणाभावात् तन्निवृत्तिरूपव्यक्त्यनङ्गीकारे मुक्तियोग्यानाम् **अस्य** आनन्दादे**र्नित्यमुपलब्धिप्रसङ्गः** नित्यमनुभवप्रसङ्गः। तमोयोग्यानाम् अस्याऽनन्दादे**र्नित्यमनुपलब्धिप्रसङ्गः**। अत्रानुपलब्धिशब्देन असुरा इत्यादाविव प्रकृतसुखोपलब्धिविरुद्धदुःखोपलब्धिरेव विवक्ष्यते। मध्यमानाम् **अन्यतरनियमः** अन्यतरशब्देनोभयं विवक्ष्यते। सुख-दुःखोभयानुभवः स्यादित्यर्थः। आवरणाभावेऽननुभवायोगादिति भाव इति **चन्द्रिकोक्तरीत्या** योजना।

(सूत्रेऽन्यतरपदग्रणे औचित्यकथनम्)

ननु ‘तदुभयनियमः’ इति वाच्यम्। अन्यतरेति किमर्थमाहेति चेत्, इत्थम्। सुखदुःखयोरेकानुभवकाले एवान्यतरानुभवः साम्येन स्यादिति दर्शयितुमन्यतरेत्युक्तमिति **तन्त्रदीपिकायाम्**। **भावबोधे** तु सूत्रार्थः प्रकारान्तरेणोक्तः। अत्र विशेषस्तु **अभिनवचन्द्रिकातो** बोध्यः॥१६॥

॥ इति पुंस्त्वाधिकरणम्॥ १६॥

---

१. ‘नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुरा एवमनेवं च मनुष्याः’ इति (ब्र.सू.भा.उ. आग्निवेश्यश्रुतिः, पृ. २५९)

(त.दी.) तद्गुणेति सतां प्रकृतत्वाद् भावत्वाच्चोपलब्धिः प्रागुक्ता। तदुभयेत्युक्तौ कालभेदेनेत्यपि प्रतीयेतेति केचित्। नित्येति मध्यमपरम्। अन्यतरेत्युत्तमाधम-परमित्येके। इति (पृ.सं.३४४,३४५)

## ॥ १७ ॥ अथ कर्तृत्वाधिकरणमम् ॥

### (एतदधिकरणप्रतिपाद्यविषयः)

'यत्कर्म कुरुते तदभिसम्पद्यते' (बृ.उ.६-४-५, पृ. २६२) 'नान्यः कर्ता' (ब्र.सू.भाष्यदीपिकोदाहृतश्रुतिः, पृ.२६२) इति जीवकर्तृत्वाकर्तृत्व-श्रुत्योर्विरोधो निराक्रियते ।

### ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ (२-३-३३)

(सू.) ज्ञ इत्यनुवर्तते । ज्ञो जीवः **कर्ता**, विधिनिषेधरूप**शास्त्र-स्यार्थवत्त्वादित्यर्थः** । अन्यथेशस्य मुक्तानां च तदविषयत्वा-च्छास्त्रार्थसार्थक्यं (शास्त्रसार्थक्यं) न स्यादिति भावः ।

### (जीवस्य काल्पनिककर्तृत्वशङ्का तन्निरासश्च)

जीवस्य काल्पनिककर्तृत्वं किं न स्यादित्यत आह -

### ॐ विहारोपदेशात् ॐ (२-३-३४)

(सू.) 'जक्षन् क्रीडन् रममाणः' (छा.उ.८-१२-३) इति मुक्तौ **विहार-कर्तृत्वोपदेशा**न्न जीवः कल्पितकर्तृत्ववानित्यर्थः ।

### (मुक्तौ काल्पनिककर्तृत्वाभावेऽपि संसारे जीवस्य तदस्त्विति शङ्का, तन्निरासश्च)

अस्त्वेवं मुक्तौ, संसारे काल्पनिककर्तृत्वेनैव शास्त्रसार्थक्य-सम्भवादित्यत आह -

### ॐ उपादानात् ॐ ( २-३-३५ )

**(सू.)** मोक्षोद्देशेन साधनाद्युपादानप्रतीतेर्जीवः कर्तेत्यर्थः । प्रत्यक्ष-सिद्धत्वान्न काल्पनिकमिति भावः ।

**(श्रुत्या जीवकर्तृत्वसमर्थनम्)**

एवं प्रत्यक्षेण कर्तृत्वं प्रसाध्याधुना श्रुत्याऽपि साधयति -

**ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ ( २-३-३६ )**

**(सू.)** 'आत्मानमेव लोकमुपासीत' (बृ.उ. ३-४-१५) इत्युपासनादि-**क्रियायां कर्तृत्वेन व्यपदेशाच्च** जीवः कर्ता । **न चेत्** 'उपासीत' इत्यत्र जीवस्य कर्तृत्वव्यपदेशो न चेद् आत्मन एव कर्तृत्वापत्त्या 'आत्मानम्' इति **निर्देशस्य विपर्ययः** व्यत्यासः स्यात् । आत्मेति निर्देशः स्यादित्यर्थः ।

**(जीवकर्तृत्वनिषेधकश्रुतिसूत्रयोर्गतिकल्पनम्)**

एवं शास्त्रसार्थक्यान्यथानुपपत्त्यादिना जीवश्चेत् कर्ता तर्हि कथं 'नान्यः कर्ता' (ब्र.सू.भाष्यदीपिकोदाहृता श्रुतिः) इति श्रुतिः 'इतरव्यपदेश' (ब्र.सू. २.१.२२) इति प्राक्कर्तृत्वनिरासश्चेत्यत आह -

**ॐ उपलब्धिवदनियमः ॐ (२-३-३७)**

**(सू.) उपलब्धौ** ज्ञाने **अनियमो यथा** एवं **क्रियायामप्यनियम** इत्यर्थः । इदं वस्तु ज्ञास्यामीतीच्छतोऽपि यथा तदलाभस्तथेदं करिष्यामीतीच्छायामपि कर्मणि नियमाभावादीश्वरस्य तु तद्भावा-न्नियमाभावपरं तद् द्वयमिति भावः ।

**(जीवस्य क्रियादावनियमेऽस्वातन्त्र्यरूपकारणान्तरवर्णनम्)**

जीवस्य क्रियादावनियम एव कुत इत्यतोऽस्वतन्त्रत्वादिति भावेनास्वातन्त्र्यं साधयति -

ॐ शक्तिविपर्ययात् ॐ ( २-३-३८ )

(सू.) ईशशक्त्यपेक्षया जीवस्य **विपर्ययात्** अल्पशक्तित्वाद् अस्वातन्त्र्यं ज्ञायत इति शेषः ।

(अस्वातन्त्र्ये युक्त्यन्तरकथनम्)

युक्त्यन्तरेणाप्यस्वातन्त्र्यं साधयति-

**ॐ समाध्यभावाच्च ॐ ( २-३-३९ )**

(सू.) **समाधिः** अलम्बुद्धिः **तदभावाच्चा**पूर्णकामत्वाच्चास्वातन्त्र्यं प्रतीयत इत्यर्थः ।

(जीवस्यास्वातन्त्र्ये कर्तृत्वोक्तिनिर्वाहः)

नन्वेवं जीवस्य यद्यस्वातन्त्र्यं कथं तर्हि कर्तेत्युच्यते । स्वतन्त्रः खलु कर्तेत्याशङ्कां परिहरति-

**ॐ यथा च तक्षोभयथा ॐ ( २-३-४० )**

(सू.) **यथा तक्षा उभयथा** कारयितृनियतत्वेन कर्तृत्वेन चोच्यते तथा जीवः ईशनियतोऽपि कर्तेत्युच्यत इति **चार्थः** ।

तक्ष्ण इव जीवस्य कर्तृत्वशक्तिर्जीवाधीना नेत्याह -

**ॐ परात्तु तच्छ्रुतेः ॐ (२-३-४१)**

(सू.)**परात्तु** परादेव जीवस्य कर्तृत्वशक्तिः । **तच्छ्रुतेः** 'कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति'[१] इतीशाधीनत्व-श्रुतेरित्यर्थः ।

---

१. (ब्र.सू.भा.उ.पैङ्गिश्रुतिः, पृ. २६९)

**('जीवस्य कर्तृत्वशक्तेः पराधीनत्वे ईशस्यैव कर्तृत्वं न जीवस्य' इति शङ्का, तत्परिहारश्च)**

एवं तर्हीशस्यैव स्यात् कर्तृत्वं न जीवस्येति पुनःशास्त्रवैयर्थ्यमित्यत आह -

**ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ(२-३-४२)**

**(सू.) कृतं** कर्म, योग्यतादेरुपलक्षणमेतत् । जीवानां कर्मयोग्यता-**प्रयत्नापेक्ष एव** ईशः जीवं प्रेरयति इति शेषः । किमशक्तत्वादेवम् ? नेत्याह - **विहितेति** । विधिनिषेधशास्त्रावैयर्थ्याय । **आदिपदात्** स्वस्य वैषम्यनैर्घृण्यपरिहाराय चेत्यर्थः । अतो न शास्त्रवैयर्थ्यमिति भावः ।

**॥ इति कर्तृत्वाधिकरणम् ॥ १७ ॥**

**(त.दी.)** प्रागुक्तवैषम्यादि अत्र आदिपदेन स्मारितमिति ध्येयम् । इति ( पृ.सं.३५० )

## ॥ १८ ॥ अथांशाधिकरणम् ॥

**(जीवस्येश्वरांशत्वानंशत्वश्रुत्योर्विरोधपरिहारः)**

अत्र जीवस्येश्वरांशत्वानंशत्वश्रुतिविरोधः परिह्रियते ।

**ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ (२-३-४३)**

**(सू.)** जीवः परस्यां**शः** उपजीव्यस्योपजीवकत्वरूपांशः । तन्न्यूनत्वे सति किञ्चित्तादृशाख्यश्च । अस्य महारत्नस्यायं रत्नाभासः सहस्रांश इतिवत् । कुतः ? **नानाव्यपदेशात् अन्यथा चापि व्यप-देशात्** इत्यन्वयः । 'नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति

भ्रातेति'[१] इति श्रुतौ पितापुत्रत्वादि**नानाप्रकारेण सम्बन्धव्यपदेशात्**। 'नासावस्य कुतश्चन'[२] 'नैवांशो न सम्बन्धः'[३] **इत्यन्यथा च** सम्बन्धाभावेन च **व्यपदेशादित्यर्थः।** उपजीवकत्वेन सम्बन्धव्यपदेशस्योपजीव्यत्वाभावेन सम्बन्धाभावव्यपदेशस्य चोपपत्तेरिति भावः। तन्न्यूनत्वे सति किञ्चित्सदृशत्वरूपांशत्वे हेतुः- **अन्यथा च दाशकितवादित्वमप्यधीयत इति एके** शाखिनः 'ब्रह्म दाशा ब्रह्म कितवः'[४] इति जीवस्य ब्रह्माभेदमधीयते। **अन्यथा च** 'अन्यः परोऽन्यो जीवः'[५] इति भेदं **चाधीयत एके** इत्यर्थः। ईशजीवयोर्भेदाभेदोक्त्यन्यथानुपपत्त्या भेदमङ्गीकृत्याभेदस्थाने उक्तरूपमंशत्वं निवेशनीयमिति योजना।

### (जीवस्येश्वरांशत्वे श्रुत्युदाहरणम्)

श्रुत्या चांशत्वं साधयति -

### ॐ मन्त्रवर्णात् ॐ (२-३-४४)

(सू.) अपीत्यनुवर्तते। 'पादोऽस्य विश्वा भूतानि' (ऋ. १०-९०-३) इति **श्रुतेश्च** जीवः ईश्वरांश इत्यर्थः।

---

१. 'अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति सखेति च' इति (ब्र.सू.भा.उ.पाराशर्यायणश्रुतिः, पृ.२२८)

२. 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन । नायं तस्यापि कश्चन' इति (ब्र.सू.भा.उ.काषायणश्रुतिः, पृ.२७९)

३. 'नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य। तथाऽपि तु यथायोगं फलदः प्रभुरेकराट्। न नियम्यः स कस्यापि स सर्वस्य नियामकः' इति (ब्र.सू.भा.उ. भाल्लवेयश्रुतिः, पृ.२७३

४. (ब्र.सू.भा.उ.श्रुतिः, पृ.२७९)

५.'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन। नायं तस्यापि कश्चन' इति (ब्र.सू.भा.उ.काषायणश्रुतिः, पृ. २७९)

(जीवस्येश्वरांशत्वे स्मृत्युपन्यासः)

स्मृत्याऽप्येतमर्थं साधयति -

**ॐ अपि स्मर्यते ॐ ( २-३-४५ ) ॥**

(सू.) 'ममैवांशो जीवलोके जीवभूतः सनातनः' (भ.गी. १५-७) इति **स्मृतेश्च** जीवः परांश इत्यर्थः। जीवलोके जीवच्छरीरे जीवभूतः जीवाख्य इति तदर्थः।

('जीवस्य नेश्वरांशत्वम्' इति शङ्का तन्निरासश्च)

न जीवस्येश्वरांशत्वं युक्तम्। तथा सत्यंशत्वाविशेषान्मत्स्यादि-साम्यापातादनंशत्वश्रुतिविरोधाच्चेत्याशङ्कामपाकरोति -

**ॐ प्रकाशादिवन्नैवं परः ॐ (२-३-४६) ॥**

(सू.) **परो** मत्स्यादिरूपी **एवं** जीववद् भिन्नांशो **न**। कथम्? **प्रकाशादिवत्**। प्रकाशाद्यभिमानिवत् प्रकाशकालाग्न्यभिमानी खद्योताभिमानिवन्न, अमृताद्यभिमानी वा मूत्राद्यभिमानिवन्न, मेर्वभिमानी वा विष्ठाभिमानिवन्न, तेजोजलपृथिव्यभिमानिवह्न्यादेः कालाद्यभि-मानिनामभिन्नांशत्वात्। खद्योताद्यभिमानिनां तु भिन्नांत्वादित्यर्थः। तेजोजलपृथिव्याद्यभिमानिनां तु भिन्नांशत्वादित्यर्थः। एतेनानंशत्वश्रुतिः स्वरूपांशत्वनिषेधार्थेत्युक्तं भवति।

(जीवानां मत्स्याद्यभेदशङ्का तन्निरासश्च)

दृष्टान्ते तथात्वेऽपि तावन्मात्रस्यासाधकत्वात् जीवानां मत्स्यादीनां चाभेदः किं न स्यादित्यतो वक्ति-

**ॐ स्मरन्ति च ॐ ( २-३-४७ ) ॥**

(सू.) 'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्'[१] इति भागवते पूर्वं वराहादेर्जीवस्य च 'जगृहे पौरुषं रूपम्'[२] इत्यादिना 'ऋषयो मुनयो देवाः'[३] (इति) विष्णवंशत्वमुक्त्वा एते परमपुरुषस्य स्वरूपांश-विभागाः स्वयं भगवान् कृष्णो मूलरूप्येवेति वराहादेरभिन्नांशत्वम्, जीवानां तु 'अतः परं यदव्यक्तम्'[४] इति भिन्नांशत्वं स्मृतिकर्तारः **स्मरन्तीत्यर्थः**। न केवलं दृष्टान्त इति चार्थः।

(त.दी.)स्मर्यत इति ज्ञस्येशांशत्वे स्मृतिरुक्ता। अत्र तु भिन्नांशत्व इति भेदः। इति (पृ.सं. ३५७)

**(युक्त्यन्तरेणैकविध्यनिरासः)**

युक्त्यन्तरेणैकविध्यं पराकरोति -

**ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ( २-३-४८ )**

(सू.) ज्ञस्य परादिति चानुवर्तते। जीवस्य **देहसम्बन्धाद्धेतोरनुज्ञा-परिहारौ** ईशानुज्ञाधीनप्रवृत्तिमोक्षौ स्तः। **ज्योतिरादिवत्**। यथा ज्योतिषोऽक्ष्यभिमानिनोऽपभ्रष्टस्य श्लेष्माभिमानिनश्च तत्तद्देहसम्बन्धात् सूर्यवरुणायत्तप्रवृत्त्यादिस्तथेत्यर्थः। तथा च जीवः ईशाधीनप्रवृत्त्यादि-मान् देहसम्बन्धित्वाद् अपभ्रष्टवदित्यनुमानमुक्तं भवति। मत्स्यादेर्देह-सम्बन्धाभावात् तौ न स्त इत्यप्युपलक्षणया द्रष्टव्यम्।

---

१. 'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्। इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥' इति (भागवतम् ३-१८, पृ. ४४)

२. 'जगृहे पौरुषं रूपं भगवान् महदादिभिः। सम्भूतं षोडशकलमादौ लोक-सिसृक्षया ॥' इति (भागवतम् ३.१, पृ.३७)

३.'ऋषयो मनवो देवाः मनुपुत्रा महौजसः। कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ॥' इति (भागवतम् ३.२७) पृ.सं. ४३

४. 'अतः परं यदव्यक्तमव्यूढ गुणबृंहितम्। अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः ॥' इति (भागवतम् ३.३२, पृ. ४५)

(त.दी.) पूर्वं स्वरूपांशत्वभिन्नांशत्वयोः प्रकाशादिरत्रांशयनुग्राह्यत्वाननु-ग्राह्यत्वत्वयोर्ज्योतिरादिदृष्टान्त इति भेदः। इति (पृ.सं.३५९)

**(अपूर्णशक्तित्वान्न जीवस्य मत्स्यादिसाम्यमिति कथनम्)**

इतोऽपि न साम्यमित्याह -

**ॐ असन्ततेश्चाव्यतिकरः ॐ** ( २-३-४९ )

(सू.) शक्त्येति शेषः। शक्त्या **असन्ततेरपूर्णत्वाच्च**। मत्स्यादेश्च सन्ततिभावादित्यपि **अव्यतिकरः** उक्तस्य व्यत्यासाभावादित्यर्थः। जीवानां मत्स्यादिसाम्यं नास्तीति।

**(पूर्वोक्तार्थे युक्त्यन्तरकथनम्)**

युक्त्यन्तरेणैतमर्थं साधयति -

**ॐ आभास एव च ॐ** ( २-३-५० )

(सू.) जीवः ईशस्या**ऽभास एव** प्रतिबिम्ब एव। मत्स्यादिस्तु न तथा, अतश्चाव्यतिकर इति योजना॥ १८॥

**॥ इत्यंशाधिकरणम्॥ १८॥**

(त.दी.) योगविभागः प्रथमानिर्देशश्चोत्तरार्थः। इति (पृ.सं.३६०)

**॥ १९ ॥अथादृष्टाधिकरणम्॥**

**(एतदधिकरणप्रतिपाद्यविषयः)**

अत्र जीवस्य ईशप्रतिबिम्बत्वाप्रतिबिम्बत्वपरयोः 'रूपं रूपं प्रतिरूपो बभूव' (ऋ. ६-४७-१८) 'नैवांशो न सम्बन्धः' (भाल्लवेयश्रुतिः) इति श्रुत्योर्विरोधः परिह्रियते।

**ॐ अदृष्टानियमात् ॐ** (२-३-५१)

(सू.) **अदृष्टानाम्** अनादिविद्याकर्मादीनाम् **अनियमात्** वैचित्र्याज्जीव

आभास एवेति सम्बन्धः । बिम्बावैचित्र्येऽपि तत्तदीयादृष्टवैत्रित्र्येण देवमानवदानवादिवैचित्र्योपपत्तेरिति भावः ।

**('रागद्वेषादिवैचित्र्यादेव प्रतिबिम्बवैचित्र्यं किमदृष्टकारणकत्वकल्पनया' इति शङ्का तत्परिहारश्च)**

किमदृष्टकारणकल्पनया ? रागादिदोषवैचित्र्यादेव प्रतिबिम्बवैचित्र्यमस्त्वित्यत आह -

**ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ( २-३-५२ )**

(सू.) **अभिसन्धिः** इच्छा, राग इति यावत् । तथा च **अभिसन्ध्यादिष्वपि** रागादिदोषेष्वपि **एवम्** अदृष्टवैचित्र्यादेव वैचित्र्यम्, पूर्वपूर्वरागादिवैचित्र्यादेव तदस्त्वित्यत उक्तम्- **चेति** ॥ एकस्मिन् पुंसि रागादिवैचित्र्याभावेऽपि प्रतिक्षणवैचित्र्यं चैवमित्यर्थः ।

**('सुरनरादिवैचित्र्ये स्थानवैचित्र्यमेव कारणं भवतु किमदृष्टेन' इति शङ्का तन्निरासश्च)**

स्वर्गस्था सुराः भूमिष्ठा नराः इत्यादिस्थानवैचित्र्यादेव वैचित्र्यमस्तु किमदृष्टेन ? इत्यत आह -

**ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ( २-३-५३ ) ॥**

(सू.) एवमित्यनुवर्तते । स्वर्गादि**प्रदेश**विशेषादेवं सुरनरादिवैचित्र्य**मिति चेत्** । **न** । स्थानवैचित्र्यस्य निष्कारणमनुपपत्त्या तत्कारणान्वेषणे तस्याप्यदृष्टवैचित्र्य एवा**न्तर्भावा**दित्यर्थः ।

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे द्वितीयाध्यायस्य तृतीयः पादः ॥***

---

*. एतदनन्तरम् 'विरोधिकृत्संवत्सरज्येष्ठसप्तम्यां स्थिरवासरेऽपराह्णे बिदरहळ्ळि रघुपतिना कृतं लेखनम्' इति लिपिकृतः वाक्यमेकं मातृकायां दृश्यते ।

## अथ द्वितीयाध्यायस्य चतुर्थः पादः

॥ प्राणोत्पत्यधिकरणम् ॥ १ ॥

**(न्यायोपेतश्रुतिविरोधपरिहारः)**

अध्यात्मविषयन्यायोपेतश्रुतिविरोधोऽस्मिन् पादे परिह्रियते ।

**(इन्द्रियोत्पत्यनुत्पत्तिश्रुतिविरोधपरिहारः)**

तत्र 'एतस्माज्जायते प्राणः'[१] 'अथ प्राणा एवानादयः'[२] इतीन्द्रियोत्पत्यनुत्पत्तिश्रुत्योर्विरोधः प्रथमतोऽपाक्रियते ।

**ॐ तथा प्राणाः ॐ (२-४-१)**

**(सू.)** यथा वियदादयः **तथा प्राणाः** इन्द्रियाणि ईशादेवोत्पद्यन्ते, वियदधिकरणोक्तहेतुभ्य इत्यर्थः ।

**(त.दी.)** अत्र प्राणा इतीन्द्रियाणि तदभिमानिनश्च । जनिरपि पराधीनविशेषरूपैव । सा च यथायोगमुपचयादिरूपा ध्येया । एवमग्रेऽपि । इति (पृ.सं. ३६५)

**(अनादित्वश्रुतेर्गतिकल्पनम्)**

अनादित्वश्रुतेर्गतिमाह -

**ॐ गौण्यसम्भवात् ॐ ( २-४-२ )**

**(सू.)** अनादित्वश्रुतिः **गौणी** सूक्ष्मेन्द्रियपरा । मुख्यानादित्वस्या**सम्भवात्** । जन्मश्रुत्यसम्भवाच्चेत्यर्थः ।

**(त.दी.)** निरुपादानत्वादित्यधिकाशङ्कानिरासाय गौणीति पुनर्योगः । प्रागुक्तगौणत्वादन्यादृशगौणत्वोक्त्यर्थमयं योग इति केचित् । इति (पृ.सं. ३६६)

---

१. 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति (मु.उ. २-१-३)

२. 'अथ प्राणा एवानादयः प्राणा नित्याः' इति (ब्र.सू.भा.उ.काषायणश्रुतिः)

**(प्राणोत्पत्तौ हेत्वन्तरकथनम्)**

हेत्वन्तरमाह -

**ॐ प्रतिज्ञानुपरोधाच्च ॐ ( २-४-३ )**

(सू.) 'स इदं सर्वमसृजत । स प्राणमसृजत' (तै. २-६) इति च **प्रतिज्ञानुसाराच्च** प्राणा जायन्त इत्यर्थः ।

**(सूत्रद्वयवैयर्थ्यशङ्का तत्परिहारश्च)**

ननु 'तथा प्राणाः' (ब्र.सू. १.४.१) इति सूत्रैणैवालम्। अपरसूत्रद्वयं व्यर्थमित्याशङ्कापरिहारो **सत्यनाथतीर्थस्वामिभिः अभिनवचन्द्रिकयाम्**[1] उक्तो द्रष्टव्यः ॥ १ ॥

**॥ इति प्राणोत्पत्त्यधिकरणम्॥ १ ॥**

**॥ २ ॥ अथ तत्प्रागधिकरणम् ॥**

**(एतत्पादप्रतिपाद्यविषयः)**

अत्र मनोनादित्वश्रुतिविरोधो निराक्रियते ।

**ॐ तत्प्राक् श्रुतेश्च ॐ ( २-४-४ )**

---

१. यद्यपि 'तथा प्राणाः' (ब्र.सू. २.४.१) इत्येकेनैव सूत्रेणालम्। 'अस्ति तु' (ब्र.सू. २-३-२ ) इति सूत्रोक्तस्यार्थस्यातिदेशवत् 'गौण्यसम्भवात्' (ब्र.सू. २.४.२) इत्यादिसूत्रार्थस्याप्यतिदेष्टुं शक्यत्वात्, तथाऽपि अत्र 'अस्ति तु' (ब्र.सू. २.३.२) इति सूत्रार्थस्यैवातिदेशः, नतु अश्रुतेरिति हेतोरिति विज्ञायेत,तन्मा विज्ञायीति 'गौण्यसम्भवात्' (ब्र.सू. २.४.२) इति सूत्रं कृतम् । एवमपि अश्रुतेरित्यस्यैवातिदेशः न सर्वस्येति विज्ञायेत तन्मा विज्ञायि किन्तु सर्वातिदेश इति ज्ञापनाय 'प्रतिज्ञानुपरोधाच्च' (ब्र.सू. २.४.३) इति सूत्रं कृतमिति सूत्रद्वयमर्थवदिति । -(अभिनवचन्द्रिका, पृ.३८७)

(सू.) तच्च मनश्च ईशादुत्पद्यते। कुतः ? **तत्प्राक् श्रुतेः** तेभ्यः प्राणेभ्यः **प्राक्** पूर्वं **श्रुतेः** 'मनः सर्वेन्द्रियाणि च'[१] इति पूर्वोत्पन्नत्वश्रवणादित्यर्थः ॥ २ ॥

॥ इति तत्प्रागधिकरणम् ॥ २ ॥

(त.दी.) तत्प्रागित्युक्तिः मनोरूपं विषयं पृथङ् मनसो विशिष्य जन्मोक्त्या जन्मश्रुतेरजन्मश्रुतितो निरवकाशत्वं पूर्वोत्पन्नत्वमल्पोपचयरूपोत्पत्तिभेदं च सूचयितुम्। इति ( पृ.सं.३६८)

**॥ ३ ॥ अथ तत्पूर्वकत्वाधिकरणम् ॥**

**(वागनादित्वश्रुतिविरोधपरिहारः)**

अत्र वागनादित्वश्रुतिविरोधो निराक्रियते ।

**ॐ तत्पूर्वकत्वाद् वाचः ॐ (२-४-५)**

(सू.) वाग् उत्पत्तिमती। 'मनः पूर्वरूपं वागुत्तररूपम्' (ऐ.आ. ३.१.१) इति **वाचः तत्पूर्वकत्वात्** मनःकरणकत्वादुत्पत्तिश्रुतिर्युक्तेत्यर्थः । वागिन्द्रियस्य नित्यत्वश्रुतिस्तु नित्यश्रुत्युच्चारणयोग्यत्वादुपचरितेत्याशयः । अत्र सर्वत्र सूक्ष्मरूपेणानुत्पन्नानामुपचरितरूपेणैवोत्पत्तिरित्यवगन्तव्यम् ॥ ३ ॥

॥ इति तत्पूर्वकत्वाधिकरणम् ॥ ३ ॥

**॥ ४ ॥ अथ सप्तगत्यधिकरणम् ॥**

**(प्राण(इन्द्रिय)सङ्ख्याश्रुतिविरोधपरिहारः)**

अत्र प्राणसङ्ख्याश्रुतिविरोधोऽपाक्रियते ।

---

१. 'एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च' इति (मु. २-१३, पृ.३०३)

### ॐ सप्तगतेर्विशेषितत्वाच्च ॐ (२-४-६)

(सू.) **गतेर्ज्ञानस्य** जनकाः प्राणाः **सप्त** । कुतः? **विशेषितत्वात्** । 'सप्त प्राणाः प्रभवन्ति तस्मात्' (मु. २.१.८) इति श्रुतौ 'गुहाशयां निहिताः सप्त सप्त' (मु. २.१.८) इति गुहाशयां बुद्ध्यर्थमिति ज्ञानार्थत्वेन विशेषणादित्यर्थः । चशब्दो भाष्योदाहृतप्रमाणान्तरसमुच्चये ।

**(सप्तभ्योऽन्येषां प्राणानां (इन्द्रियाणां) सत्वे श्रुतौ सहपाठः स्यादिति शङ्का, तत्परिहारश्च)**

सप्तभ्योऽन्येषां प्राणानां सत्वे 'सप्त' (मु. २.१.८) इति श्रुतौ तैः सहपाठः स्यादित्यत आह -

### ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ( २-४-७ )

(सू.) **हस्तादयस्तु** पञ्च **स्थिते** कर्मविषये जनकाः । **अतो** वैलक्षण्यात् । **एवं** तैः सहपाठो **न** इत्यर्थः ।

'संसारस्थितिहेतुत्वात् स्थितं कर्मविदो विदुः ।
तस्मादुद्गतिहेतुत्वाद् ज्ञानं गतिरिहोच्यते ॥'

(ब्र.सू.भा.उ.वायुप्रोक्तवचनम्)

इति प्रमाणाद् गतिस्थितिशब्दावुक्तार्थाविवेति ध्येयम् ॥ ४ ॥

॥ इति सप्तगत्यधिकरणम् ॥ ४ ॥

## ॥ ५ ॥ अथाण्वधिकरणम् ॥

**(प्राणानणुत्वश्रुतिविरोधपरिहारः)**

अत्र प्राणानणुत्वश्रुतिविरोधो[1] निराक्रियते ।

---

१. 'अणुभिः पश्यति...' इति प्राणाणुत्वप्रतिपादकश्रुतेः 'दिवीव चक्षुराततम्' इति प्राणानणुत्वप्रतिपादकश्रुत्या विरोधः परिह्रियत इत्यर्थः ।

**ॐ अणवश्च ॐ (२-४-८)**

(सू.) प्राणा **अणव** एव । तेजसा व्याप्ताश्चेत्यर्थः । अतो न द्विविधश्रुतिविरोध इत्याशयः ॥ ५ ॥

॥ इत्यण्वधिकरणम् ॥ ५ ॥

## ॥ ६ ॥ अथ श्रेष्ठाधिकरणम् ॥

**(मुख्यप्राणोत्पत्यनुत्पत्तिश्रुतिविरोधपरिहारः)**

अत्र मुख्यप्राणोत्पत्त्यनुत्पत्तिश्रुतिविरोधो निराक्रियते ।

**ॐ श्रेष्ठश्च ॐ ( २-४-९ )**

**(सूत्रार्थः) मुख्यप्राणश्च** ईशाज्जायते । 'सौक्ष्म्येण वा एषोऽवतिष्ठते स्थूलत्वेनोदेति'[१] इति श्रुतेरित्यर्थः । अजन्मश्रुतिः स्वरूपानादित्वपरेति भावः ।

**(त.दी.)** 'एतेन मातरिश्वा' (ब्र.सू.८.३.२) इत्यत्र बाह्यवायुरूपेणोत्पत्त्युक्तावपि सर्वमृत्यूत्पत्तिहेतुना प्राणरूपेणाप्युत्पत्तिरत्रोच्यत इति ध्येयम् । इति (पृ.सं.३७३)

**(प्राणोत्पत्तिश्रुतेश्चेष्टारूपंक्रियापरत्वशङ्का तन्निरासश्च)**

ननु प्राणजन्मश्रुतिश्चेष्टारूपक्रियादिपरा किं न स्यादित्यत आह -

**ॐ न वायुक्रिये पृथगुपदेशात् ॐ ( २-४-१० )**

(सू.) बाह्य**वायुचेष्टारूपक्रिये** प्राणोत्पत्तिश्रुतिवाच्ये **न** भवतः । कुतः?

---

१. 'सौक्ष्म्येण वा एषोऽवतिष्ठते स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च । प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिः' इति (ब्र.सू.भा.उ.गौपवनश्रुतिः, पृ. ३२३)

'स प्राणमसृजत' (प्र. ६.४) इत्युक्त्वा 'प्राणाच्छ्रद्धाम्' (प्र. ६.४) इत्यादिना वायुकर्मणोः **पृथग्जातत्वोक्तेरित्यर्थः** ॥ ६ ॥

**॥ इति श्रेष्ठाधिकरणम् ॥ ६ ॥**

## ॥ ७ ॥ अथ चक्षुराद्यधिकरणम् ॥

### (मुख्यप्राणस्वातन्त्र्यास्वातन्त्र्यश्रुतिविरोधपरिहारः)

अत्र मुख्यप्राणस्य स्वातन्त्र्यास्वातन्त्र्यश्रुत्योर्विरोधो निराक्रियते ।

**ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ( २-४-११ )**

**(सू.) चक्षुरादिवन्**मुख्यप्राणः परमात्माधीन एव । कुतः ? **तत्सहशिष्ट्यादिभ्यः** तैः सह शिष्टिः शासनम् उक्तिरिति यावत् । 'सर्वं ह्येवैतत् परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च'[१] इति चक्षुरादिभिः सहैव तद्वशत्वाभिधानात् । **आदि**पदात् प्राणो न स्वतन्त्रः भगवत्प्रेरणामन्तरेण दर्शनादिशक्तिविधुरत्वादिति युक्तेः 'सर्वकर्ताऽपि सन्प्राणः परमाधारतः स्थितः'[२] इत्यादिस्मृतेश्चेत्यर्थः ।

(त.दी.) प्राधान्याच्चक्षुष आदित्वोक्तिः । (पृ.सं.३७५)

---

१. 'सर्वं ह्येवैतत् परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च । स ह्येक एवैतान् नयत्युन्नयति वशीकरोति ॥' इति (ब्र.सू.भा.उ.गौपावनश्रुतिः, पृ.३२८)

२.'सर्वकर्ताऽपि सन्प्राणः परमाधारतः स्थितः । कथमेवान्यथा स स्याद् यतो नैवेश्वरद्वयम् ॥ अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् । अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः ॥ अनन्येश्वरता प्राणे तदन्येश्वरवर्जना । यतो विशेषवाक्येन ह्रियते समता वचः ॥' इति (ब्र.सू.भा .वचनम्, पृं. ३२९,३३०)

**(चक्षुरादिवन्मुख्यप्राणस्येश्वराधीनत्वे तस्यावान्तरेश्वरत्वासम्भवेन 'न प्राणः किञ्चिदाश्रितः' इति स्वातन्त्र्यश्रुतिर्व्यर्था इति शङ्का तत्परिहारश्च)**

ननु चक्षुरादिवदेवेश्वराधीनत्वं मुख्यप्राणस्य यदि तर्हि तस्यावान्तरेश्वरत्वासम्भवेन श्रुतिर्व्यर्था स्यादित्यत आह -

**ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ ( २-४-१२ )**

(सू.) करणत्वं कर्तृप्रयोज्यत्वम् । मुख्यप्राणस्याकरणत्वाच्चक्षुरादेश्च कर्तृप्रयोज्यत्वाद**दोषः** । तद्वदवान्तरेश्वरत्वाभावरूपदोषो न । कुतः ? 'तानि ह वा एतानि करणानि प्राण एवाकरणः'[३] इति **श्रुतिः हि** यस्मात् **तथा**ऽकरणत्वादिना **दर्शयति** प्राणं चक्षुरादिकं च वक्तीत्यर्थः । सुप्तेऽपि मुख्यप्राणव्यापारदृष्टेस्तस्य जीवाप्रयोज्यत्वम् । चक्षुरादेस्तु नैवमिति ज्ञेयम् ।। ७ ।।

**।। इति चक्षुराद्यधिकरणम् ।। ७ ।।**

**।। ८ ।। अथ पञ्चवृत्त्यधिकरणम् ।।**

**(प्राणादेर्मुख्यप्राणस्वरूपत्वात् तद्दासत्वश्रुतिविरोधनिरासः)**

अत्र प्राणादेर्मुख्यप्राणस्वरूपत्वात् तद्दासत्वश्रुत्योर्विरोधः परिह्रियते ।

**ॐ पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॐ ( २-४-१३ )**

(सू.) वृत्तिः रूपम् । श्रेष्ठ इत्यनुवर्तते । श्रेष्ठः मुख्यप्राणः **पञ्चवृत्तिः** प्राणादिपञ्चरूपवान् । पञ्चदासवांश्चेत्यपि ग्राह्यम् । **मनोवत्** । यथा मनः पञ्चरूपवत् पञ्चदासवच्च तद्वच्छ्रेष्ठोऽपि वर्गद्वयवान् **व्यपदिश्यते** ।

---

३. 'तानि ह वा एतानि करणानि प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इत्याचक्षते ।' इति (ब्र.सू.भा.उ. माण्डव्यश्रुतिः, पृ. ३३२)

'अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च ।
तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः ॥'[१]

इत्यादिषु कथ्यत इत्यर्थः ॥ ८ ॥

**॥ इति पञ्चवृत्त्यधिकरणम् ॥ ८ ॥**

## ॥ ९ ॥ अथाण्वधिकरणम् ॥

**(मुख्यप्राणदेहस्याणुत्वानणुत्वपरिमाणविषयश्रुतिविरोधपरिहारः)**

अत्र मुख्यप्राणदेहस्याणुत्वानणुत्वपरिमाणविषयश्रुतिविरोधः परिह्रियते ।

**(पूर्वपक्षसिद्धान्तौ)**

'प्राण एवाधस्तात्'[२] इति श्रुतेर्व्याप्त एव प्राण इति पूर्वपक्षे आह -

**ॐ अणुश्च ॐ (२-४-१४)**

(सू.) मुख्यप्राणदेहोऽणुर्व्याप्तश्चेत्यर्थः । 'अन्तर्वाऽणुर्बहिर्महान्'[३] इति विशेषश्रुतेर्नाडीसञ्चारित्वयुक्तेश्चान्तःप्राणरूपेण बहिर्वायुरूपेण व्याप्त इति भावः ॥ ९ ॥

**॥ इत्यण्वधिकरणम् ॥ ९ ॥**

---

१. (अभिनवचन्द्रिकोदाहृता श्रुतिः, पृ.४०४)

२. 'प्राण एवाधस्तात् प्राण उपरिष्टात् प्राणो मध्यतः प्राणः सर्वतः प्राण एवेदं सर्वम्' इति (ब्र.सू.भा.उ. श्रुतिः, पृ.३३७)

३. 'स वा एष प्राणोऽणुर्महान् नामान्तर्वाऽणुर्बहिर्महान् । प्राणो वा ईशितव्येश ईशो ह्यसौ सर्वस्येशितव्यश्च परस्य'

इति (ब्र.सू.भा.उ.कौण्डिन्यश्रुतिः, पृ.३३९)

## ॥ १० ॥ अथ ज्योतिरधिकरणम् ॥

### (चक्षुरादीनां जीवकरणत्वेशकरणत्वश्रुत्योर्विरोधपरिहारः)

अत्र चक्षुरादीन्दियाणां जीवकरणत्वेशकरणत्वश्रुत्योर्विरोधोऽपाक्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

'जीवस्य करणान्याहुः'[१] इति श्रुतेर्जीववशत्वेन दृश्यमानत्वयुक्तियुक्तायाः सद्भावाज्जीवकरणान्येवेति पूर्वपक्षे, वक्ति -

**ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ( २-४-१५ )**

**(सू.)** 'योऽग्नौ तिष्ठन्' (बृ.उ. ५.७.५) 'यस्तेजसि तिष्ठन्' (बृ.उ. ५.७.१४) इत्यादिश्रुतेरग्न्यादिरूप**ज्योतिराद्यधिष्ठानं यद्ब्रह्म तदेव** ज्योतीरूपचक्षुरादिनियामकम्। चक्षुरादितत्करणमिति यावत्। कुतः? **तदमाननात् तस्य** च चक्षुरादिनियामकत्वस्या**ऽमननात्** । 'यश्चक्षुषि तिष्ठन्' (बृ.उ. ५.७) इत्यादिना तदुक्तेरित्यर्थः । ब्रह्मसम्बन्धीन्येव करणानि जीवस्य ज्ञानसाधनानि । न पुनस्तत्करणानि । जीवापेक्षया तेषां प्रयोज्यत्वाभावात् । इन्द्रियाणां मूलभूततेजःप्रभृतिभूतानां ब्रह्मनियम्यत्वेन सुतरामेषां तन्नियम्यत्वमित्याशयः ।

**(त.दी.)** ब्रह्मेत्येव वाच्ये यदग्न्यादिरूपज्योतिराद्यधिष्ठानमिति ब्रह्मविशेषणोक्तिः ब्रह्मणोऽग्न्यादिरूपभूतप्रेरकत्वात् तदंशभूतचक्षुरादेरपि तस्यैव प्रेकत्वमिति युक्तिं सूचयितुम् । अत एव ज्योतिरादिभूतकार्यत्वात् । ज्योतिरादिशब्देन चक्षुरादेर्ग्रहणम्। आकाशाद्यधिष्ठानमिति वाच्ये ज्योतिरादीत्युक्तिरपि चक्षुरादीति प्रकृतत्वात्। इति (पृ.सं.३८० )

---

१. 'जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः । यस्मात् तद्वशगा एते दृश्यन्ते सर्वदेहिषु ॥' इति (ब्र.सू.भा.उ. सौत्रायणश्रुतिः, पृ.३४०)

(जीवकरणत्वप्रतिपादकश्रुतेर्गतिप्रदर्शनम्)

जीवकरणत्वाभिधायकश्रुतेर्गतिमाह -

**ॐ प्राणवता शब्दात् ॐ ( २-४-१६ )**

(सू.) **प्राणवता** इन्द्रियवता जीवेन तद्ब्रह्म स्वकरणैरिन्द्रियैर्दर्शनादि कारयति अतस्तानि जीवकरणानीत्युच्यन्त इत्यर्थः । कुतः ? **शब्दात्** । 'एष ह्यनेन'[१] इति श्रुतेरित्यर्थः ।

('जीवस्य करणानि' इति श्रुतेरर्थान्तरकथनम्)

श्रुतेरर्थान्तरमाह-

**ॐ तस्य चानित्यत्वात् ॐ ( २- ४- १७ )**

(सू.) **तस्य** प्रमाणवतो जीवस्य । चशब्दात् प्राणानां तत्सम्बन्धस्य च **नित्यत्वाद्** बहुकालीनत्वादित्यर्थः । परकीयेऽपि बहुकालसम्बन्धिनि तदीयत्वोपचारस्य लोके दर्शनाद् याचितकुठारवज्जीवे ईषत्करण-सम्बन्धस्यानादित्वाच्च तदभिप्राया श्रुतिरित्याशयः ।। १० ।।

**।। इति ज्योतिरधिकरणम् ।। १० ।।**

(त.दी.) सम्बन्धनित्यत्वोक्त्यैव पूर्तौ जीवप्राणयोरपि तदुक्तिः तत्सम्बन्ध-नित्यत्वार्था । सम्बन्धिनोरभावे तदयोगात् । इति (पृ.सं.३८२)

## ।। ११ ।। अथ त इन्द्रियाधिकरणम् ।।

(मुख्यप्राणस्येन्द्रियत्व-तदभावश्रुत्योर्विरोधपरिहारः)

अत्र मुख्यप्राणस्येन्द्रियत्वतदभावश्रुत्योर्विरोधो निराक्रियते ।

---

१. 'एष ह्यनेनाऽत्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मनयति बुद्ध्या बोधयति तस्मादेतावाहुः सृतिरसृतिरिति' इति (ब्र.सू.भा.उ.भाल्लवेयश्रुतिः, पृ.३४३)

(पूर्वपक्षसिद्धान्तौ)

'प्राणा वा इन्द्रियाणि'[१] इति श्रुतेः सर्वेषामिन्द्रियत्वाभिधानान्मुख्यप्राणस्यापीन्द्रियत्वमिति पूर्वपक्षे आह -

**ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ( २-४-१८ )**

**(सू.) ते** प्राणाश्चक्षुराद्याः **श्रेष्ठादन्यत्र** श्रेष्ठं विना **इन्द्रियाणि**। कुतः? 'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम्'[२] इति श्रुतौ तथा **व्यपदेशादित्यर्थः** ।

**(परमात्माधीनत्वाविशेषात् प्राणस्यापीन्द्रियत्वमस्त्विति शङ्का, तत्परिहारश्च)**

ईशवशत्वाविशेषात् प्राणस्यापीन्द्रियत्वमित्यत आह -

**ॐ भेदश्रुतेः ॐ ( २-४- १९ )**

**(सू.)** 'स्थित एव हीदं मुख्यप्राणः कारयति'[३] इति श्रुतौ मुख्यप्राणेन्द्रिययोः सर्वकर्तृकारयितृत्वतदभावरूपेण **भेदकधर्मोक्तेरित्यर्थः**।

**(इन्द्रियमुख्यप्राणयोः प्रत्यक्षश्रुतिभ्यां वैलक्षण्यकथनम्)**

चक्षुरादेः श्रेष्ठस्य च भेदं श्रुत्याऽभिधायेदानीं प्रत्यक्षश्रुतिभ्यामाह -

---

१. 'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति' इति (ब्र.सू. भा.उ. पौत्रायणश्रुतिः, पृ. ३४७)

२. 'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् । द्रवतामिन्द्रियाणां हि नियन्ता प्राण एकराट् ॥' इति (ब्र.सू.भा.उ. पौत्रायणश्रुतिः, पृ.३४९)

३. 'स्थित एव हीदं मुख्यप्राणः करोति कारयति बलति बालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति न बालयन्ति न दधते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानि' इति (ब्र.सू.भा.उ.पौत्रायणश्रुतिः, पृ.३५०)

ॐ वैलक्षण्यात् ॐ ( २-४-२० ) ॥

(सू.) चक्षुरादेर्जीवप्रयत्नाधीनत्वमुख्यप्राणस्य तदधीनत्वरूप-**वैलक्षण्याच्च** चक्षुरादीन्येवेन्द्रियाणीत्यर्थः ।चक्षुरादीनां प्रवृत्तिर्जीवाधीना न श्रेष्ठप्रवृत्तिरिति तावत् प्रत्यक्षसिद्धम् ।

'करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम् ।
श्रोत्रादिभिः कारयति करणानीत्यतो विदुः ॥
न जीवापेक्षया मुख्यं कारयेत् परमेश्वरः ।
केवलात्मेच्छयात स्मुख्यत्वं (?) तस्य निश्चितम् ॥'
इत्याद्यनेकवाक्याच्चेदं सिद्धमिति भावः ॥ ११ ॥

॥ इति त इन्द्रियाधिकरणम् ॥ ११ ॥

**॥ १२ ॥ अथ सञ्ज्ञाधिकरणम् ॥**

**(प्रपञ्चस्य विरिञ्च-विष्णुसृष्टत्वश्रुत्योर्विरोधपरिहारः)**

अत्र नामरूपात्मकप्रपञ्चस्य विरिञ्चविष्णुसृष्टत्वश्रुत्योर्विरोधोऽ-पाक्रियते ।

(पूर्वपक्षसिद्धान्तौ)

'विरिञ्चो वा इदं सर्वं विरेचयति'[१] इति श्रुतेर्विरिञ्च एव नाम-रूपात्मकप्रपञ्चोत्पादक इति पूर्वपक्षे आह -

**ॐ सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ( २-४-२१ )**

(सू.) **सञ्ज्ञामूर्ति**शब्दवाच्यनामात्मकदेहात्मकप्रपञ्चस्य **क्लृप्तिः** सृष्टिः

---

७१६. 'विरिञ्चो वा इदं सर्वं विरेचयति विदधाति ब्रह्मा वाव विरिञ्च एतस्माद्धीमे रूपनामनी' इति (ब्र.सू.भा. उ.गौपवनश्रुतिः, पृ.३५३)

**त्रिवृत्कुर्वत एव** । तेजोबन्नानां मिश्रीभावकर्तुर्विष्णोरेव, न विरिञ्चात्। कुतः ? **उपदेशात्** 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' (तै.आ.३-१२) इति पुंसूक्तोक्तत्वादित्यर्थः । 'विरिञ्चो वा इदम्' (ब्र.सू.भा.उ.गौपवनश्रुतिः, पृ. ३५३) इति श्रुतिस्तु द्वारकर्तृत्वपरेत्यविरोधः। 'ब्रह्माद्यास्तदवान्तराः'[१] इति वचनादित्यर्थः। नामरूपकरणस्य त्रिवृत्करणसापेक्षत्वादिति युक्तिसूचनार्थं त्रिवृत्क्रियेति हेतुगर्भपदम्। तत्प्रकारस्तु भाष्यादौ स्पष्टः ॥ १२ ॥

**॥ इति सञ्ज्ञाधिकरणम् ॥ १२ ॥**

**(त.दी.)** परादित्येव वाच्ये त्रिवृदित्याद्युक्तिः त्रिवृत्कर्तृत्वयुक्तिसूचनाय। त्रिवृत्करणाभावे रूपोत्पत्तेरयोगस्याग्रे स्पष्टत्वात्। रूपाभावे नामक्लृप्तेर-योगादिति। सञ्ज्ञेत्याद्युक्तिः श्रौतनामरूपे व्याख्यातुम्। इन्द्रियाश्रयदेहोक्त्या पूर्वोत्तरसङ्गतिं सूचयितुं चेति केचित्। इति (**पृ.सं.** ३८७, ३८७)

## ॥ १३ ॥ अथ मांसाधिकरणम् ॥

### (शरीरस्य त्र्यात्मकत्वाप्यश्रुत्योर्विरोधपरिहारः)

अत्र शरीरस्य त्र्यात्मकत्वाप्यश्रुत्योर्विरोधोऽपाक्रियते ।

### (पूर्वपक्षसिद्धान्तौ)

'अद्भ्यो हीदमुत्पद्यते'[२] इति श्रुतेराप्यमेव, 'पृथिवी शरीरमप्येति' (बृ.उ. ५-२-१३) इति श्रुतेः पार्थिवमेव वा, सर्वथा न त्र्यात्मकं शरीरमिति पूर्वपक्षे, आह-

---

१. 'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः । एक एव यतः स्रष्टा ब्रह्माद्या-स्तदवान्तराः ॥' इति (ब्र.सू. भा.उ. पाद्मवचनम्, पृ.३५७)

२. 'अद्भ्यो हीदमुत्पद्यते आपो वाव मांसमस्थि च भवन्त्यापः शरीरमाप एवेदं सर्वम्' इति (ब्र.सू.भा.उ. कौण्डिन्यश्रुतिः) पृ.सं.३५९

ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ ( २-४-२२ )

(सू.) यच्छरीरे **मांसाद्येव** कठिणं वस्तु तदेव **भौमं** पार्थिवं यच्च शोणितादि तदेवाऽप्यम्, यच्च मज्जादि तदेव तैजसम् । न सर्वशरीरं किन्तु **इतरयोः** अप्तेजसोश्च कार्यम् । शरीरं त्र्यात्मकमिति यावत् । **यथाशब्दं** 'यत् कठिनं सा पृथिवीति यद् द्रवं तदापः यदुष्णं तत्तेजः' (गर्भ.उ. ३) इत्यादिशब्दोक्तरीत्याऽङ्गीकार्यमित्यर्थः । यद्वा, **मांसादि-भौमम् अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकार्यम्** । मिश्रीकृतभूत-जन्यत्वात् । अत 'आपो वाव मांसम्' (ब्र.सू.भा.उ.कौण्डिन्यश्रुतिः, पृ.३५९) इति श्रुतिरुपपन्नेति हृदयम् ।

ननु यदि शरीरं नैकभूतकार्यं कथं तर्हि 'अद्भ्यो हीदमुत्पद्यते' (ब्र.सू.भा.उ.कौण्डिन्यश्रुतिः,पृ.३५९) इत्यादिश्रुतिषु विशिष्याऽप्यत्वा-द्युक्तिरित्यत आह -

ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ( २-४-२३ )

(सू.) तत्तच्छरीराणां तत्तद्भूतसंयोग**वैशेष्यात् तद्वादः** आप्यत्व-भौमत्वादिव्यपदेश इत्यर्थः ।

'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता ।
इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु मात्रतः[१] ॥'

७२६. (ब्र.सू.भा.उ.बृहत्संहितावचनम्, पृ.३६५)

इत्यादिभाष्योदाहृतप्रमाणोक्तरीत्या तत्तद्भूतवैशेष्यमनुसन्धेयम् ॥१३॥

॥ इति मांसाधिकरणम् ॥ १३ ॥

१. 'भागतः' इति कचित् पाठः ।

(त.दी.) द्विरुक्तिरुक्तसर्वावधारणार्था। इति (पृ.सं.३८९)

॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे द्वितीयाध्यायस्य चतुर्थः पादः ॥*

*. एतदनन्तरं मातृकायामिदं वाक्यमुपलभ्यते- 'विरोधिकृत्संवत्सरज्येष्ठ-कृष्णदशम्यां भौमवासरे सायाह्ने बिदरहळ्ळि रघुपतिना कृतं लेखनम्' इति।

# ॥ अथ तृतीयोऽध्यायः ॥

## प्रथमः पादः

### (मोक्षसाधननिरूपणम्)

एवमध्यायद्वयेनोक्ताभ्यां समन्वयाविरोधाभ्यां ब्रह्मस्वरूपे निर्णीते, एवं चेत् किं मया कार्यमिति शङ्कायामथजिज्ञासापदोक्तानां मोक्षसाधनानां विचारोऽस्मिन् तृतीयेऽध्याये क्रियते ।

### (विरक्त्यर्थं गत्यागतिस्वर्गनरकगर्भवासादिनिरूपणम्)

तत्र वैराग्यस्य पुरुषप्रयत्नाविषयत्वात् तदर्थं गत्यागतिस्वर्गनरक-गर्भवासादिकमस्मिन् पादे निरूप्यते ।

### ॥ १ ॥ तदन्तराधिकरणम् ॥*

### (पूर्वपक्षसिद्धान्तौ)

'भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम्'[१] इति वचनेन मरणस्यैव मोक्षत्वात् तस्य च वैराग्याद्यननुष्ठानेऽपि नियतत्वान्न वैराग्यादिना कृत्यमिति पूर्वपक्षे सत्याह -

**ॐ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यां ॐ**
**(३-१-१)**

(सू.) अत्र तच्छब्देन 'मांसादिभौमम्' (ब्र.सू. २.४.२२) इत्यव्यव-हिताधिकरणप्राप्तशरीरपरामर्शः । **प्रतिपत्ताविति** सप्तमी तादर्थ्ये । शरीरान्तरप्राप्त्यर्थम् । **भूतसम्परिष्वक्तो** स्थूलं देहं त्यक्त्वा सूक्ष्मभूतैः

---

*. अधिकरणेऽस्मिन् जीवस्य भूतावियोगः समर्थ्यते ।

१.'भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम् । भूतानां सम्प्रयोगश्च जनिरित्येव पण्डितैः ॥' इति (ब्र.सू.भा.उ.भारतवचनम्, पृ. ३)

संयुक्तो जीवः **रंहति** गच्छति। कुतः ? यतः 'वेत्थ पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा.उ. ५-३-९) इति प्रवाहणस्य **प्रश्न**वाक्यात्। 'इति तु पञ्चम्याम्' (छा.उ. ५-३-९) इति तस्यैव **परिहार**वाक्याच्च भूतसम्परिष्वङ्गो ज्ञायत इत्यर्थः। 'भूतानां विनिवृत्तिस्तु' (ब्र.सू.भा.उ. भारतवचनम्, पृ.३) इति वचनं तु भूतभागविनिवृत्त्यभिप्रायमिति न तद्विरोध इत्याशयः ॥ १ ॥

**॥ इति तदन्तराधिकरणम् ॥ १ ॥**

(त.दी.) तदन्तरेत्युक्तिः, भूतगतेः फलोक्त्यर्था। तेन तेषां देहभोगदानेन कृतार्थानां जीवेन सह गतिर्व्यर्थेति न शङ्क्यम्। प्राप्ताविति वाच्ये प्रतिपत्ता-वित्युक्तिः यं देहं प्रतिपद्यते ध्यायत्यन्ते तमिति सूचनाय। 'यं यं वाऽपि स्मरन्' (भ.गी.८.६) इत्यादेरित्येके। सम्परीत्युक्तिरामुक्ति तत्परिष्वङ्गोऽस्त्येवेति द्योत-यितुम्। इति (पृ.सं.४)

## ॥ २ ॥ अथ त्र्यात्मकत्वाधिकरणम् ॥*

### (पूर्वपक्षसिद्धान्तौ)

'आपः पुरुषवचसः'[1] इति श्रुतौ अपामेव जीवेन सह गति-श्रवणादेकस्य शरीरानारम्भकत्वान्मरण एव मोक्षसिद्धेः व्यर्थं वैराग्यादीति पूर्वपक्षे सत्याह -

**ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ (३-१-२)**

(सू.) अपां **त्र्यात्मकत्वात्** त्रिवृत्कृतक्षितिसलिलानलात्मकत्वादेव 'आपः' इति श्रुतावब्ग्रहणेन सर्वेषां प्राप्तिः। नन्वपामिव भूतेजसोरपि

---

*. अधिकरणेऽस्मिन् जीवः समस्तभूतसम्परिष्वक्त एव गच्छतीति निरूप्यते।

१. 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति (छा.उ. ५-३-९, पृ. ४)

त्रिवृत्कृतभूतत्रयकारणकत्वाच्छब्दान्तरमपहायापूशब्दस्यैव ग्रहणे किं कारणमित्यत उक्तम् - **भूयस्त्वादिति**। 'पार्थिवाणां शरीराणामर्धेन पृथिवी स्मृता'[१] इत्यादि भाष्योदाहृतप्रमाणानुसारेण त्रिविधशरीरेषु सम्भूय अपां भागदशकम्, पृथिव्या भागाष्टकम्, तेजसो भागषट्कम् इति अपां बहुत्वात्[२] तद्ग्रहणं युक्तमित्यर्थः। तथा च 'आपः पुरुषवचसः' (छा.उ. ५-३-९) इत्यत्राप्शब्देन उपलक्षणया भूतत्रयस्यापि प्राप्तिरिति हृदयम्॥ २॥

**॥ इति त्र्यात्मकत्वाधिकरणम्॥ २॥**

(त.दी.) क्षित्यादितोऽपि बहुत्वोक्त्यै प्रकर्षप्रत्ययोक्तिः। इति (पृ.सं.५)

## ॥ ३ ॥ अथ प्राणगत्यधिकरणम् ॥*

**(पूर्वपक्षसिद्धान्तौ)**

विशेषप्रमाणाभावान्न भूतानि जीवेन सह गच्छन्तीति स्वाभाविक-मरणमेव मुक्तिरित्यलं वैराग्यादिनेति पूर्वपक्षे सत्याह -

**ॐ प्राणगतेश्च ॐ (३-१-३)**

(सू.) चशब्दो भूताविनाभावसमुच्चयार्थः॥ 'यत्र ह वाव भूतानि तत्र करणानि'[३] इति श्रुत्या भूताविनाभूत**प्राणानाम्** इन्द्रियाणां जीवेन

---

१. 'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता। इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु मात्रतः॥ इति (ब्र.सू.भा.उ. बृहत्संहितावचनम्, पृ. ३६५)

२. अपां भूयस्त्वे प्रमाणं तु- 'क्लेदनं पिण्डनं तृप्तिः प्राणनाप्ययनोन्दनम्। तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः॥' इति (भाग.स्क.३.,इति भा.उ.भाग.वचनम्)

*. अधिकरणेऽस्मिन् जीवेन सह भूतानि गच्छन्तीति प्रतिपाद्यते।

३. 'यत्र ह वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि करणानि न चैतानि कदाचिद् वियुज्यन्ते न च विलीयन्ते।' इति (ब्र.सू.भा.उ. भाल्लवेय-श्रुतिः, पृ. ६,७)

सह **गतेः** । 'प्राणैर्वाव न वियुज्यते'[१] इत्यादौ श्रुतत्वाद्भूतसम्परिष्वक्तो रंहतीति सम्बन्धः । तथा च भूतानि जीवेन सह गतिमन्ति तत्सह-गन्तृ(प्राणा)इन्द्रियाविनाभूतत्वादित्युपपत्तिलक्षणविशेषप्रमाणस्य सत्त्वादिति भावः ।। ३ ।।

**।। इति प्राणगत्यधिकरणम् ।। ३ ।।**

(त.दी.) प्रश्नादौ साक्षाद् भूतगत्युनुक्तेरयं योगः । इति (पृ.सं.६.)

## ।। ४ ।। अथाग्न्याद्यधिकरणम् ।।*

### (पूर्वपक्षसिद्धान्तौ)

'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' (बृ.उ. ५.२.१३) इत्यादिना प्राणानामग्न्यादौ गतिश्रवणाज्जीवेन सह गत्यभावेन तत्सहगन्तृप्राणाविनाभूतत्वहेतुरसिद्ध इति साधकाभावान्न भूतानामपि सहगतिरिति पूर्वपक्षं प्रतिक्षिपन् सिद्धान्तयति -

**ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ( ३-१-४ )**

(सू.) प्राणानां वागादीनां स्वमूलरूपाग्निवातादीन् प्रति **गतिश्रवणान्न** प्राणगतिर्जीवेन सहेति **चेन्न** । प्राणानां **भागेनाग्न्यादौ गत्यङ्गीकारेण** श्रुतेस्तत्परत्वादित्यर्थः ।

ननु तर्हि प्रतिमरणं भागापगमे कालतः सर्वापगमः स्यादिति चेन्न । पुनः शरीरान्तरप्राप्तिसमये अग्न्यादौ प्रविष्टानां प्राणभागानां भूतभागानां च जीवसहगतभागेषु प्रवेशाङ्गीकारात् । तथा चोक्तम्- 'मृतिकाले जहात्येनं प्राणा भूतानि पञ्च च । भागतो भागतस्त्वेनमनुगच्छन्ति

---

१. 'करणैर्वाव न युज्यते' इति (तन्त्रदीपिकोदाहृतः पाठः, पृ. ६)

*. इन्द्रियाणि जीवेन सह भागश गच्छन्तीत्यस्मिन्नधिकरणे निरूप्यते ।

सर्वशः' (ब्र.सू.भा.उ. ब्रह्माण्डवचनम्, पृ. १०) इति। 'पुनःशरीरसम्प्राप्तौ तमेवानुविशन्ति च'[१] इति च ॥ ४ ॥

॥ इत्यग्न्याद्यधिकरणम् ॥ ४ ॥

## ॥ अथ प्रथमाधिकरणम् ॥ ५ ॥

### (आक्षेपनिरसनपुरस्सरं भूतानां जीवेन सह गतिसमर्थनम्)

अत्र पुनर्भूतानां सहगतिः[२] समर्थ्यते।

**ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ॥ ( ३-१-५ )**

(सू.) 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छा.उ. ५.४.२) इति **प्रथमे** उपक्रमे तथा **प्रथमे**[३] द्युव्याख्यप्रथमाग्नौ श्रद्धासहितस्यैव जीवस्य होमश्रवणात्। तथा 'भूतानि जुह्वति' इति भूतसहितस्यैव होमा**श्रवणा**च्च न भूतानां सहगतिरिति **चेत् न** भूतानामसहगतिर्न। **हि** यस्मात् **ता एव** प्रस्तुता आप एव जहल्लक्षणया श्रद्धापदेनोच्यन्ते। कुतः ? **उपपत्तेः** 'आपः पुरुषवचसो भवन्ति' (छा.उ. ५.३.९) इत्युपसंहारस्योपपत्ते-रित्यर्थः। अन्यथोपसंहारविरोधेनोपक्रमाप्रामाण्यप्रसङ्गादिति भावः ॥ ५ ॥

॥ इति प्रथमाधिकरणम् ॥ ५ ॥

---

१. 'पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु। अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् ॥ पुनःशरीरसम्प्राप्तौ तमेवानुविशन्ति च'

इति (ब्र.सू.भा.ब्राह्मवचनम्, पृ.९)

२. जीवेन सहगतिरित्यर्थः।

३. अनेन सूत्रगतस्य 'प्रथमे' इत्यस्याऽऽवृत्तिः कर्तव्येति ज्ञायते।

## ॥ ६ ॥ अथाश्रुतत्वाधिकरणम् ॥

### (भूतानां सहगतौ विशेषप्रमाणाभावशङ्कानिरासः)

भूतानां सहगतौ विशेषप्रमाणाभावमाशङ्क्य परिह्रियते ।

**ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेःॐ** ( ३-१-६ )

**(सू.)** प्राणानामग्न्यादिगतेरिव भूतानां जीवेन सह गतेः साक्षाद् **अश्रुतत्वात्** श्रुतत्वाभावान्न भूतगतिर्युक्तेति **चेत्, न** । प्रत्यक्षाश्रवणादसहगतिर्न । **इष्टादिकारिणां** यज्ञादिकृतां यजमानानां मरणे भूतानां सहगतेः । 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति'[१] इति विशेषश्रुतौ प्रत्यक्षतः **प्रतीतेः** स्पष्टमभिहितत्वादित्यर्थः ॥ ६ ॥

॥ इत्यश्रुतत्वाधिकरणम् ॥ ६ ॥

**(त.दी.)** अपां प्राणानां च गतिश्रवणेनार्थाद् भूतानां गतिसिद्धावपीष्टादिकारिणामिति विशिष्य श्रुत्युक्तिः कैमुत्यार्था । इति (पृ.सं.१० )

## ॥ ७ ॥ अथ भाक्ताधिकरणम् ॥*

### (पूर्वपक्षसिद्धान्तौ)

'अपाम सोमममृता अभूम' (ऋ. ८.४८.३) इति श्रुतेर्मोक्षस्य सुशकेन कर्मणा साध्यत्वान्न ज्ञानसाधनवैराग्यमापाद्यमिति पूर्वपक्षे सत्याह-

**ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ** ( ३-१- ७ )

**(सू.)** यदा काम्यकर्मपरा 'अपाम' (ऋ. ८.४८.३) इति (श्रुतिः) तदा

---

१. 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरति' इति (ब्र.सू.भा.उ.कौण्डिन्यश्रुतिः, पृ.१२,१३)

*. 'कर्मणा जायमानः मोक्षः गौणः' इति अस्मिन्नधिकरणे प्रतिपाद्यते ।

**भाक्तं** बहुकालजीवनरूपममृतत्वमाह । कुतः ? काम्यकर्मिणाम् **अनात्मवित्त्वात्** ब्रह्मज्ञानशून्यत्वात् **तथा** आत्मविदामेव मुख्यामृतत्वमन्येषां तदभाव इति 'तमेवं विद्वान्' (तै.आ. ३.१२.७) 'अमृतो वाव सोमपो भवति'[१] इत्यादिका च श्रुतिः **दर्शयति ही**त्यर्थः । **वा**शब्दाद् यदा ज्ञानात् पूर्वभाव्यकाम्यकर्मपरा तदा सत्त्वशुद्धिवैराग्यादिद्वारा मुख्यामृतसाधनत्वमेवाऽऽह । यदा तु ज्ञानोत्तराकाम्यकर्मपरा तदा ज्ञानेन सिध्यति मोक्षेऽतिशयांधायकत्वमेवाऽऽह । 'कर्मणा ज्ञानमातनोति'[२] इति तथा 'आत्मानमेव लोकमुपासीत' (बृ.उ.३.४.१५) इति श्रुतेरिति पक्षद्वयं सूचयति ॥ ७ ॥

॥ इति भाक्ताधिकरणम् ॥ ७ ॥

## ॥ ८ ॥ अथ कृतात्ययाधिकरणम् ॥*

### (पूर्वपक्षसिद्धान्तौ)

इह भोगसमये कर्मानुष्ठाननियमेऽपि स्वर्गादौ तदभावः तत्र भोगेनैव कर्मक्षयसम्भवेन तन्मूलसंसारोच्छेदः स्वयमेव सिद्ध्यतीति न वैराग्यादिना कृत्यमित्याक्षेपे सत्याह -

### कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां ॐ (३-१- ८)

(सू.) **कृतस्य** कर्मणः **अत्यये** स्वर्गादौ भोगेन क्षये **अनुशयवान्** '[३]अनुशयस्यापि सहभावात्' (न्या.वि., पृ. १२४) इति न्यायविवरणोक्ते-

१. 'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः' इति (ब्र.सू. भा.उ.श्रुतिः, पृ.१८)

२. 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणि यत एनममृतत्वं नयन्ति'इति (ब्र.सू.भा.उ. श्रुतिः, पृ. १८)

*. 'अनुभवेन कर्म निश्शेषं न नश्यति' इत्यत्र प्रतिपाद्यते ।

३. 'अनुशयस्य सहभावात्' इत्यपि क्वचित् पाठः ।

रनुशयशब्दः कर्मवाची। तथा च भोगशिष्टकर्मवानेवानुयाति। कुतः?

**दृष्टस्मृतिभ्याम्**

'ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते।'[१]

'भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः।
कर्म कृत्वा पुनर्गच्छेत् पुनरायाति नित्यशः॥
आचतुर्दशमाद् वर्षात् कर्माणि नियमेन तु।
दशावराणां देहानां कारणानि करोत्ययम्।
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति॥'

(ब्र.सू.भा.उ. स्मृतिः, पृ.२०)

इति श्रुतिस्मृतिभ्यामित्यर्थः॥

**॥ इति कृतात्ययाधिकरणम्॥ ८॥**

**(त.दी.)** भूम्यामल्पसम्पादने कर्मसमाप्तिरिति शङ्कानिरासाय स्मृत्युक्तिः। इति **(पृ.सं.१२)**

## ॥ ९॥ अथ यथेताधिकरणम्॥*

### (पूर्वपक्षसिद्धान्तौ)

'यथेतमागच्छति'[२] इति श्रुतेर्गमनमार्गस्य स्मरणविषयत्वेन तत्परित्यागेन मार्गान्तरगमने कारणाभावाद् गमनप्रकारेणैवाऽगमनमित्यतिक्लेशाभावान्न स्वर्गे वैराग्यमापाद्यमिति पूर्वपक्षे सत्याह -

---

१. 'ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छति' इति (ब्र.सू.भा.उ.श्रुतिः, पृ.२०)

*. स्वर्गादिकं प्रति येन पथा गच्छति तेनैव पथा जीव आगच्छतीत्यत्र निरूप्यते।

२. 'यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते स परिवर्तते।' इति (ब्र.सू.भा.उ.स्मृतिः, पृ.२१)

### ॐ यथेतमनेवं च ॐ ( ३-१- ९)

(सू.) **अनेवं** गमनप्रकारादन्यथा आगमनम् । न च 'यथेतं'[१] इति श्रुतिविरोधः । क्वचिद् गमनप्रकारेणाऽगमनं च आकाशपर्यन्तं **यथेतं** यथा येन प्रकारेण **इतं** स्वर्गादिकं प्रति गतं तथा आयाति । ततोऽर्वागनेवम् अन्यमार्गेण चाऽयातीति यावत् । 'यथेतमाकाशमाकाशाद् वायुम्'[२] इति श्रुतिमनुकुर्वता यथेतमित्यंशेन सूचितात् 'धूमादभ्रमभ्रादाकाश-माकाशाच्चन्द्रलोकं यथेतम्'[३] इति विशेषश्रुतिरूपहेतोरित्यर्थः । आगमने जीवस्यास्वतन्त्रत्वेन तत्स्मरणस्याप्रयोजकत्वादिति भावः ॥ ९ ॥

॥ इति यथेताधिकरणम् ॥ ९ ॥

## ॥ १० ॥ अथ चरणाधिकरणम् ॥

### (एतदधिकरणप्रतिपाद्यविषयः)

[४]पुनरावृत्तेश्चरणाफलकत्वशङ्का परिह्रियतेऽस्मिन्नये ।

### ॥ ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ॥१०॥

(सू.) 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते'[५] इत्यादिश्रुतौ

---

१. 'यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते स परिवर्तते ।' इति (ब्र.सू.भा.उ.स्मृतिः, पृ.२१)

२. (ब्र.सू.भा.उ.काषायणश्रुतिः, पृ. २२)

३. 'धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति'इति (ब्र.सू.भा.उ. काषायणश्रुतिः, पृ. २२)

४. पुनरावृत्तेः कर्मफलत्वं समर्थ्यतेऽत्रेति भावः ।

५. 'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयाम्' इति (छा.उ. ५.१०.७)

**चरणात्** यज्ञादिकर्मभिन्नात् 'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः'[१] इत्युक्तलक्षणाच्च आचाराद् गतागतं फलमुच्यते । अतो गतागतस्य कर्मफलत्वाभाव **इति चेत्** । **न** । तस्य यज्ञादेरुपलक्षणमर्थः प्रयोजनं यस्याः सा **तदुपलक्षणार्था** । अजहल्लक्षणया यज्ञाद्युपादानार्था चरणश्रुतिरिति **कार्ष्णाजिनिर्मन्यत** इत्यर्थः ।

### (पूर्वोक्ताक्षेपेण समाधानम्)

उक्तमाक्षिप्य समाधत्ते-

**ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ** (३-१- ११)

**(सू.)** श्रुतेर्यज्ञाद्युपलक्षणार्थरमणीयादिपदेनैव तदुपलक्षणसम्भवेन **चरणशब्दवैयर्थ्यं स्यादिति चेन्न** । यज्ञादिकर्तृत्वे समाने केषाञ्चिद् रमणीयत्वमितरेषां कपूयत्वं च कथमित्याशङ्कानिवृत्त्यर्थम् । **तस्य** रमणीयत्वस्य कपूयत्वस्य च । **तदपेक्षत्वात्** साध्वसाधुचरणापेक्षत्वात् चरणशब्दस्य सार्थक्यमित्यर्थः[२] ।

### (प्रकारान्तरेण चरणश्रुतेर्व्याख्यानम्)

मतान्तरेण स्वमतेन च श्रौतचरणशब्दस्य कर्मणि मुख्यवृत्तिं प्रतिपादयति ।

**ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ** ( ३-१- १२ )

**(सू.)** 'धर्मं कुरुत' इत्यर्थे 'धर्मं चरत' इति प्रयोगात् **सुकृतदुष्कृते एव** साध्वसाधुतया कृतकर्मणी एव रमणीयकपूयचरणपदवाच्ये **इति**

---

१. 'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः । अशुद्धिदस्त्वनाचारः चरणं तूभयं मतम् ॥' इति (ब्र.सू. भा.उ.स्मृतिः, पृ.२४)

२. तथा च सूत्रस्थतच्छब्दस्याऽवृत्तिः कर्तव्या इत्युक्तं भवति ।

वादरिर्मन्यते । तुशब्दात् मत्सिद्धान्तोऽप्ययमेवेत्यर्थः । 'तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे' (ब्र.सू.भा.उ.नाममहोदधिवचनम्, पृ. २७) इति वचनात् ॥ १० ॥

॥ इति चरणाधिकरणम् ॥ १० ॥

## ॥ ११ ॥ अथानिष्टाधिकरणम् ॥

### (अनिष्टादिकारिणां गतागतादिदुःखसमर्थनम्)

अनिष्टादिकारिणां गतागतादिदुःखं समर्थ्यतेऽस्मिन्नये ।

### (पूर्वपक्षसिद्धान्तौ)

विधिनिषेधभीतियुक्तत्वाद् इष्टादिपुण्यकृतामेव गमनागमनादिदुःखं तदितरेषां तद्रहितो मोक्ष एवेति पुण्यादावेव वैराग्यमापाद्यं नान्यत्रेति पूर्वपक्षे सत्याह -

**ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ (३-१- १३)**

(सू.) **अनिष्टादिकारिणाम्** इष्टाद्यकारिणां तद्विरुद्धपापकारिणामपि जनानां गतागतादिदुःखं 'तद्य इह शुभाकृतो ये चाशुभकृतस्तेऽशुभमनु-भूयाऽवर्तन्ते पुनः कर्म कुर्वन्ति'[१] इत्यादिवाक्ये श्रुतमित्यर्थः । चशब्दाद् दुःखान्तरं समुच्चिनोति ।

(त.दी.) नञ् तदभावे तद्विरुद्धे चास्ति । इति (पृ.सं.१६ )

तदेव दुःखं सप्रमाणकमाह -

**ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ (३-१-१४)**

७६१. तद्य इह शुभाकृतो ये चाशुभकृतस्तेऽशुभमनुभूयाऽवर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्ति' इति (ब्र.सू.भा.उ.भाल्लवेयश्रुतिः, पृ. २८)

(सू.) **संयमने** इति सप्तमी द्वितीयार्थे। **संयमनं** सम्यक् यमनं नियामनं, शासनमिति यावत् । **अनुभूय तु** अनुभूयैव नियमेन प्राप्य **इतरेषां** केषाञ्चिद् भगवद्द्वेषाद्यन्यानिष्टादिकारिणां भगवद्द्वेषाद्यनिष्टकारिणां च **आरोहावरोहौ** आरोहः नरकादुत्थानम् अवरोहः ततोऽपि नीचस्थले नित्यनिरये पातः तौ क्रमेण भवतः । कुतः ? **तद्गतिदर्शनात्** तेषाम् अनिष्टादिकारिणां तादृशगतेः 'सर्वे वा एते अशुभकृतः'[१] इत्यादिश्रुतिषु सिद्धत्वादित्यर्थः ।

(त.दी.) संयमनमिति वाच्ये सप्तम्युक्तिः यमशासनं केत्याकाङ्क्षायां सम्यग् यमनं पापोपरमो यत्रेति व्युत्पत्त्या संयमने नरके इति सूचयितुम्, उदाहृतसूचनार्थं च। उक्तं च तत्त्वप्रदीपे - संयमने नरके संयमनं दुःखमनुभूयेत्यादि। तुशब्दः संयमनमप्यन्येषामारोहादिवद् वैकल्पिकं नेति द्योतयितुम् । अनिष्टादि-कारिणामित्यनुवृत्तावपीतरेषामित्युक्तिः तन्मध्ये केषाञ्चिदारोहोऽन्येषां हरिद्वेषिणामवरोह इति विकल्पसूचनार्था। इति (पृ.सं.१८)

## (स्मृत्या पूर्वोक्तस्य समर्थनम्)

स्मृतिभिरप्येतमर्थं समर्थयति -

**ॐ स्मरन्ति च ॐ** (३-१-१५)

(सू.) 'गच्छन्ति पापिनः सर्वे निरयं नात्र संशयः ।
तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् ।

---

१.'सर्वे वा एते अशुभकृतः संयमने प्रपतन्ति तत्र ये परद्विषो गुरुद्विषः श्रुति-द्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवेत उत्तिष्ठन्तेऽपि कर्हिचिद् वज्रं वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति ।' इति (ब्र.सू.भा.उ.कौण्ठरव्यश्रुतिः, पृ.२९,३०)

महातमसि मग्नानां न तेषां व्युत्थितिः क्वचित्।
इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च ॥'
(ब्र.सू.भा.उ.स्मृतिः, पृ.३१)

इत्यादिना **स्मरन्ति** उक्तार्थस्मारका इत्यर्थः । अबिभ्यताऽप्युपभुक्त-विषस्य मृतिहेतुत्वदर्शनादुक्तयुक्तिरयुक्तेति भावः ॥ ११ ॥

(त.दी.) प्रागुक्तश्रुतिसमुच्चये चः। स्मृतिभूयस्त्वाय बहुवचनम्। इति (पृ.१९)

॥ इत्यनिष्टाधिकरणम्॥ ११ ॥

## ॥ १२ ॥ अथ अपिसप्ताधिकरणम् ॥

### (नरकाणां नित्यानित्यत्वविभागकथनम्)

अत्र नरकाणां नित्यानित्यत्वविभागः कथ्यते ।

**ॐ अपि सप्त ॐ (३-१- १६)**

(सू.) **अपिशब्दात्** स्मरन्तीत्यस्यानुकर्षः ।

'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ।
तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ ॥'[१]

इत्यादि स्मृतिकर्तारः पापिनां संयमनं **सप्तापि** नरकान् स्मरन्ति न त्वेकविधमित्यर्थः ॥ १२ ॥

॥ इति अपिसप्ताधिकरणम्॥ १२ ॥

---

१. 'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा। कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु। तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ॥ इति सप्त प्रधानानि' बलीयस्तूत्तरोत्तरम्। एतानि क्रमशो गत्वैवाऽरोहोऽथावरोहणम् ॥' इति (ब्र.सू.भा.उ. भारतवचनम्, पृ. ३२,३३)

(त.दी.) अत्र हरिद्वेषिणः प्रागुक्तनित्यनरकः समर्थ्यते । यद्यपि बहुकोट्यो नरकाः, तथाऽपि सप्त प्रधानानीत्यपिशब्द इति तत्त्वप्रदीपोक्तिः । इति (पृ.२०)

## ॥ १३ ॥ अथ तत्राप्यधिकरणम् ॥

### (नरकस्य सदुःखत्वसमर्थनम्)

अत्र नरकस्य सदुःखत्वं समर्थ्यते ।

### (पूर्वपक्षसिद्धान्तौ)

नरके ईशोऽस्ति न वा । आद्ये ईश्वरस्यापि दुःखप्रसङ्गान्न नरकं सदुःखम् । द्वितीये 'सर्वं सृजति'[१] इत्यादिश्रुत्या ईश्वरस्य कार्यमात्रं प्रति कारणत्वेन तत्रेशाभावे सुतरां दुःखायोगात् । तथा चोभयथाऽपि दुःखासम्भवान्न तत्र वैराग्यमिति पूर्वपक्षे सत्याह -

**ॐ तत्रापि च तद्व्यापारादविरोधः ॐ (३-१-१७)**

(सू.) **तत्रापि** नरकेऽपि **च**शब्दाद् दुःखानुभवेन विनेति समुच्चीयते । **तस्य** ईशस्य प्रेरणारूपव्यापाराभ्युपगमाद् **अविरोधः** सर्वनियन्तृत्व-श्रुतिविरोधः, तथा नरकस्य सदुःखत्वे तन्नियन्तुरीशस्यापि तत् स्यादिति युक्तिविरोधोऽपि नेत्यर्थः ॥ १३ ॥

॥ इति तत्राप्यधिकरणम् ॥ १३ ॥

(त.दी.) सम्भोगप्राप्तिरित्यत्र अभोगोक्तावपीह चशब्देन तदुक्तिः भोगो न दर्शनमात्रं किन्तु तत्कृतनीचोच्चत्वम् । तत्तु नेशेऽस्तीति द्योतयितुम् । इति (पृ.सं.२१)

---

१. 'सर्वं (वि)सृजति सर्वं विलापयति सर्वं रमयति सर्वं न रमयति सर्वं प्रवर्तयत्यन्त-रस्मिन्निविष्टः' इति (ब्र.सू. भा.उ. कौशारवश्रुतिः, पृ.३३)

## ॥ १४ ॥ अथ विद्याधिकरणम् ॥

### (जीवानां गतिस्वातन्त्र्यनिरासः)

अत्र जीवानां गतिस्वातन्त्र्यं निरस्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'अथैतयोः पथोर्नैकतरेण'[१] इति जीवानां 'गच्छन्ति' (ब्र.सू.भा.उ. स्मृतिः) इत्यादिना देवयानादिमार्गगत्यादौ स्वातन्त्र्यप्रतीतेः साधनवत् फलेऽपि ईश्वरदत्तस्वातन्त्र्यात् किं वैराग्यादि-साधनेनेति प्राप्ते सत्याह-

**ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ (३-१- १८)** इति ।

(सू.) येन वाक्येन देवयानपितृयानयोः प्रकृतिस्तेनैव 'तद्य इत्थं विदुर्ये चारण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' (छा.उ. ५.१०.१) इति वाक्येन [२]देवयानादिमार्गद्वयसाधनयो**र्विद्याकर्मणोस्तु** 'अथ य इमे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' (छा.उ. ५.१०.३) (इति) विद्याकर्मपथोरपि **प्रकृतत्वा**दित्यर्थः । तथा चैतयोरित्येतच्छब्देन तत्परामर्शोपपत्तेरिति भावः । साधने स्वातन्त्र्यानङ्गीकारे विध्यादि-शासनवैयर्थ्यं स्यादिति तत्र ईश्वरः स्वातन्त्र्यं ददातीति 'कर्ता शास्त्रार्थ-वत्त्वात्' (ब्र.सू.२.३.३३) इत्यत्राभिहितम् ॥ न चैवं फले स्वातन्त्र्या-नङ्गीकारे बाधकमस्तीति द्रष्टव्यम् ॥ १४ ॥

### ॥ इति विद्याधिकरणम् ॥ १४ ॥

(त.दी.) विद्याकर्मपदप्रयोगात् 'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ ।

---

१. 'अथैतयोः पथोर्नकतरेण च तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्' इति (छा.उ.५.१०.८, पृ. ३६)

२. 'देवयानपितृयानमार्गद्वय....' इति 'ख'पाठः ।

तद्वर्जितस्त्रिधा याति तिर्यग् वा नरकं तमः ॥' इति स्मृतिः सूचिता । इति (पृ.सं.२३)

## ॥ १९ ॥ अथ न तृतीयाधिकरणम् ॥

### (अन्धन्तमसि दुःखमात्रसमर्थनम्)

अत्रान्धे तमसि दुःखमात्रं समर्थ्यते ।

### (पूर्वपक्षसिद्धान्तौ)

'यत्र दुःखं सुखं तत्र'[१] इति वचनादन्धन्तमस्यपि सुखसद्भावान्न तत्रातिवैराग्यमपेक्षितमिति पूर्वपक्षे सत्याह-

**ॐ न तृतीये तथोपलब्धेः ॐ ( ३-१- १९ )**

(सू.) 'तिर्यग्यातना तमः'[२] इति श्रुतिसिद्धावाग्गतिषु **तृतीये** तमसि सुखं **नास्ति** । कुतः ? **तथोपलब्धेः** 'अथाविद्वान्'[३] इति श्रुत्यादौ तथोपलब्धेरित्यर्थः ।

(त.दी.) उपलब्धेरित्येव वाच्ये तथेत्युक्तिः यथाशब्दमुपेयं न तु दुःखस्य सुखव्याप्यत्वबुद्धिरादर्तव्येति वा विवक्षितार्थबोधकत्वं श्रुतेरस्तीति वा सूचयितुम्। इति (पृ.सं.२४)

---

१. 'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते । अपि नीचगतौ किञ्चित् किमु मानुषदेहिनः ॥' इति (ब्र.सू.भा. वचनम्, पृ.३८)

२. 'त्रिधा ह वा अवाग्गतिः तिर्यग्यातना तमः' इति (अभिनवचन्द्रिकोदाहृतश्रुतिः, पृ. २६)

३. 'अथाविद्वानकर्माऽऽवाग्गच्छति । त्रिधा ह वावाग्गतिस्तिर्यग्यातना तम इति । द्वे वाव सुखानुवृत्ते न तमस्सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवति' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. ३९)

स्मृत्यनुमानाभ्यां चैतमर्थं साधयति -

**ॐ स्मर्यतेऽपि च लोके ॐ (३-१- २०)**

(सू.) अन्धे तमसि सुखराहित्यं **स्मर्यतेऽपि** 'तिर्यक्षु नरके चैव सुखलेशो विधीयते। नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन ॥' (ब्र.सू.भा.उ. भविष्यत्पर्ववचनम्, पृ.४०) इति स्मृतावप्युच्यते । **लोके च** लौकिक-दृष्टान्तयुक्तानुमानसिद्धं चेत्यर्थः । 'अतिप्रिये यथा राजा'[१] इत्यादि-स्मृतिप्रसिद्धत्वेनातिप्राबल्यं चानुमानस्याऽह **च**शब्देन । तथा च-विमताः न सुखवन्तः ईश्वरेण तथाऽनिष्टत्वात् । यो यथा नेश्वरेष्टः नासौ तथा। यथा शृङ्गित्वेनानिष्टो शशो न शृङ्गी। एते सुखित्वेनेश्वरेष्टा न भवन्ति अप्रियत्वात् । यो यस्याप्रियः स सुखित्वे तदिष्टो न । यथा राजविरोधी राज्ञ इति प्रयोगो द्रष्टव्यः ।

**(प्रत्यक्षेणाप्येतमर्थं समर्थयति)**

**ॐ दर्शनाच्चॐ (३-१- २१)**

(सू.) हिरण्यगर्भ**प्रत्यक्षाच्च** तमसि स्थितस्य सुखलेशराहित्यं सिद्ध-मित्यर्थः। यद्यपि प्रत्यक्षोत्त्यनन्तरमेवानुमानं वक्तव्यम्। तथाऽपि पृथक्-सूत्रेण तदुक्तौ तमसि सुखसाधकानुमानबाधकत्वोपयुक्तप्राबल्याय पुनःस्मृतिसिद्धत्ववचने गौरवं स्यादिति स्मृतिवचनप्रसङ्गेन स्मार्तमनु-मानमपि पूर्वमेवोक्तमिति **भावबोधे** ।

अर्थापत्त्याऽप्येतमर्थं समर्थयति -

**ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ ( ३-१- २२ )**

---

७७८. 'अतिप्रिये यथा राजा न दुःखं सहते क्वचित् । अत्यप्रिये सुखमपि तथैव परमेश्वरः ॥' इति (ब्र.सू.भा.उ.ब्राह्मवचनम्, पृ.४०)

(सू.) तिर्यगाद्यधोगतौ **तृतीये** तमस्यपि तृतीये अधराख्यतमोविशेष-विषये यः **शब्दः तेन अवरोधः** प्राप्तिः । कस्येत्यत उक्तम्- **संशोकज-स्येति** ।। तृतीयतमोविषयकशब्दव्याख्यानश्रवणानुसारेण सम्यक् शोको दुःखं तस्माज्जातस्य मोहस्य प्राप्तिर्भवतीत्यर्थः ।

(त.दी.) अर्थापत्तेरनुमानत्वेऽपि तद्विशेषत्वात् पृथगुक्तिः । न तृतीये श्रुतिस्मृतियुक्तिदृष्ट्यर्थापत्तिभ्य इति वाच्ये योगविभागो युक्तेः स्मार्तत्वं दृष्टेरस्तित्वस्यापि स्मृत्यायत्तत्वं तृतीयेऽपि तृतीयस्य दुःखमात्रत्वमर्थापत्ति-सिद्धमित्यादिविशेषद्योतनार्थ इत्यूह्यम् । तदुक्तम् 'अपि सप्त' (ब्र.सू. ३.१.१६) इत्यत्र तत्त्वप्रदीपे- सर्वत्र चेत्थमेव सूत्रपदानां कृत्यमुपक्षिपति नतु निर्वक्ति, सूक्ष्मबुद्धिभिः अधिकारिभिर्भाव्यमिति ज्ञापयन्निति । इति (पृ.सं. २७,२८)

तृतीयतमसः स्वरूपश्रवणे श्रोतृणां मोहप्राप्तिरित्येतत्कुत इत्याशङ्कां स्मृत्या परिहरति -

**ॐ [१]स्मरणाच्च ॐ** ( ३-१-२३ )

(सू.) 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् ।
श्रवणेनैव मूर्छादिरधरस्य यतो भवेत् ।।'[२]

इति **स्मृतेश्च** श्रोतृणां मोहप्राप्तिरिति गम्यत इति शेषः ।

**।। इति न तृतीयाधिकरणम् ।। १५ ।।**

---

१. सूत्रमिदं 'ह' पाठे नास्ति ।

२. 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् । श्रवणेनैव मूर्छादिरधरस्य यतो भवेत् । तस्मान्न विस्तरेणैतत् कथ्यते राजसत्तम ।।' इति (ब्र.सू.भा.उ.कौर्मवचनम्, पृ. ४४)

## ।। १६ ।। अथ तत्स्वाभाव्याधिकरणम् ।।*

### (पूर्वपक्षसिद्धान्तौ)

अत्र 'धूमो भवति'[१] इति श्रुत्यर्थतया तद्गतौ गतितत्प्रवेशेन स्थानैक्यमित्यादिवचनात् कर्मिणां धूमादिप्राप्तिस्तदैक्यं वा भवतीति सकृदनुष्ठितयज्ञानामाकल्पसमाप्ति परमसुखसम्भवान्न कर्मणि वैराग्यमिति पूर्वपक्षे सत्याह -

**ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ (३-१-२४)**

### (सूत्रार्थः)

तद्देवताप्रवेशादिना तद्गतौ गतिरित्यादि**तत्स्वभावत्वप्राप्तिरेव** कर्मिणः, न तु तदैक्यं तत्पदप्राप्तिर्वेत्यर्थः। कुतः? **उपपत्तेः** सादृश्यादिनैकीभावव्यवहारस्य 'सिंहो देवदत्तः' इत्यादौ दर्शनेन अस्यैवार्थस्योपपत्तेर्युक्तत्वादित्यर्थः । अन्यस्यान्यभावासम्भवेन तादात्म्यस्य, तत्पदस्य नियताधिकारिभिः ज्ञानेनैव[२] प्राप्यत्वेन तत्पद-प्राप्तेश्चानुपपत्तेरिति भावः ।। १६ ।।

।। इति तत्स्वाभाव्याधिकरणम् ।। १६ ।।

## ।। १७ ।। अथ नातिचिरेणाधिकरणम् ।।

### (स्वर्गादवरूढस्य कर्मिणोऽचिरेण गर्भवासादिप्राप्तिनिरूपणम्)

अत्र कर्मिणः स्वर्गादवाग्गतस्याचिरेण गर्भवासादिप्राप्तिः समर्थ्यते ।

---

*. कर्मिणां धूमादिभावः निरस्यतेऽस्मिन्नधिकरणे।

१. 'धूमो भूत्वाऽभ्रं भवति' इति (छा.उ. ५.१०.५) पृ.सं. ४४

२. 'ज्ञानिनैव' इति मातृकापाठः प्रामादिक इति भाति।

(पूर्वपक्षसिद्धान्तौ)

कर्मिणो बहुस्थानगमनश्रुतेस्तत्र तत्स्वाभाव्ये महासुखे सम्भवति तद्विहायाऽगमने प्रयोजनाभावाद् बहुकालेनैव देहान्तरप्राप्तिरिति कर्मानुष्ठानेनाऽकल्पं सुखसद्भावान्न कर्मणि वैराग्यं सम्पाद्यमिति पूर्वपक्षे सत्याह -

**ॐ नातिचिरेण विशेषात् ॐ** (३-१-२५)

(सू.) **अतिचिरेणाऽगमनं न** । किन्तु चिरेण संवत्सरादर्वागिति यावत् । आगमनं भवति । **नातिचिरेणे**त्येकपदं वा । नसमासः । शीघ्रमित्यर्थः । कुतः ? **विशेषात्** 'स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात् पूर्वमेव तु । मातुः शरीरमाप्नोति'[१] इति विशेषवाक्यादित्यर्थः । 'तद्य इह रमणीयचरणाः'[२] इति विशेषश्रुतेरिति वा ।

**॥ इति नातिचिरेणाधिकरणम् ॥ १७ ॥**

**(त.दी.)**अचिरेणेति वाच्ये नातीत्याद्युक्तिः, 'यथेतमाकाशमाकाशाद् वायुम्'(ब्र.सू.भा.उ. काशायणश्रुतिः) इत्यादिश्रुतौ बहुस्थानगमनोक्त्या चिरेणेति न शङ्क्यम् । अतिचिरेणाऽगमनस्यैव तत्र निषेधादिति द्योतयितुम् । अत एवातीत्युक्तिः । इति (पृ.सं.३१)

**॥ १८ ॥ अथान्याधिकरणम् ॥**

**(कर्मिणां व्रीह्यादिदेहाभिमानित्वनिरासः)**

अत्र कर्मिणो व्रीह्यादिदेहाभिमानित्वं निरस्यते ।

---

१. 'स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात् पूर्वमेव तु । मातुः शरीरमाप्नोति पर्यटन् यत्र तत्र च' इति (ब्र.सू.भा.उ. नारदीयवचनम्, पृ. ४८)

२. 'तद्य इह रमणीयचरणाः अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते'इति (छा.उ.५.१०.७, पृ.४८)

## (पूर्वपक्षसिद्धान्तौ)

'त इह व्रीहियवाः'[१] इत्यादिश्रुतौ कर्मिणां व्रीह्यादिभावश्रवणात् तद्भावे च छेदनादिना दुःखावश्यम्भावात्। तथा च सुखसाधनतया वेदोपदिष्टकर्मणो दुःखजनकत्वेन मोक्षहेतुतयोपदिष्ट-वैराग्यादावप्याश्वासाभावाद् अननुष्ठेयत्वं तस्येति पूर्वपक्षे, आह-

**ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ (३-१-२६)**

(सू.) 'त इह व्रीहियवाः' (छा.उ. ५.१०.६) इति श्रुतौ कर्मिणो व्रीह्यादिभावो नाम **पूर्ववत्** 'धूमो भूत्वा'[२] इत्यादौ तत्प्रवेशेन ऐक्योक्तिवत्। **अन्याधिष्ठिते** कर्मिणोऽन्येन तदभिमानिना जीवान्तरेणाधिष्ठिते व्रीह्यादिशरीरे प्रवेश एवोच्यते। नतु तच्छरीराभिमानित्वं येन तच्छेदादिदुःखं कर्मिणः स्यात्। कुतः ? 'सोऽवाग्गतः स्थावरान् प्रविश्य भोगेनैव व्रजन् स्थूलं शरीरमेति'[३] इति श्रुतौ तथा **अभिलापादित्यर्थः**। तथा च व्रीह्यादिभावेन दुःखाभावेऽपि तत्प्रवेशेन दुःखिना सहावस्थानाद् दुःखमित्यपि न मन्तव्यम्। पापफलानुभवस्यानवसरप्राप्तत्वेन दुःखकारणाभावादिति भावः।

(त.दी.) व्रीह्यादिदेह इति वाच्ये अन्येत्याद्युक्तिः स्वर्गादवाग्गतस्य व्रीह्यादि-

---

१. 'त इह व्रीहियवाः ओषधिवनस्पतयस्तिलमाषा इति जायन्ते।' इति (छा.उ. ५.१०.६, पृ. ४९)

२. 'धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति (ब्र.सू.भा.उ.काषायणश्रुतिः, पृ. २२)

३. 'सोऽवाग्गतः स्थावरान् प्रविश्य भोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद् भोगाननुभुङ्क्ते' इति (ब्र.सू.भा.उ. कौषारवश्रुतिः, पृ. ५०)

देहानभिमाने तेषां वृद्धिर्न स्यादिति न शङ्क्यम् । अन्येनाभिमानिजीवेन अधिष्ठितत्वादिति वक्तुम्। इति (पृ.सं.३२)

**(पूर्वोक्ताक्षेपेण समाधानम्)**

उक्तमाक्षिप्य समाधत्ते -

**ॐ अशुद्धमिति चेन्न शब्दात् ॐ** (३-१-२७)

**(सूत्रार्थः)**

यज्ञादिकं कर्म हिंसारूपत्वेन **अशुद्धं** पापकारणं दुःखकारणं वाऽस्तु ततः कर्मिणो दुःखं स्यादिति **चेन्न** पापकारणं न । कुतः? **शब्दात्** 'वायव्यं श्वेतमालभेत' (तै.सं. २.१.१) इत्यादिश्रुतिविहितत्वादित्यर्थः। श्रुतिविहितमपि पापहेतुः किं न स्यादित्यतोऽपि शब्दादित्युक्तम् । 'हिंसा त्ववैदिकी या तु तयाऽनर्थो ध्रुवं भवेत् । वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन ॥'(ब्र.सू.भा.उ. वाराहवचनम्, पृ. ५१,५२) इति शब्दादित्यर्थः ॥ १८ ॥

**॥ इत्यन्याधिकरणम् ॥ १८ ॥**

**॥ १९ ॥ अथ रेतोऽधिकरणम् ॥**

**(कर्मिणां पितृशरीरप्रवेशसमर्थनम्)**

अत्र पितृशरीरप्रवेशः कर्मिणां समर्थ्यते ।

**(पूर्वपक्षसिद्धान्तौ)**

'मातुरेवोदरं व्रजेत्'[१] इति वचनान्न जीवस्य पितृशरीरप्रवेशः। ततश्चात्यायासाभावान्न वैराग्यमपेक्षितमिति प्राप्ते सत्याह -

---

१. 'स्वर्गादवाग्गतश्चापि मातुरेवोदरं व्रजेत्' इति (ब्र.सू.भा.उ.वचनम्, पृ.५१,५२)

ॐ रेतःसिग्योगोऽथ ॐ (३-१-२८)

(सू.) **रेतःसिचः** पितुः **योगः** सम्बन्धो भवति । **अथ** मातृप्रवेशो भवतीत्यर्थः । 'ततो रेतःसिचमेवानुविशति'[१] इति श्रुतेरिति भावः। अत्र पितृयोग इति वक्तव्ये रेतःसिग्योग इत्युक्तिः शरीरपरिणामाय रेतसोऽपेक्षितत्वेन रेतःसेचकस्योपयोग इति युक्तिसूचनायेति ज्ञेयम् । 'मातुरेवोदरं व्रजेत्' (ब्र.सू.भा.उ.वचनम्, पृ.५१,५२) इत्येवकारस्तु साधारणजीवपरतादशायां व्रजेदेवेत्यन्वयेनायोगव्यावर्तकः वक्ष्यमाण-सिद्धशरीरप्रवेशिजीवपरतादशायां तु अन्ययोगव्यवच्छेदक इति द्रष्टव्यम् ॥ १९ ॥

॥ इति रेतोऽधिकरणम् ॥ १९ ॥

(त.दी.) रेतःसिगित्युक्तिः 'ततो रेतस्सिचमेवानुप्रविशत्यथ मातरं' (ब्र.सू.भा.उ.कौण्ठरव्यश्रुतिः, पृ.सं.५४) इति श्रुतिसूचनार्था च । इति (पृ.सं.३४)

## ॥ २० ॥ अथ योन्यधिकरणम् ॥

**(साधारणजीवानां पितृद्वारा मातृयोनिप्रवेशेन प्रागसिद्धदेहप्राप्तिरिति निरूपणम्)**

साधारणजीवानां मातृयोनिं प्रविश्य प्रागसिद्धशरीरप्राप्तिः समर्थ्यते ।

ॐ योनेः शरीरम् ॐ ( ३-१- २९ )

(सू.) कर्मी पितृद्वारा मातृयोनेः प्रवेशानन्तरं प्रागसिद्धं शरीरं कललबुद्बुदादिक्रमेणाऽप्नोतीत्यर्थः । अथवा 'बीजपूरुषयोनीनां

---

१. 'ततो रेतःसिचमेवानु(प्र)विशति अथ मातरमथ प्रसूयते स कर्म कुरुते' इति (ब्र.सू.भा.उ.कौण्ठरव्यश्रुतिः, पृ. ५४)

सङ्गातिनियमोज्झितिम् । अथशब्देन भगवानाह' (अनु.व्या. ३-१७३) इत्यनुव्याख्यानोक्तरीत्या पूर्वसूत्रादथेत्यनुवर्तते । योनेः शरीरमथेत्यन्वयः । मातृ**योनेर**सिद्धं **शरीर**माप्नोति । अथशब्दात् तपोज्ञानादिविशेषकारणकजन्मविशेषरूपं 'स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा । गर्भे वा बहिरेवाथ क्वचित् स्थानान्तरेषु च ॥'[१] इति प्रमाणोक्तं मातृयोनिमप्राप्यैव शरीरप्राप्तिरूपं पक्षान्तरं सूचयति । अतः सामान्यजन्मनि पित्रादिशरीरप्रवेशनियमाद् अपवर्गादितरत्र वैराग्यमावश्यकमिति भावः ॥ २० ॥

**॥ इति योन्यधिकरणम् ॥ २० ॥**

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे तृतीयाध्यायस्य प्रथमः पादः ॥**

---

७९१. 'स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् । पुरुषात् स्त्रियमापन्नस्ततो देहं यथा क्रमम् । देहेन जायते जन्तुरिति सामान्यतो जनिः । विशेषजननं चापि प्रोच्यमानं निबोध मे ॥ स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा । गर्भे वा बहिरेवाथ क्वचित् स्थानान्तरेषु च ॥' इति (ब्र.सू.भा.उ.ब्राह्मवचनम्, पृ. ५६,५७)

## ॥ अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

### ॥ १ ॥ अथ सन्ध्याधिकरणम् ॥

**(भक्त्यैकदेशभगवन्माहात्म्यनिरूपणम्)**

माहात्म्यज्ञानपूर्वकस्नेहस्य भक्तित्वान्माहात्म्यानुक्तौ तज्ज्ञान-स्नेहायोगात् तदर्थं भगवन्माहात्म्यमस्मिन् पादे निरूप्यते ।

**(स्वप्नावस्थाया भगवदधीनत्वसमर्थनम्)**

तत्र प्रथमाधिकरणे स्वप्नावस्थायाः भगवदधीनत्वं समर्थ्यते ।

**ॐ सन्ध्ये सृष्टिराह हि ॐ (३-२-१)**

(सू.) [1]'सृष्ट्वा संस्कारमापाद्य' (न्या.वि. पृ. १२६) इति न्यायविवरणोक्तेः सृष्टिपदं निरोधकस्योपलक्षकम् । जाग्रत्सुप्तिसन्धौ भवतीति **सन्ध्यं** स्वप्नः तस्मिन् स्वप्ने प्रागसतामेव पदार्थानां **सृष्टि**रनन्तरमेव निरोधश्चाङ्गी-क्रियते । (कुतः ?) **हि** यस्मात् 'अथ रथान्'[2] इति श्रुति**राह**ेत्यर्थः (श्रुतिरेवमाह तस्मादित्यर्थः) ।

**(कर्तुरभावात् न स्वाप्नसृष्टिर्युज्यत इति शङ्का तत्समाधानं च)**

न स्वाप्नसृष्टिर्युक्ता । तत्काल एवोत्पत्त्यादिकर्तुरनुपलम्भादित्यत आह-

**ॐ निर्मातारं चैके पुत्रादयश्च ॐ (३-२-२)**

(सू.) जीवानां सुप्तत्वेऽपि परमात्मानं स्वाप्नार्थ**निर्मातारं** 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' (क.उ. ५.८, पृ. ५९) इति **एके**

---

१. 'सृष्ट्वा पुनः संस्कारमात्रतामापाद्य' इति तु सम्प्रति दृश्यमानः पाठः ।

२. 'न तत्र रथा न रथयोगा न पन्थानो भवत्यथ रथान् रथयोगान् पथः सृजते ।' इति (बृ.उ. ६.३.१०, पृ. ५९)

शाखिन आहुः । तस्य च 'तदेव शुक्रं' (क.उ. ५.८, पृ. ५९) इत्यादि-वाक्यशेषेणावगतेश्वरत्वेनान्याशक्यकरणशक्तिर्युक्तेति द्रष्टव्यम् । 'एतस्माद्ध्येव पुत्रो जायते'[१] इति स्पष्टं च स्वाप्नाः **पुत्रादयः** हरेरेव जायन्त **इत्येके** शाखिन आहुरित्यर्थः ।

**(त.दी.)** अत्राऽद्यश्रुतौ ईशस्य स्पष्टं सन्ध्यकर्तृत्वाप्रतीतेः पुत्रादयश्चेति श्रुत्यन्तरोक्तिः। (पृ.सं.३८)

उपादाननिमित्तयोरभावान्न स्वाप्नसृष्टिर्युक्तेत्यत आह -

**ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ** (३-२-३)

**(सू.)** ईशेच्छावाचकं मायापदं वासनोपलक्षकम्। स्वाप्नवस्तु **मायामात्रं तु** । उपादानभूतैः पूर्वानुभूतवस्तुसंस्कारैः स्वेच्छया च निमित्तरूपया निर्मितमेव । न बाह्यकारणकम् । कुतः ? **कार्त्स्न्येनानभिव्यक्त-स्वरूपत्वात्** साकल्येनानभिव्यक्तस्वरूपत्वात् । जाग्रद्वत् स्पष्टत्वा-भावात् । बाह्यार्थक्रियासामर्थ्यरहितत्वात् । तथात्वे सम्यक् पटादिवत् स्पष्टता स्यादित्यर्थः । कल्पितत्वमनादित्वं वा किं न स्यादिति चेन्न। सृष्टिवाक्यादेश्चेति भावः ।

**(स्वाप्नपदार्थानामसत्वशङ्का, तत्परिहारश्च)**

तर्हि स्वाप्नाः पदार्थाः न सन्तः स्युः बाह्यार्थानुपादानकत्वाच्छुक्ति-रजतवदित्यत आह -

**ॐ सूचकश्च हि श्रुतेराचक्षते तद्विदः ॐ** (३-२-४)

**(सू.)** स्वाप्नोऽर्थः शुभाशुभयोः **सूचको** यतोऽतो नासत्य इति

१. 'एतस्माद्ध्येव पुत्रो जायते एतस्माद् भ्रातैतस्माद् भार्या यदैनं पुरुषमेष स्वप्नेनाभिहन्ति' इति (ब्र.सू.भा.उ. गौपवनश्रुतिः, पृ.५९,६०)

हृदयम्। 'यदा कर्मसु काम्येषु'[१] इति 'पुरुषं कृष्णं कृष्णदन्तं पश्यति' (न्या.वि.उ.ऐ. आ.वचनम्) इति च **श्रुतेः** । **हि च** प्रत्यक्षतः फलदर्शनाच्चेत्यर्थः । न केवलं श्रुतिसिद्धमिति **चार्थः** । **तद्विदः** स्वप्नाध्यायविदो (?) व्यासादयः 'यद्वाऽपि (यद्वाव) ब्राह्मणो ब्रूयात्'[२] इत्यादिना **आचक्षते च** व्यक्तं वदन्ति चेत्यर्थः । असत्वसाधकानुमानं तूक्तश्रुत्यादिबाधितमप्रयोजकं चेत्याशयः ।

**(तत्त्वप्रकाशिकाऽनुव्याख्यानयोरविरोधकथनम्)**

''न च मन्तव्यम् 'चन्द्रमा इव आदित्यो दृश्यते' (त.प्र.उ.श्रुतिः) इति भ्रान्तार्थस्यापि सूचकत्वं श्रूयत इति ।'' 'अन्यथाज्ञातस्याधिष्ठानस्यैव सूचकत्वात्' इति तत्त्वप्रकाशिकावाक्यद्वयमस्ति । तत्तु

'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् ।
तदेवार्थक्रियाकारि तत्सदेवार्थकारकम् ॥' (अनु.व्या.)

इत्यधिष्ठानस्यान्यथात्वज्ञानमेव सूचकमित्यनुव्याख्यानेन विरुद्धम् । तथाऽपि 'आदित्यो दृश्यत' (त.प्र.उ.श्रुतिः) इत्यधिष्ठानप्राधान्योक्तेरिदमुक्तम्। वस्तुतस्तु अनुव्यख्यानोक्तमेवेति **भावबोधे** स्पष्टम् ॥ १ ॥

**॥ इति सन्ध्याधिकरणम् ॥ १ ॥**

## ॥ २ ॥ अथ पराभिध्यानाधिकरणम् ॥

**(भगवतः स्वप्नतिरोधायकत्वमहिमानिरूपणम्)**

अत्र स्वप्नतिरोधानस्य भगवदधीनत्वं समर्थ्यते ।

---

१. 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने' इति (छा. ५.२.९, पृ. ६३)

२. 'यद्वाऽपि(यद्वाव) ब्राह्मणो ब्रूयाद् देवता वृषभोऽपि वा । स्वप्नस्थमथ वा राजा तत्तथैव भविष्यति ॥' इति (ब्र.सू.भा.वचनम्, पृ. ६४)

ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ
॥ ३-२-५ ॥

(सू.) **पराभिध्यानात्तु** परमेश्वरेच्छयैव **तिरोहितं** स्वप्नतिरोधानं भवति । नन्वज्ञाननिमित्तत्वात् स्वप्नप्रतीतेस्तत्तिरोधानं ज्ञानेनैव भविष्यतीति किमीशेच्छयेत्यत उक्तम्- **ततो हीति** ॥ **हि** यस्माद् **अस्य** जगतः **बन्धमोक्षौ** अज्ञाननिमित्ततया प्रतीतावपि ततः ईशेच्छात एव भवतः । भगवदधीनावेवेत्यर्थः । अज्ञानज्ञानयोरचेतनत्वेनास्वातन्त्र्यात् तदधीनतया प्रसिद्धावपि बन्धमोक्षौ यथेशाधीनौ तथाऽज्ञानादि-निमित्ततया प्रतीतयोरपि स्वप्नाविर्भावतिरोभावयोरीशाधीनत्वमेवेति भावः । उक्तार्थस्य प्रसिद्धिद्योतको वा **हि**शब्दः ॥ २ ॥

**॥ इति पराभिध्यानाधिकरणम् ॥ २ ॥**

(त.दी.) हिशब्दो बन्धादेरज्ञानाद्यनधीनत्वप्रसिध्यर्थः। हेत्वर्थो वा। (पृ.४२)

## ॥ ३ ॥ अथ देहयोगाधिकरणम् ॥

**(भगवतः जाग्रत्प्रवर्तकत्वमहिमावर्णनम्)**

अत्र जाग्रत्प्रवर्तकत्वं वर्ण्यते ।

ॐ देहयोगाद् वासोऽपि ॐ (३-२- ६)

(सू.) 'पराभिध्यानात्तु' इत्यनुवर्तते । **अपी**त्यनेन 'आह हि' इत्यस्यानुकर्षः सूच्यते । अन्यथा हेत्वनुपन्यासान्न्यूनमिदं सूत्रमापद्येत । न च याज्ञवल्क्यस्य प्रसङ्गे 'त्रयस्त्रिंशदिति[१] होवाच' (बृ.उ. ५.९.१) इत्यादाविव प्रतिज्ञामात्रेणार्थसिद्धिसम्भवात् तदनुपन्यासो न दोषायेति वाच्यम् । न्यायसूत्रत्वाभावप्रसङ्गादिति **सत्यनाथस्वामिनः** । तथा

८०३. 'त्रयस्त्रिंशदिति' ॐ इति होवाच' इति (अभिनवचन्द्रिका, पृ. ४३)

च **देहयोगात्** देहाभिमानतः **वासः** स्थितिरपि। न केवलं देहाभिमान-हीनस्वप्नसुप्ती किन्तु जाग्रदवस्थाऽपि पराभिध्यानादेव भवति। न कालत इति 'स एव जागरिते स्थापयति स स्वप्ने स प्रभुः'[१] इति श्रुतिराह हीत्यर्थः ।

**(जाग्रदित्यनुक्त्वा सूत्रे 'देहयोगाद् वासः' इति कथने हेतूक्तिः)**

यद्यप्यत्र सूत्रे लाघवाज्जाग्रदित्येव वक्तव्यम्। तथाऽपि भवत्ववस्थान्त-राणां भगवदधीनत्वं न जाग्रदवस्थायाः । किन्तु जीवाधीनैव सा। तत्र जीवस्य देहादिकं ममैवेति स्वातन्त्र्यप्रतीतिदर्शनादित्याद्याशङ्का-परिहाराय स्वातन्त्र्याभिमानस्य भ्रमत्वोपपादनाय 'देहयोगाद् वासः' इत्यभिहितम्। अत एव भाष्ये स्वातन्त्र्याभिमानस्य भ्रमत्वोपपदनाय जीवस्यापि भगवदधीनत्वप्रतिपादकस्य 'स एव जागरिते स्थापयति' (ब्र.सू.भा.उ. कौण्ठरव्यश्रुतिः, पृ. ६६) इति विशेषप्रमाणस्योक्तिरिति **भाववोधे** स्पष्टम् ॥ ३ ॥

**॥ ३ ॥ इति देहयोगाधिकरणम् ॥**

(त.दी.) गजाश्वादिदर्शनस्य स्नानादिभोगस्य च स्वप्नजागरणयोः साम्यात् तयोः को भेद इति न शङ्क्यम् । जाग्रति देहाभिमानभावात् , अन्यदा तदभावाद् भेद इति द्योतयितुमित्यन्ये। ( पृ.सं.४४)

## ॥ ४ ॥ अथ तदभावाधिकरणम् ॥

**(भगवतः सुप्तप्राप्यत्वमहिमवर्णनम्)**

अत्र सुप्त्यवस्थायां भगवतो जीवप्राप्यत्वं समर्थ्यते ।

---

१. 'स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाट् स एको बहुधा भवति' इति (ब्र.सू.भा.उ. कौण्ठरव्यश्रुतिः, पृ. ६६)

ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ (३-२-७)

(सू.) **तदभावः** जाग्रत्स्वप्नयोरभावः, सुप्तिरिति यावत्। **नाडीष्वात्मनि** नाडीस्थे आत्मनि परमात्मनि भवति। 'आसु तदा नाडीषु सुप्तो भवति' (छा.उ. ८.६.३) 'सता सोम्य तदा सम्पन्नो भवति' (छा.उ. ६.८.१) इति तच्छ्रुतेः। उभयविधश्रुत्यन्यथानुपपत्तेरित्यर्थः। 'तन्नाडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यते' (तन्त्रदीपिकोदाहृतवचनम्, पृ.४६) इत्यादि-प्रसिद्धिसूचको **हः** इत्याहुः। **तदभावः** इत्युक्त्या सर्वेन्द्रियोपरतिरूपसुप्ति-स्वरूपं कथयता स्वरूपेन्द्रियेण स्वरूपस्यानुभव इति सूचितम्॥ ४॥

**॥ इति तदभावाधिकरणम्॥ ४॥**

(त.दी.) श्रुतिद्वयनिर्वाहस्पष्टीकरणाय नाडीस्थ इत्यनुक्त्वा विभज्योक्तिरिति केचित्। नाडीष्विति बहुवचनं श्रुत्यनुसारात्। श्रुतौ च प्रतिदेहं तद्बाहुल्यादिति ज्ञेयम्। (पृ.सं.४६)

**॥ ५॥ अथ प्रबोधाधिकरणम्॥**

**(सुप्तिप्रबोधस्य भगवदधीनत्ववर्णनम्)**

अत्र सुप्तिप्रबोधस्येश्वराधीनत्वं समर्थ्यते।

ॐ अतः प्रबोधोऽस्मात् ॐ (३-२-८)

(सू.) यतस्तस्मिन् सुप्तिः अतः जीवस्य तस्मिन्नेव सुप्तत्वात् **प्रबोधः** सुप्तप्रबोधः **अस्मात्** परमात्मन एवेति न भेरीताडनादेः, **अतः** 'एष सुप्तं प्रबोधयति'[1] इति श्रुतेरित्यर्थः। ईश्वरेण स्वान्तर्निवेशितस्य तत्प्रेरणामन्तरेणोद्बोधायोगादिति भावः॥ ५॥

**॥ इति प्रबोधाधिकरणम्॥ ५॥**

१. 'एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष प्रमातैष परमः' इति (ब्र.सू.भा.उ.कौण्डिन्यश्रुतिः, पृ. ६९)

(त.दी.) प्रबोध इत्युक्त्या 'एष एव सुप्तं प्रबोधयति' (**ब्र.सू.भा.उ. कौण्डिन्यश्रुतिः**) इत्यादिश्रुतिः सूच्यते । भेरीताडनादेः प्रबोधकत्वदृष्टिः निमित्तत्वमात्रविषयेति भावः । (पृ.सं.४७)

## ॥ ६ ॥ अथ कर्मानुस्मृत्यधिकरणम् ॥

**(सर्वपुरुषीय-सार्वकालीन-सर्वावस्थानां भगवदधीनत्वमहिमवर्णनम्)**

अत्र सार्वकालीनसर्वावस्थानामीश्वराधीनत्वं समर्थ्यते ।

**ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ (३-२-९)**

(सू.) **स एव** ईश्वर एव सर्वेषां सर्वकालीनसर्वावस्थाप्रेरकः । **च**शब्दः पूर्वपक्षाख्यपक्षान्तरव्यावृत्त्यर्थः । नतु केषाञ्चित् कादाचित्कावस्थाप्रेरक इति यावत् । 'एष ह्येव साधु कर्म कारयति' (कौ. ३.८) इति **श्रुतसर्वकर्मनियामकत्वात्** । सुप्त्यादीनां च तदन्तर्भावात् । **अनुस्मृतेः** 'प्रदर्शकस्तु सर्वेषां'[१] इति स्फुटमभिमतार्थाभिधायकस्मृतेश्च । **शब्दात्**

'देशकालविशेषेऽपि स्वप्नादीनां स एव हि ।[२]
तिरस्कर्ता च कर्ता च न खण्डेशः स राजवत् ॥'

(न्या.वि.उ. श्रुतिः) पृ.सं. १२६

इति न्यायविवरणोक्तश्रुतेश्च । 'आत्मानमेव लोकमुपासीत' (बृ.उ. ३.४.१५) इत्युपास्यत्व**विधानाच्च**। नह्यन्यस्य स्वप्नादिकर्तृत्वे परमात्मन एवोपास्यत्वं भवतीति भावः । इति कर्मानुस्मृतिशब्दविधिभ्यो हेतुभ्य इत्यर्थः ॥ ६ ॥

**॥ इति कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥**

---

१. 'प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु । परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन ॥ इति (ब्र.सू.भा.उ.स्मृतिः, पृ.७१)

२. 'स्वप्नादीनां च एव हि' इति क. पाठः प्रामादिक इति भाति ।

## ॥ ७ ॥ अथ सम्पत्त्यधिकरणम् ॥

### ('मोहावस्थायां जीवस्य भगवति अर्धप्रवेशः' इति निरूपणम्)

अत्र मोहापरपर्यायमूर्छावस्थायां भगवतो जीवप्राप्यत्वं समर्थ्यते ।

**ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ (३-२- १०)**

**(सू.)** [1]**मुग्धे** मोहे जीवस्याऽत्मनि **अर्धसम्पत्तिः** अर्धप्रवेशो भवति। कुतः ? **परिशेषात्** । मोहे तावद् हृदयस्थाद्धरेः सकाशाद् विदूरत्व-सामीप्यप्रवेशार्धप्रवेशाः प्रसक्ताः । तेषां मध्ये त्रयाणां कल्पानां प्रतिषेधेऽन्यस्याप्रसङ्गात् परिशिष्यमाणेऽर्धप्रवेशे बुद्धेरित्यर्थः । न तावन्मोहे विदूरत्वम् । तस्य जाग्रदवस्थाधर्मत्वात् । 'हृदयस्थात् पराज्जीवो दूरस्थो जाग्रदेष्यति'[2] इति वचनात् । नापि सामीप्यम् । तस्य स्वप्नावस्थाधर्मत्वात्। 'स्वपित्यस्मिन् लयं व्रजन्' (ब्र.सू.भा.उ. वाराहवचनम्, पृ. ७३) इत्युक्तेः । न चावस्थात्रयातिरेकः कुत इति वाच्यम्। दुःखानुसन्धानेन सुप्त्यन्तभार्वस्तावन्नास्ति। नापि जाग्रत्स्वप्न-योरन्तर्भावः । दुःखात्मकालातिरिक्तविषयादर्शनात् । अतोऽवस्था-त्रयातिरिक्तत्वे सत्यवस्थात्वाद् उक्तपरिशेषाच्च कण्ठहृदयमध्य-रूपार्धप्राप्तिरेव जीवस्य मूर्छायामिति भावः ॥ ७ ॥

### ॥ इति सम्पत्त्यधिकरणम् ॥ ७ ॥

**(त.दी.)** स्वप्नादिवन्न मोहः स्वतन्त्रावस्थेति द्योतनाय व्यवधानेनास्योक्तिः। जन्मादिसूत्रोक्तसृष्ट्यादिकर्तृत्वस्य प्रपञ्चनमेतैर्योगैः कृतमित्यपौनरुक्त्यम् । **(पृ.सं.५१)**

---

१. मुग्धशब्दस्य भावार्थकक्तप्रत्ययान्तत्वेन मोहवाचित्वमवगन्तव्यम् ।

२. 'हृदयस्थात् पराज्जीवो दूरस्थो जाग्रदेष्यति । समीपस्थस्तथा स्वप्नं स्वपित्य-स्मिन् लयं व्रजन् ॥ यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः । अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः ॥ इति (ब्र.सू.भा.उ.वाराहवचनम्) पृ. ७३)

## ॥ ८ ॥ अथ न स्थानतोऽप्यधिकरणम् ॥

### ('भगवान् सर्वस्थानेषु निर्दोषाशेषसद्गुणः निर्भेदश्च' इति निरूपणम्)

अत्र विश्वादिरूपाणामभेदः समर्थ्यते ।

**ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ (३-२-११)**

(सू.) **सर्वत्र स्थानतः** अनेकशरीराख्यस्थाने एकस्मिन्नपि शरीरे दक्षिणाक्ष्यादिस्थानेषु च सामस्त्येन विद्यमानस्य **परस्य** विश्वादिरूपिणो हरेः **उभयलिङ्गं** 'लिङ्गं स्वरूपमुद्दिष्टम्' (भा.दी.उ.वचनम्, पृ. ७७) इति वचनाद् भिन्नरूपं दोषित्वं च **नास्ति** । कुतः ? । **हि** यस्मात् सर्वत्र सर्वस्थानेषु निर्दोषाशेषगुणो निर्भेदश्चेत्येतत् 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' (ऐ.आ. ३.२.३) इति श्रुतिप्रसिद्धमित्यर्थः ।

### ('उभयलिङ्गम्' इति प्रयोगे कारणोक्तिः)

ननु परस्योभयत्वमित्यल्पाक्षरेणैव भेदाभावोक्तिसम्भवे 'उभयलिङ्गम्' इति किमर्थमुक्त-मिति चेत् । न । उभयत्वं नेत्युक्ते पाणिपादाद्यवयवरूपैकैकदेशतोऽप्यनेकस्थानत्वेन भेदाभावो विज्ञायेत । तच्चाप्रामाणिकं 'सप्ताङ्ग एकोनविंशतिमुखः' (मा.२.३) इत्यादिप्रमाणविरुद्धं चातः उभयलिङ्गमित्युक्तम् । अनेकभिन्नस्थाने विद्यमानानां समग्ररूपाणां भेदमात्रनिषेधो विज्ञायते । विशिष्टनिषेधस्य विशेषणे पर्यवसानादिति **भावबोधे** स्पष्टम् ।

(त.दी.) रूपमिति वाच्ये लिङ्गमित्युक्तिः स्थानभेदो न परस्योभयत्वे लिङ्गम्, अप्रयोजकत्वादिति तत्त्वप्रदीपोक्तदिशाऽर्थान्तरसूचनाय। (पृ.सं.५३,५४)

उक्तमाक्षिप्य समाधत्ते-

**ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ (३-२-१२)**

(सू.) 'कार्यकारणबद्धौ तौ'[१] इत्यादिना माण्डूकश्रुतिवाक्ये विश्व-तैजसयोर्द्विविधबन्धवत्त्वेन प्राज्ञस्यैकबन्धवत्त्वेन तुरीयस्याबद्धत्वेन **भेद-दोषित्वव्यपदेशाद्** विश्वादीनाम**भेदो न** । तथा च भेदाद् गुणतारतम्यं ततश्चानुग्राह्यानुग्राहकभावः स्यादिति **चेन्न** । एतच्छ्रुतिबलेनेश्वररूपाणां भेदो वाच्यः । 'एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ.५.७.३) इत्यादिना **प्रत्येकम्** आदरेण **अतद्वचनात्** अभेदवचनादित्यर्थः । 'बद्धो बन्धादिसाक्षित्वात्'[२] इत्यादौ निर्दोषतावचनाच्च ।

(त.दी.) अतद्वचनादित्येव पूर्तौ प्रत्येकमित्युक्तिरादरसूचनार्था । तेन भेदोक्तितः अभेदोक्तेः प्राबल्यमिति भावः । (पृ.सं.५६ )

ननूक्तश्रुतीनां कतिपयरूपविषयत्वं किं न स्यादित्यत आह -

**ॐ अपि चैवमेके ॐ (३-२-१३)**

(सू.) **एवं** अभेदेन सहैव । **च** अनन्तरूपत्वं च । 'अमात्रोऽनन्त-मात्रश्च'[३] इत्यादिना **एके** शाखिनः पठन्त्यपीत्यर्थः ॥ ८ ॥

**॥ इति न स्थानतोऽप्यधिकरणम् ॥ ८ ॥**

## ॥ ९ ॥ अथ अरूपाधिकरणम् ॥

### (विष्णोः न प्राकृतशरीरम् इति निरूपणम्)

अत्र विष्णोः प्राकृतशरीरराहित्यं समर्थ्यते ।

---

१. 'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः ॥' इति (मा. २.१६, पृ. ७९)

२. 'बद्धो बन्धादिसाक्षित्वाद् भिन्नो भिन्नेषु संस्थितेः । निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः ॥' इति (ब्र.सू.भा.उ. ब्रह्मतर्कवचनम्, पृ.८३)

३. 'अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः । ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥' इति (मा.४.७, पृ. ८२)

**ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ (३-२-१४)**

(सू.) अत्र **रूपशब्देन** शरीरमुच्यते । 'रूपमस्य शिरः पाणिपादाद्यात्मकमिष्यते' इत्यनुव्याख्यानात् । 'रूपशब्देन शुक्लादिगुणप्रतीतिः स्यादतः शिरः पाणिरिति विवरणं कृतम्' इति सुधावाक्याच्च । **तदिति** तन्त्रं व्यस्तं समस्तं च । **तद् ब्रह्म अरूपवदेव** प्राकृतभौतिकदेहशून्यमेव । येनानित्यता । 'अरूपमनामयम्' (त.दी.उ.श्रुतिः, पृ. ५८) इति श्रुतिविरोधो वा स्यात् । कुतः ? **तत्प्रधानत्वात्** प्रकृत्यादिप्रवर्तकत्वेन तस्मात् प्रकृत्यादेरुत्तमत्वात् । 'अस्थूलमनणु' (बृ.उ. ५.८.८) इत्यादिश्रुतेश्चेत्यर्थः । स्वाधीनस्य प्रकृत्यादेः स्वबन्धकत्वायोगादिति भावः ।

**(त.दी.)** हिशब्दः 'अस्थूलमनणु' (बृ.उ. ५.८.८) इत्यादिश्रुतेश्चेति सूचयति । अत्र परस्येति प्रस्तावादरूपवानिति वाच्ये क्लीबोक्तिर्हिशब्दोक्तश्रुत्यनुसारात् । अरूपमिति वाच्ये मतुप् रूपरूपिभेदनिवृत्त्यर्थ इत्याहुः । 'अन्यभाव' इत्युक्तस्य समर्थनमत्रेत्येके । तत्त्वप्रदीपे तु तत्रान्यवस्तुस्वभावव्यावृत्तिरुक्ता, न तु नीरूपिता । साऽत्रोच्यत इत्युक्तम् । **(पृ.सं.५८,५९)**

ब्रह्मणो रूपाभावे रूपित्वश्रुतिविरोधः सौन्दर्याद्यभावश्चेत्यत आह-

**ॐ प्रकाशवच्चावैयर्थ्यम् ॐ (३-२-१५)**

(सू.) गृहान्तर्नेत्रादिप्रकाशे सत्यपि बाह्यप्रकाशवैलक्षण्यान्नास्ति **प्रकाश इति व्यवहारवद्** ब्रह्मणो विलक्षणाप्राकृतरूपवत्त्वाद् अरूपित्वश्रुत्यप्रामाण्यरूप**वैयर्थ्यं नास्ति** । सौन्दर्यादिकं चास्तीति भावः । अतैजसप्रकाशेऽपि ब्रह्मणि 'आत्मैवास्य ज्योतिः' (बृ.उ. ६.६.६) (इति) **प्रकाशवाचकज्योतिःपदप्रवृत्तिवद्** रूपशब्दप्रवृत्तिर्विलक्षणेऽपि भगवद्रूपे करादिमत्त्वसादृश्येन युक्तेति **रूपित्वश्रुत्यवैयर्थ्यमिति** वा ।

विलक्षणरूपित्वं श्रुत्या समर्थयति -

**ॐ आह च तन्मात्रम् ॐ (३-२-१६)**

(सू.) 'तद्गुणसारत्वात्' (ब्र.सू. २.३.२९) इत्यत्रोक्तौ ज्ञानानन्दौ तच्छब्देन परामृश्येते । ब्रह्मणो रूपं **तन्मात्रं** ज्ञानानन्दादिमात्रं 'ऐकात्म्यप्रत्ययसारम्' (मा. २.७) इत्यादिश्रुतिः **आह** ॥ अतो न प्राकृतमित्यर्थः ।

नन्वत्र ज्ञानाद्यात्मकत्वमेवोच्यते । नतु तस्य ब्रह्मरूपत्वमित्यत आह-

**ॐ दर्शयति चाथो अपि स्मर्यते ॐ (३-२-१७)**

(सू.) 'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति' (मु. २.२.८) इति श्रुतिरानन्दस्य ब्रह्मरूपत्वं **च दर्शयति** । **अथो** इति ज्ञानरूपार्थान्तरमुच्यते । तथा च **अथोऽपि** ज्ञानस्यापि ब्रह्मरूपत्वं 'शुद्धस्फटिकसङ्काशम्'[1] इत्यत्र 'ज्ञानरूपात्' इति **स्मर्यत** इत्यर्थः ॥ ९ ॥

**॥ इति अरूपाधिकरणम् ॥ ९ ॥**

## ॥ १० ॥ अथोपमाधिकरणम् ॥

### (जीवाभेदनिरासः)

अत्र जीवाभेदनिरासः क्रियते ।

### (पूर्वपक्ष-सिद्धान्तौ)

जीवः परमात्माभिन्नः चेतनत्वात् तदंशत्वात्, मत्स्यादिवदिति दोषिणैक्ये दुष्टत्वावश्यम्भावान्न हरौ भक्तिर्युक्तेति पूर्वपक्षे सत्याह -

---

१. 'शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् । चिन्तयीत यतिर्नान्यं ज्ञानरूपाद् ऋते हरेः ॥' इति (ब्र.सू.भा.उ. मात्स्यवचनम्, पृ. ९०)

## ॐ अत एव चोपमा सूर्यकादिवत् ॐ (३-२-१८)

(सू.) **अत एव** 'सन्ध्ये सृष्टिराह हि' (ब्र.सू. ३.२.१) 'तद्गुणसारत्वात्' (ब्र.सू. २.३.२९) इति प्राचीनसूत्रप्रकृततदधीनत्वे सति तत्सदृशत्वादेव **उपमा** उपपन्ना । प्रतिबिम्बत्वादिति यावत् । **सूर्यकादिवत्** जलगत-सूर्यछायावत् । **च** भिन्नत्वमित्यर्थः । जीवः ब्रह्माभिन्नो न भवति तत्प्रतिबिम्बत्वात्, यो यत्प्रतिबिम्बः स तस्माद् भिन्नो यथा सूर्यकः सूर्यादिति भावः । प्राचीनानुमानेऽप्रतिबिम्बत्वमुपाधिरिति ध्येयम् ।

### (सूत्रस्य वर्णकान्तरम्)

यद्वा, **अत एव** मत्स्यादिस्वांशरूपाणां ज्ञानाद्यविशेषस्योक्तत्वादेव **अत एव** जीवस्य स्वरूपांशत्वे मत्स्याद्यविशेषापातादेव **उपमा** ईशस्य प्रतिबिम्ब एव जीवः । **अत एव** ईशस्य प्रतिबिम्बत्वादेव **सूर्यकादिवत्** सूर्यप्रतिबिम्बः सूर्येणाभिन्नो यथा न तथा जीवो नेशाभिन्न इत्यर्थः ॥ १० ॥

### ॥ इति उपमाधिकरणम् ॥ १० ॥

### ॥ ११ ॥ अथ अम्बुवदधिकरणम् ॥

### (भक्तेः मौक्तानन्दानुभवफलकत्वोक्तिः)

अत्र भक्तेर्मौक्तानन्दानुभवफलकत्वं साध्यते ।

## ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ (३-२-१९)

(सू.) **अम्बुवदिति** सादृश्यार्थे वतिः । **तु**शब्देन सम्यक्त्वमुच्यते । पुंस्त्वादिवत्त्वस्येत्युक्तं सादृश्यं **तथात्वमि**त्यनेन परामृश्यते । अम्बुसादृश्यं स्नेहवत्त्वेनैव । अम्बुनि स्नेहश्चिक्कणता । अत्र तु मनोवृत्तेर्द्रवीभावः । तथा चाम्बुवत् स्थितं यद् ग्रहणं तद्वत् स्नेहयुक्तं

यद् ग्रहणं माहात्म्यज्ञानं, भक्तिरिति यावत्। **अम्बुवद् ग्रहणाभावात्**, भक्तिं विनेति यावत्। **तु तथात्वं** ज्ञानानन्दादिसादृश्यस्य सम्यगभिव्यक्तत्वं **न** भवतीत्यर्थः ।

**(भक्त्यभावादित्यनुक्त्वा 'अम्बुवदग्रहणात्' इति कथने कारणोक्तिः)**

ननु तर्हि अल्पाक्षरत्वलाभाय भक्त्यभावादित्येव वक्तव्यम्। 'अम्बुवदग्रहणात्' इति कुतो गौरवमिति चेत्। न। भक्तिस्वरूपनिरूपणार्थमिति ब्रूमः। तर्हि स्नेहेन अज्ञानादिति कुतो नोक्तमिति चेत्। सत्यम्। यथाऽम्बुनि चिक्कणताख्यस्नेहः [१]अज्ञानत्वादतिसुदृढस्तथाऽतिसुदृढस्नेहलाभायाम्बुवदित्युक्तम्। गृह्णाति कदाऽपि न मुञ्चतीति ज्ञानेऽपि दार्ढ्यसूचनाय ग्रहणमित्याह सूत्रकृदिति ज्ञेयम्।

तत्त्वप्रदीपिकायां तु अम्बुनः स्नेहात्मकत्वात् तेन मानसं स्नेहं लक्षयति। अम्बुवद् ग्रहणं स्नेहसहितं ज्ञानमित्यर्थ इत्युक्तम्। अम्बु तावत् प्रियतमेष्वभ्यर्हितम्। 'काममपः पिब आपोमयः प्राणः' इत्यादिवचनात्। ततश्चाम्बु यथा स्नेहेन गृह्यते तथा स्नेहपूर्वकं परमात्मनोऽग्रहणाद् ज्ञानाभावेन **तथात्वं** परमात्मवदाविर्भूतज्ञानानन्दादिमत्त्वं न भवतीत्यर्थ इति **अभिनवचन्द्रिकायाम्** ॥११॥

**॥ इति अम्बुवदधिकरणम् ॥ ११ ॥**

**(त.दी.)** सुप्तौ भक्तिं विनाऽपि व्यक्तिरस्तीत्यतः तुरुक्तः। भक्त्या तथात्वं व्यज्यत इत्यन्वयमुखेन वाच्ये व्यतिरेकमुखेनोक्तिः भक्त्यभावेऽपि सुप्तौ सुखव्यक्तिरस्ति किं भक्त्येति शङ्किते, भक्त्यभावे सुखं न सम्यग् व्यज्यत इति समाधातुम्। (पृ.सं.७०,७)

---

१. आज्ञानत्वात्' इति क. पाठः।

## ॥ १२ ॥ अथ वृद्धिह्रासाधिकरणम् ॥

### (भक्तेर्वृद्धिह्रासभात्त्वसमर्थनम्)

अत्र भक्तेर्वृद्धिह्रासभात्त्वं समर्थ्यते ।

**ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ**

**(३-२-२०)**

(सू.) भक्त्यादेरिति शेषः । भक्त्यादेः साधनस्य **वृद्धिह्रासभात्त्वं** विद्यते । उत्तमफलवतां ब्रह्मादीनामल्पानामस्मदादीनां च भक्तत्वे **अन्तर्भावात्** । **एवं** भक्तितारतम्याङ्गीकारे एव **उभयसामञ्जस्यात्** सर्वभक्तान् प्रति समञ्जसत्वं भवेत् । अन्यथा निर्निमित्तं विषयफलदातुर्हरेर्वैषम्यं दोषः स्यादित्यर्थः । ब्रह्मादिमनुष्योत्तमान्ताः तारतम्योपेतभक्तिज्ञानादिसाधनवन्तः तारतम्योपेतानन्दादिफलवत्त्वादित्युक्तं भवति ।

फलतारतम्यमेव कुत इत्यत आह -

**ॐ दर्शनाच्च ॐ** ( ३-२- २१)

**(सूत्रार्थः)**

'अथात आनन्दस्य मीमांसा भवति' (तै. २.२) इत्यादिश्रुतिषु ब्रह्मपर्यन्तं सुखे विशेष**दर्शनात्** ।

'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ॥' (ब्र.सू.भा.उ. स्मृतिः)

इति स्मृतेश्चेत्यर्थः ॥ १२ ॥

॥ इति वृद्धिह्रासाधिकरणम् ॥ १२ ॥

## ॥ १३ ॥ अथ प्रकृताधिकरणम् ॥

**(जन्मादिसूत्रोक्तविश्वपालकत्वसमर्थनम्)**

अत्र विश्वपालकत्वं समर्थ्यते ।

**ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ**
(३-२-२२)

(सू.) 'नैतावदेनाऽपरो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' (ऋ.१०.३१.८) इति श्रुतिः **प्रकृतस्य** सृष्ट्यादिकर्तृत्वस्य **एतावत्त्वं** तावन्मात्रत्वं **प्रतिषेधति । ततः** सृष्टिकर्तृत्वात् **भूयः** अधिकं पालनमपि **ब्रवीति च ।** 'सृष्टिं च पालनं चैव संहारं नियमं तथा ।'[1] इत्यादिस्मृतिश्च ब्रवीतीत्यर्थः । अनेनेश्वरेण भवत्कार्यजातमेतावत्प्रागुक्तसृष्टिसंहारमात्रं न भवति । किन्त्वन्यदस्ति । किं तत्? स परो भक्ताभिलषितसेचको द्यावापृथिवी धत्ते पुष्णाति चेति ऋगर्थः ॥ १३ ॥

**॥ इति प्रकृताधिकरणम् ॥ १३ ॥**

## ॥ १४ ॥ अथ अव्यक्तत्वाधिकरणम् ॥

**('पुरुषप्रयत्नेन भगवान् न द्रष्टुं शक्यः' इति निरूपणम्)**

अत्र जीवशक्त्योपलब्ध्ययोग्यत्वं वर्ण्यते ।

**ॐ तदव्यक्तमाह हि ॐ** (३-२- २३)

(सू.) **तद्** ब्रह्म **अव्यक्तं** पुरुषप्रयत्वेन द्रष्टुमशक्यं **हि** यस्मात् 'सदाऽव्यक्तं च निष्कलम्'[2] इति श्रुतिराहेत्यर्थः ।

---

१. 'सृष्टिं च पालनं चैव संहारं नियमं तथा । एक एव करोतीशः सर्वस्य जगतो हरिः ॥ इति (ब्र.सू.भा.उ. ब्रह्माण्डवचनम्, पृ.१०४)

२. 'अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् । यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाक्षयो भवेत् ॥' इति (ब्र.सू.भा.उ. कौण्ठरव्यश्रुतिः, पृ. १०५)

स्वतोऽव्यक्तमपि यक्षादिवत् समाराधनेन पुंयत्नेन व्यक्तं भविष्यति किं भक्त्येत्यत आह-

**ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ (३-२- २४ )**

(सू.) **संराधनेऽपि** भक्तिविधुराराधनाख्यपुरुषयत्ने सत्यपि अव्यक्तमेव । ज्ञानिनां **प्रत्यक्षात्** अतिसूक्ष्मत्वहेतुका**नुमानाच्चे**त्यर्थः ।

(त.दी.)अज्ञापेक्षयाऽनुमानोक्तिः। ज्ञानिप्रत्यक्षमप्यस्तीत्येतच्च 'न तम् आराधयित्वाऽपि' (ब्र.सू.भा.उ. ब्रह्मवैवर्तवचनम्, पृ. १०७) इत्यादिस्मृत्या बोध्यम्। (पृ.सं.७७,७८)

नन्वग्न्यादीनामनुत्पन्नसूक्ष्मरूपेणाव्यक्तानामप्युत्पन्नरूपेण व्यक्तत्वमिव मूलरूपेणाव्यक्तमपि ब्रह्म गृहीरूपैर्व्यक्तमपि किं न स्यादित्यत आह -

**ॐ प्रकाशवच्चावैशेष्यम् ॐ (३-२-२५)**

(सू.) **च**शब्दः शङ्कान्तरव्यावर्तकः। ब्रह्म **प्रकाशवत्** अग्न्यादिवत् सूक्ष्मरूपेणाव्यक्तं स्थूलरूपेण व्यक्तमिति न । कुतः? **अवैशेष्यं** स्थूलसूक्ष्मत्वविशेषत्वं नास्तीत्यर्थः । 'नासौ सूक्ष्मो न स्थूलः'[1] इत्यादेः सर्वत्रैकरूपत्वादिति भावः ।

नन्वेवं ब्रह्मणः सर्वथाऽव्यक्तत्वे किं प्रयत्नेनेत्यत आह -

**ॐ प्रकाशश्च कर्मण्यभ्यासात् ॐ ( ३-२- २६ )**

(सू.) **चः** शङ्काव्यावर्तकः । **कर्मणि** विषयभूते ब्रह्मणि **अभ्यासात्**

---

१. 'नासौ सूक्ष्मो न स्थूलः पर एव स भवति । तस्मादाहुः परमः' इति (ब्र.सू.भा.उ. माण्डव्यश्रुतिः, पृ.१०८)

भक्तिपूर्वकाच्छ्रवणाद्यभ्यासात् **प्रकाश** आपरोक्ष्यं च भवति। [१]च तस्मान्न प्रयत्नवैयर्थ्यमित्यर्थः ।

(त.दी.) कर्मणीत्युक्तिरवाच्यस्य शास्त्राविषयत्वान्न श्रवणादीति न शङ्क्यम् । ईक्षतिनये वाच्यत्वोक्त्या विषयत्वसाधनादिति तन्न्यायस्मरणार्था। स्मारणं चात्राव्यक्तत्वोक्त्याऽविषयत्वशङ्कोत्थानादित्युक्तं तत्त्वप्रदीपे। (पृ.सं.८०)

नन्वव्यक्तस्वभावत्वान्न श्रवणादिना तत्प्रकाशः । नहि साधन-शतेनादृष्टं दृष्टं भवतीत्यत आह -

**ॐ अतोऽनन्तेन तथा हि लिङ्गं ॐ** (३-२- २७)

**(सू.) अतः** अव्यक्तत्वे प्रत्यक्षत्वे च प्रमाणसद्भावात्, प्रमाण-द्वयान्यथानुपपत्त्येति यावत्। प्रसन्नेना**नन्तशक्तिमता** हरिणा निमित्तेन प्रकाशो भवति । युक्त्या चैतत् साधति । **तथा हि लिङ्गम्** । तथा लिङ्गं 'तस्याभिध्यानात्'[२] इति श्रुत्युक्तमीशप्रसादसाध्यबन्धनिवृत्ति-रूपं लिङ्गं च **हि** यतः, तथा भगवत्प्रसादेन तद्दर्शनभावं च ज्ञापयती-त्यर्थः । 'दृष्ट्वैव तं मुच्यते' (ब्र.सू.भा.उ.श्रुतिः, पृ. १११) इति मोक्षस्य दर्शनसाध्यत्वोक्तेः प्रसादाद् दर्शनं दर्शनान्मोक्ष इत्यवश्यमङ्गीकार्य-मित्याशयः ॥ १४ ॥

**॥ इति अव्यक्तत्वाधिकरणम्॥ १४॥**

(त.दी.) तेनेति वाच्येऽनन्तेनेत्युक्तिः अव्यक्तस्य प्रसादेनापि कथं प्रकाश इति न शङ्क्यम्। तस्यानन्तशक्तित्वादिति द्योतयितुम्। (पृ.सं.८२)

---

१. अत्र चशब्दोऽधिक इति भाति।

२. 'तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः' इति (श्वे.१.१०, पृ. १११)

## ॥ १५ ॥ अथ अहिकुण्डलाधिकरणम् ॥

### (गुणस्वरूपस्य भगवतः गुणित्वसमर्थनम्)

अत्र गुणस्वरूपस्य गुणित्वं समर्थ्यते ।

**ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ (३-२-२८)**

(सू.) 'आनन्दं ब्रह्मणः' (तै. २.४) 'अथैष एव परम आनन्दः' (बृ. ६.३.३३) इत्यादिश्रुतिषु **उभयव्यपदेशात्** गुणात्मकत्वेन गुणित्वेन च व्यपदेशात् **अहिकुण्डलवत्** कुण्डलात्मकस्याप्यहेः भेदादेव कुण्डलवत्त्ववद् आनन्दाद्यात्मकस्यापि ब्रह्मणो विशेषादेवाऽनन्दित्वादिकं युज्यते । **तु**-शब्दाच्छ्रुतिगम्यत्वमुच्यते । केवलश्रुतिगम्यत्वात् नेश्वरो गुणवान् गुणात्मकत्वादित्यादिशुष्कयुक्तिविरोधो नास्तीत्यर्थः ।

### (अहिकुण्डलदृष्टान्तानुपपत्तिशङ्का तन्निरासश्च)

नन्वत्राहिकुण्डलदृष्टान्तोपादानमयुक्तम् । कुण्डलस्यायावद्द्रव्य-भावित्वेन भेदाभेदसद्भावात् तद्दृष्टान्तस्यात्यन्ताभिन्ने धर्मधर्मि-भावानुपपादकत्वादिति चेत् सत्यम् । न वयमहिकुण्डलवद् ब्रह्मानन्द-योर्धर्मधर्मिभावं साधयामः । येन भेदाभेदप्रसङ्गः । किं नाम ? अभिन्न-योर्धर्मधर्मिभावोऽनुपपन्नोऽसम्भावितत्वादित्याशङ्कापरिहारायाहि-कुण्डलदृष्टान्तः । तावतैव स्थूलमतीनां शङ्कानिवृत्तेः । तथा हि । यथाऽहिकुण्डलस्य सत्यप्यभेदे भेदमात्रेण धर्मधर्मिभावस्तथा ब्रह्म-धर्माणां सत्यप्यभेदे भेदप्रतिनिधिना विशेषेणैव धर्मधर्मिभाव इति ।

नन्वथाप्यत्यन्ताभिन्नयोर्धर्मधर्मिभावोऽसम्भावितोऽदृष्टत्वादित्याशङ्का-परिहारायाधुनाऽबाध्यप्रत्यक्षसिद्धादित्यमण्डलदृष्टान्तमाह-

**ॐ प्रकाशाश्रयवद् वा तेजस्त्वात् ॐ (३-२-२९)**

(सू.) **प्रकाशाश्रयवद् वा** सूर्यमण्डलवद् वा । यथा प्रकाशात्मकस्याप्यादित्यस्य विशेषबलेन प्रकाशित्वमेवं ब्रह्मणोऽपि तेजस्त्वात् तेजोरूपत्वस्य प्रामाणिकत्वात् प्रकाशाभेदेऽपि प्रकाशित्वं विशेषबलेनैव युज्यते । नतु भेदेनेत्यर्थः ।

**('तेजस्त्वात्' इति पदसार्थक्यकथनम्)**

एतेन 'पूर्ववद् वा' इत्युत्तरसूत्रवत् 'प्रकाशाश्रयवद् वा' इत्येतावतैव पूर्णत्वात् तेजस्त्वादिति व्यर्थमित्यपास्तम् । प्रकाशगुणाभेदेऽपि प्रकाशित्वमित्यर्थविशेष एवायं दृष्टान्त इति द्योतनार्थत्वात् । प्रकाशरूपत्वस्य प्रामाणिकत्वाद् विशेषबलेनैव प्रकाशित्वं निर्वाह्यम् । नतु भेदेनेति ज्ञापकार्थत्वाच्च तद्ग्रहणस्याऽवश्यकत्वाद् उभयोस्तेजोरूपत्वेनान्तरङ्गत्वादिति सूचयितुं वा तेजस्त्वादित्युक्तम् ।

(त.दी.) आदित्यवदिति वाच्ये एवमुक्तिरभेदेऽपि विशेषशक्त्याऽऽश्रयाश्रयिभावोऽस्तीति सूचनाय । अयं वा दृष्टान्त इति वाशब्दार्थः । (पृ.सं.८६)

ब्रह्मणोऽतिगहनत्वेन दुर्ज्ञेयत्वत्वान्नैकेन दृष्टान्तेन तत्साधनं शक्यमित्यतः साक्षिसिद्धकालदृष्टान्तेनाप्येतत्समर्थयति -

**ॐ पूर्ववद् वा ॐ (३-२-३०)**

(सू.) कालस्य पूर्वेणाभेदेऽपि **पूर्व इति** व्यावर्तकः काल इति व्यावर्त्यश्च भवति विशेषादेवैवं ब्रह्मणोऽपीत्यर्थः ।

(त.दी.) दृष्टान्तत्रयमादरार्थं वा स्थूलसूक्ष्ममत्यपेक्षयाऽऽद्यतृतीये, द्वितीयमन्तरङ्गत्वादिति वा बोध्यम् । (पृ.सं.८६,८७)

किमनेन गुणगुणिनोरभेदमभ्युपेत्य गुणित्वप्रतिपादनेन? भेद एव तयोः किं न स्यादित्यत आह -

ॐ प्रतिषेधाच्च ॐ (३-२- ३१)

(सू.) 'एकमेवाद्वितीयम्' (छा.उ. ६.२.१) 'नेह नाना' (क. २.४.११) इत्यादिश्रुतौ च किञ्चन गुणगुण्यादिकं नाना भिन्नं नास्तीति गुणगुण्यादिभेदस्य **निषेधाच्चेत्यर्थः** ॥ १९ ॥

॥ इति अहिकुण्डलाधिकरणम् ॥ १९ ॥

## ॥ १६ ॥ अथ परमताधिकरणम् ॥

### (भगवद्गुणजातस्यालौकिकत्वसमर्थनम्)

अत्र तद्गुणजातस्यालौकिकत्वं समर्थ्यते ।

**ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ (३-२-३२)**

(सू.) **अतः** लौकिकानन्दादेः **परं** विलक्षणं ब्रह्मानन्दादिकम् **अतः** अलौकिकत्वादिति वा । कुतः? 'एष सेतुः'[1] इति सर्वाधारत्वाख्यं **सेतुत्वं** 'यतो वाचः' (तै. २.४) **इत्युन्मानत्वम्** उद्गतं मानं वेदादिप्रमाणं मर्यादा च यस्मादित्युन्मानत्वं पूर्णत्वम्, 'एतस्यैवाऽनन्दस्य'[2] इत्युप**जीव्यत्वादिसम्बन्धः**, 'अन्यद् ज्ञानं तु जीवानाम्'[3] इत्यादिना **भेदः**, तथा च लौकिकानन्दादावसम्भावितसेतून्मानत्वादेर्भेदस्य वैलक्षण्यस्य **अभिधानादित्यर्थः** ।

हेत्वन्तरेणैतत्समर्थयति-

---

१. 'एष सेतुर्विधृतिः' इति (छा. ८.४.१) पृ.सं. ११७

१२. 'एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति (बृ. ६.३.३२, पृ. ११८)

१३. 'अन्यद् ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च । नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते ॥' इति (ब्र.सू.भा.उ.वचनम्, पृ. ११९)

ॐ दर्शनात्[1] ॐ (३-२-३३)

(सू.) 'अन्यानन्दादीनां' इति शेषः । **दर्शन**पदमन्योपलक्षकम् । तथा चान्यानन्दादीनां मनोवा**ग्गोचरत्वादित्यर्थः** । 'अदृष्टमव्यवहार्यं'[२] इत्यादिना भगवदानन्दादेस्तदगोचरत्वादित्यादयो हेतवोऽर्थाद् द्रष्टव्याः।

ननु यदीश्वरानन्दादिर्लौकिकानन्दादिविलक्षणस्तर्हि कथं लोकानन्दादौ गृहीतसङ्गतिकस्याऽनन्दादिशब्दस्य तत्र प्रयोग इत्यत आह-

**ॐ बुद्ध्यर्थः पादवत् ॐ (३-२- ३४)**

(सू.) यथा खलु प्रसिद्धचरणस्वरूपांशाभ्यां विलक्षणेषु भिन्नांशेषु जीवेषु 'पादोऽस्य विश्वा भूतानि' (ऋ. १०.९०.३) इति **पाद**शब्दप्रयोग**वत्** लोकविलक्षणेऽप्यानन्दादौ तत्पदप्रयोगो **बुद्ध्यर्थः** अनुकूलतया वेद्यत्वादिकिञ्चित्सादृश्यज्ञापनार्थ इत्यर्थः । ज्ञाततावन्मात्रस्य प्रमाणान्तरवशाद् वैलक्षण्ये ज्ञाते तत्र परममुख्यवृत्तिग्रहो भविष्यतीति भावः ॥ १६ ॥

**॥ इति परमताधिकरणम् ॥ १६ ॥**

**(त.दी.)** बुद्ध्यर्थ इत्युक्तिरानन्दादिपदप्रयोगे प्रयोजनोक्त्यर्था। साऽपि स्वर्णघटे घटपदस्येव किञ्चित्सादृश्यमात्रेण व्युत्पत्तिर्युक्तेति सूचनार्था। (पृ.सं.९१,९२)

## ॥ १७ ॥ अथ स्थानविशेषाधिकरणम् ॥

**(विचित्रब्रह्मानन्दादिबिम्बभूतस्यापि भगवदानन्दस्याऽवैचित्र्योक्तिः)**

विचित्रब्रह्मानन्दादिबिम्बभूतस्यापि भगवदानन्दस्याऽवैचित्र्यं समर्थ्यतेऽस्मिन्नये -

---

१. 'दर्शनात्तु' इति ह. पाठः । पृ.सं. १४०

८५५. 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद् ब्रह्मेत्याचक्षते तस्माद् ब्रह्मेत्याचक्षते' इति (ब्र.सू.भा.उ.कौण्डिन्यश्रुतिः, पृ.१२०)

## ॐ स्थानविशेषात् प्रकाशादिवत् ॐ (३-२-३५)

(सू.) **प्रकाशादिवत्** प्रकाशरूपस्याऽदित्याख्यबिम्बस्य वैचित्र्याभावेऽपि जलसूर्यकान्तादि**स्थानविशेषात्** प्रतिबिम्बेऽग्निजनकत्वादिविशेषवद् अविचित्रभगवदानन्दादिप्रतिबिम्बानां ब्रह्मादिस्थाने भक्त्यादिगुणविशेषाद् वैचित्र्यमित्यर्थः । बिम्बानन्दाद्यवैचित्र्येऽपि प्रतिबिम्बवैचित्र्यमावश्यकबिम्बसामर्थ्येनाप्युपपादयति -

## ॐ उपपत्तेश्च ॐ ( ३-२-३६ )

(सू.) न केवलमानन्दादिवैचित्र्यस्य ब्रह्मादिस्थानगतभक्त्यादिगुणवैचित्र्येणोपपत्तिरपि तु बिम्बभूतभगवदैश्वर्यवशा**च्चोपपत्ते**रित्यर्थः ।

### (सूत्रद्वयवैयर्थ्यशङ्का, तत्परिहारश्च)

न च स्थानगुणस्य बिम्बसामर्थ्यस्य चाऽवश्यकत्वप्रतिपादकं सूत्रद्वयं व्यर्थमिति शङ्क्यम् । सूर्यकान्तगतसूर्यप्रतिबिम्बस्याग्निजनकत्वाद् बिम्बसामर्थ्यमावश्यकम् । सत्यपि बिम्बसामर्थ्ये जलादिगतस्य प्रतिबिम्बस्याग्निजनकत्वादर्शनात्[1] स्थानगुणत्वस्याप्यावश्यकत्वमिति युक्तं सूत्रद्वयमिति ज्ञेयम् ।। १७ ।।

### ।। इति स्थानविशेषाधिकरणम् ।। १७ ।।

(त.दी.)अदृष्टानियमादित्यत्र जीवानां विचित्रत्वाद् अविचित्रब्रह्मप्रतिबिम्बत्वं नेति चोद्यं निरस्तम् । अत्रं तु प्रतिबिम्ब इव बिम्बेऽपि वैचित्र्यं स्यादिति चोद्यं विशेषयुक्त्या च निरस्यत इति भेदः। (पृ.सं.९४)

---

१. 'स्थानगुणस्यापि' इति क.पाठः ।

## ॥ १८ ॥ अथ तथाऽन्यत्वाधिकरणम् ॥

### (हरेरव्यक्तत्वसमर्थनम्)

अत्र हरेरव्यक्तत्वं समर्थ्यते ।

**ॐ तथाऽन्यत्प्रतिषेधात् ॐ ॥ (३-२-३७)**

(सू.) यथा जीवानन्दादीनामल्पत्वादिना ब्रह्मानन्दादि तद्विलक्षणं तथा ब्रह्म **अन्यत्** ध्याने प्रतीताद् वस्तुनो विलक्षणमेव, नतु तदेव । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (केन.१.६, पृ. १२६) इति श्रुतौ ध्येयस्य दुर्लक्षणत्वेन ब्रह्मत्व**निषेधा**दित्यर्थः । निर्दोषदोषिणोर्ब्रह्मोपासाकृतयोरैक्यायोगादिति भावः ॥१८ ॥

**॥ इति तथाऽन्यत्वाधिकरणम् ॥ १८ ॥**

(त.दी.) अन्यदित्येव पूर्तौ तथेत्यक्तिर्यथा जीवानन्दादेरल्पत्वादिहेतोस्ततोऽन्यद् ब्रह्मानन्दादि तथोपासाकृतस्य दुर्लक्षणत्वादिहेतोस्ततोऽन्यद् ब्रह्मेति प्रागुक्तन्यायसूचनार्था । तदन्वयायैव परमित्यनुवृत्तावप्यन्यदित्युक्तिः । (पृ.९६)

## ॥ १९ ॥ अथ सर्वगतत्वाधिकरणम् ॥

### (हरेरेव जगत्कर्तृत्वमहिमा)

अत्र सार्वकालिकसार्वदैशिकसृष्ट्याद्यष्टकर्तृत्वं समर्थ्यते ।

**ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ (३-२-३८)**

(सू.) **अनेन** भगवतैव सर्वदेशकालीनं सृष्ट्यादि । कुतः ? **सर्वगतत्वमायामयशब्दादिभ्यः** 'अनुप्रविश्य नामरूपे व्याकरोत्' (छा.उ. ६.३.३) इति श्रुतिसिद्धसृष्ट्युपयोगिसर्वगतत्वस्य 'एष सर्वगतः'[1] इति

---

१. 'एष सर्व सर्वगत एष सर्वेश्वर एषोऽचिन्त्य एष परमः' इति (ब्र.सू.भा.उ. भाल्लवेयश्रुतिः, पृ.१२८)

श्रुतावुक्तत्वान्मायामयशब्दव्याख्यानरूपायाः 'सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु'[१] इति चतुर्वेदशिखोक्तेश्च । आदिपदेन कालान्तरेऽन्यस्य जगत्कारणत्वे प्रमाणाभावाच्चेति हेतुभ्य इत्यर्थः ॥ १९ ॥

॥ इति सर्वगतत्वाधिकरणम् ॥ १९ ॥

## ॥ २० ॥ अथ फलाधिकरणम् ॥

### (हरेरेव कर्मफलदातृत्वमहिमोक्तिः)

अत्र हरेः कर्मफलदातृत्वं समर्थ्यते ।

**ॐ फलमत उपपत्तेः ॐ (३-२-३९)**

(सू.) **अतः** ईश्वरादेव **फलं** भवति । न कर्मतः । **उपपत्तेः** तस्य चेतनत्वेन फलदानोपपत्तेरिति हृदयम् ।

एवमुपपत्तिरूपं प्रमाणमभिधाय तदुपोद्बलकप्रबलविशेषश्रुतिरूपनिश्चायकप्रमाणमाह -

**ॐ श्रुतत्वाच्च ॐ (३-२-४०)**

(सू.) 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्' (बृ.उ. ५.९.२८) इति फलदातृत्वस्य **श्रुतत्वाच्चा**तः फलमित्यर्थः ।

उक्तमाक्षिपति -

**ॐ धर्मं जैमिनिरत एव ॐ (३-२-४१)**

(सू.) **धर्म**पदेनाधर्मस्याप्युपलक्षणम् । यतः फलं भवति तं धर्माधर्ममेव

---

१. 'सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु । स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः । अतो मायामयं विष्णुं प्रवदन्ति सनातनम् ॥' इति (ब्र.सू.भा.उ. चतुर्वेदशिखाश्रुतिः, पृ. १२८)

ईश्वराज्ज्ञातं **जैमिनि**राह । कुतः ? **अत एव** 'एष ह्येव साधु कर्म कारयति' (कौ. ३.८) इति श्रुतेरेवेत्यर्थः । फलकारणस्य कर्मण ईश्वर-जन्यत्वोपचारेण 'रातिर्दातुः परायणम्' (बृ.उ.५.९.२८) इति श्रुतौ फलदातृत्वमुक्तमित्याशयः । धर्ममिति नपुंसकं प्रथमैकवचनं छन्द-स्त्वात् । तथा च धर्मं कर्मैवातो भवतीत्यर्थ इति केचिद् व्याचक्षते ।

**(त.दी.)** धर्मादिति वाच्येऽर्थविशेषलाभायैवं विन्यासः । रातिर्दातुरिति श्रुतिः पारम्पर्यपरेति भावः। **(पृ.सं.९९)**

एतमाक्षेपं समाधत्ते -

**ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ (३-२- ४२)**

**(सू.)** श्रुत्याऽन्वयव्यतिरेकबलाच्च कारणयोरीश्वरकर्मणोर्मध्ये **पूर्वं तु** पूर्वोक्तं ब्रह्मैव तत्कर्तृ । करणभूतं कर्म प्रवर्तयतीति **बादरायणो** मन्यते । कुतः ? **हेतुव्यपदेशात्** 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' (प्र. ३.७) इति ब्रह्मकर्मणोः कर्तृत्वकरणत्वरूपहेतुत्वोक्ते-रित्यर्थः । सामान्यतः कारणत्वं वदतो जैमिनेरपि कर्मादिरचेतनस्ये-श्वराधीनकारणत्वमभिमतमिति द्रष्टव्यम् ।। २० ।।

**।। इति फलाधिकरणम् ।। २० ।।**

**(त.दी.)** पूर्वमित्युक्तिः कर्तृत्वोपयुक्तचेतनत्वज्ञप्त्यै । प्राधान्यसूचनायेति केचित् । सामान्यतः कर्मणः फलहेतुत्वं प्रागुक्तं तदनुमतमेवेति भावः। फलमत इत्युक्त्या कर्मणः फलहेतुत्वं नेति प्राप्तचोद्यनिरासाय तृतीयो योगः। तस्य ब्रह्मवत् प्राधान्यव्युदासायान्त्यः । **(पृ.सं.१०१)**

**।। इति श्रीमच्छ्रीनिवसाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे तृतीयाध्यायस्य द्वितीयः पादः ।।**

# ॥ अथ तृतीयाध्यायस्य तृतीयः पादः ॥

(उपासनानिरूपणम्)

अथपदोक्तयोर्वैराग्यभक्त्योर्निरूपणानन्तरं तत्साध्या ज्ञानसाधनीभूता ब्रह्मजिज्ञासापदोदितोपासनाऽवसरप्राप्ताऽस्मिन् पादे कथ्यते ।

## ॥ १ ॥ सर्ववेदाधिकरणम् ॥

(शास्त्राभ्यासरूपोपासनायाः कर्तव्यत्वोक्तिः)

प्रथमाधिकरणे ध्यानाङ्गभूतायाः शास्त्राभ्यासरूपोपासनायाः कर्तव्यतां प्रतिपाद्यते ।

**ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ (३-३-१)**

(सू.) प्राचीनसूत्रे पूर्वपदोदितं ब्रह्म **सर्ववेदान्तप्रत्ययं** सर्ववेदानामन्तेन निर्णयेनोत्पाद्यः प्रत्ययो यस्य तत्। ध्यानार्थिना श्रवणादिना सर्ववेदान् निर्णीय ज्ञातव्यम्। नतु स्वस्वशाखामात्रोक्तरीत्या। कुतः ? 'श्रोतव्यः मन्तव्यः' इत्यादिविधीनाम् **अविशेषात्** सर्वाधिकारिसाधारणत्वादित्यर्थः। नहि काण्वादिशाखासु तैरेवेदं ज्ञातव्यं नान्यैरित्युच्यते। येन साधारण्यं न स्यादिति भावः । **आदिपदाद्युक्तिः** । अधिकारिविशेषकल्पकानां ज्ञानविध्यर्थ तत्र तत्रोक्तार्थवादादिरूपयुक्तीनाम् **अविशेषात्** इत्यर्थः ।

उक्तमाक्षिप्य समाधत्ते -

**ॐ भेदान्नेति चेन्नैकस्यामपि ॐ (३-३-२)**

(सू.) 'सत्यं ज्ञानं' (तै.२.१) 'श्रोता मन्ता' (ऐ.आ.३.२.४,१९, पृ. १३७) इत्याद्युपदेश**भेदाद्** वस्तु भिद्यते। ततश्चैकस्यैवानेन ज्ञातव्यत्वात्

स्वस्वशाखोक्तमेव ज्ञातव्यं **न सर्ववेदोक्तमिति चेन्न । एकस्यामपि** शाखायां प्रतिपाद्येऽपि 'आत्मेत्येवोपासीत' (बृ.उ.३.४.७) 'कं ब्रह्म खं ब्रह्म' (छा.उ.४.१०.५) इत्यादिभेददर्शनाद् एक शाखोक्तस्याप्येकेनाज्ञातव्यत्वप्रसङ्गादित्यर्थः । यदि तत्र धर्म्यनुवादेन धर्मविधानान्नोपदेशभेदः, नापि पौनरुक्त्यं प्रसङ्गभेदादनुवादकत्वाद् वेत्युच्येत तच्छाखान्तरेऽपि समानमिति द्रष्टव्यम् ।

हेत्वन्तरेणैतमर्थं समर्थयति -

**ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ (३-३-३)**

**(सू.) स्वाध्यायस्य** 'स्वाध्यायोऽध्येतव्यः' (तै.आ. २.१५) इति स्वाध्यायाध्ययनविधेः **तथात्वेन** सामान्यतः सर्वेषां सर्ववेदाध्ययनविधायकत्वेन हेतुना सर्वशाखापरिज्ञानमङ्गीकार्यम् । **तथात्वेन** एकैकेनाप्यविशेषेणाध्येतव्यत्वेन **हि** 'वेदः कृत्स्नोऽधिगन्तव्यः'[1] इति कृत्स्नपदोपेतस्मृतेश्च **अधिकाराच्च** अध्ययनस्यार्थज्ञानपर्यन्तत्वादिति भावः । 'सर्ववेदोक्तमार्गेण कर्म कुर्वीत'[2] इति स्मृत्या **समाचारे** सर्ववेदोक्तकर्मणः सम्यगाचरणे, सर्वेषां कर्माधिकारे सुतरां सर्वपरिज्ञानाधिकार इत्यर्थः । यानि चेमानि विरुद्धकर्माणि 'सामगो वटुः मुण्डोऽन्यगः शिखी' इत्यादीनि तान्येकशाखागतव्रीहिभिर्जुहोति यवैर्वा जुहोतीत्यादिवद्विकल्पेन भवन्तीत्याशयः ।

---

१. 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति (ब्र.सू.भा.उ.स्मृतिः, पृ. १३८)

२. 'सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः । आनन्दो हि फलं यस्मात् शाखाभेदो ह्यशक्तिजः ॥ सर्वकर्मकृतौ यस्माद् अशक्ताः सर्वजन्तवः । शाखाभेदं कर्मभेदं व्यासस्तस्माद् अचीक्लृपत् ॥' इति (ब्र.सू.भा.उ. स्मृतिः, पृ.१३९)

(त.दी.) सुधायां तु, समाचारे देवानां श्रवणाद्यनुष्ठानेऽधिकाराच्चेत्यर्थः । एकैक-शाखाप्रत्ययत्वे ब्रह्मणस्तेषां महामतीनामद्यापि तन्न स्यात् । समाचारादित्येव वाच्येऽधिकारादित्युक्तिर्देवतानयोक्तन्यायस्मारणायेत्युक्तम् । (पृ.सं.१०९)

सर्वेषां सर्वपरिज्ञाने मन्दानां ज्ञानाभावः स्यादित्यत आह -

**ॐ सलिलवच्च तन्नियमः ॐ (३-३-४)**

(सू.) **सलिलवत्** 'यथा नदीनां सलिलं शक्ये सागरगं भवेत्'[१] इति स्मृतौ सलिलानां समुद्रप्राप्तिनियमो यथा बाधकाभावे एवं **तन्नियमः** सर्ववेदोक्तमार्गेण प्रकारेण ब्रह्म ज्ञातव्यमिति नियमः पुरुषशक्त्यपेक्ष इत्यर्थः । श्रवणादिविधीनां यथाशक्ति सर्वश्रवणविधौ तात्पर्याङ्गीकाराद् यथाशक्ति सर्वपरिज्ञानमापाद्यमित्युक्तं भवति ।

निर्बाधयुक्तिसिद्धमर्थं श्रुतिस्मृतिभ्यां साधयति -

**ॐ दर्शयति च ॐ (३.३.५)**

(सू.)'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्येत्'[२] इति श्रुतिः 'सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान् । सपञ्चरात्रान् विज्ञाय'[३] इति स्मृतिश्च **दर्शयति** इत्यर्थः ।

**॥ इति सर्ववेदाधिकरणम् ॥ १ ॥**

---

१. 'यथा नदीनां सलिलं शक्ये सागरगं भवेत् । एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये ॥' इति (ब्र.सू.भा.उ. आग्नेयवचनम्, पृ. १४०)

२. 'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्येत् । तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः ॥' इति (ब्र.सू.भा.उ. चतुर्वेद-शिखाश्रुतिः) पृ. १४१)

३. 'सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान् । सपञ्चरात्रान् विज्ञाय विष्णुर्ज्ञेयो न चान्यथा ॥' इति (ब्र.सू.भा.उ.ब्रह्मतर्कवचनम्, पृ. १४१)

## ॥ २ ॥ अथोपसंहाराधिकरणम् ॥

### (सर्वगुणोपसंहारसमर्थनम्)

अत्र सर्वगुणोपसंहारानुपसंहारौ समर्थ्येते ।

**ॐ उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च ॐ** (३-३-६)

**(सू.)** सर्ववेदेत्यतः सर्ववेदेत्यस्यानुवृत्तिः । अर्थशब्दश्च गुणदोषाभाव-परः । तथा च **अर्थाभेदात्** सर्ववेदार्थभूतानामानन्दादिगुणानाम् अपहतपाप्मत्वादिदोषाभावानां च अभेदात् अविभागेन, युगपदिति यावत् । **उपसंहारः** युगपद् बुध्यारोहणपूर्वकंध्यानम् उपसंहारः, कर्तव्य इति शेषः । पूर्वं विशकलिततया ज्ञातानां समूहालम्बनं सम्पाद्यमिति यावत् । 'उपास्य एकः'[१] इति श्रुतिविहितत्वादिति द्रष्टव्यः । तत्र दृष्टान्तः- **विधिशेषवत्** ॥ शेषशब्दः शिष्टपरः । विधिविहित-सन्ध्यावन्दनादिवत् । अन्यथा विहितसन्ध्यावन्दनाद्यकरणे प्रत्यवायः स्यात् । किं वेदप्रतीताः सर्वेऽपि धर्मा उपसंहर्तव्याः ? नेत्याह- **समाने च** ॥ भगवति योग्यपूर्णत्वाविरोधिनि[२] गुण एवोपसंहारः,न तु 'सोऽरोदीत्' (तै.सं. १.५.१) इत्युक्तानां रोदनादीनामित्यर्थः । दुःखकार्याणां तेषां परमेश्वरेऽयोगाद् अयोग्योपासनस्यानर्थहेतुत्वादिति द्रष्टव्यम् ।

**(त.दी.)** उक्तं च साङ्कर्षणसूत्रे- 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्व-विपर्ययाभ्याम्' इति । कर्मवदिति वाच्ये विधिशेषेत्युक्तिर्विहितत्वहेतुसूच-नार्था । विधिशेषाणीति स्मृतिसूचनार्था च । तत्त्वप्रदीपे तु- सर्ववेदोपास्यार्थस्य

---

१. 'उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः । सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैः ॥' इति (ब्र.सू.भा.उ. भाल्लवेयश्रुतिः, पृ.१४३)

२. 'योग्ये पूर्णत्वाविरोधिनि गुणसमूह एवोपसंहारः' इति क. पाठः ।

सर्वगुणात्मकस्य विष्णोरभेदादेकत्वादित्यर्थ उक्तः। विधिशेषवदित्यस्य प्रधानविधिशेषभूतानि प्रयाजादीनि यथेति वाऽर्थ उक्त इत्यर्थान्तरमप्युक्तम्। (पृ.सं.११३,११४)

उक्तमाक्षिप्य समाधत्ते -

**ॐ अन्यथात्वं चशब्दात्[१] इति चेन्नाविशेषात् ॐ** (३-३-७)

(सू.) 'आत्मेत्येवोपासीत' (बृ.उ.३.४.७) इति गुणान्तरोपसंहार-निषेधेनाऽत्मत्वमात्रोपासनाविधायक**शब्दाद्** उपसंहारस्य **अन्यथात्वम्** अकर्तव्यत्वम् अवधारणेनाऽत्मत्वान्यगुणाध्यानप्रतीतेः **इति चेन्न । अविशेषात्** एते गुणा नोपसंहर्तव्या इति विशेषप्रमाणाभावादित्यर्थः। 'सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्यो नतु दोषैः कथञ्चित् (कदाचित्)' (ब्र.सू.भा.उ. श्रुतिः, पृ.१४५) इति उपसंहारे विशेषवचनाच्चेत्यपि द्रष्टव्यम् । निरवकाशै तच्छ्रुतिविरोधादेव 'आत्मेत्येवोपासीत' इत्यवधारणस्यानात्मत्वरूपदोषव्यवच्छेदकत्वमेव न गुणान्तर-व्यवच्छेदकत्वमिति तदपि नानुपसंहारमानमिति भावः ।

नायं गुणसंहारो युक्तः । अशक्यत्वादित्यत आह -

**ॐ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॐ** (३-३-८)

(सू.) **न वा** सर्वगुणोपसंहारः कर्तव्यः **प्रकरणभेदात् परोवरीयो** वैश्वानरादिप्रकरणभेदात्। ननु भवेदयं प्रकरणभेदः सर्वगुणोसंहाराभावस्य ज्ञापकः । यद्येकस्मिन् प्रकरणे सर्वगुणानामुक्तिरसम्भाविता स्यात् । 'काकेभ्यो दधि रक्ष्यताम्' इत्यादाविव तत्प्रकरणेषु शब्दविशेष-सद्भावेऽप्युपलक्षणतया सर्वगुणग्रहणसम्भवात् सर्वोपसंहारोपपत्तिरित्यत

१. 'अन्यथात्वं शब्दात्' इति ह.पाठः । पृ. १५४

उक्तम्- **परोवरीयस्त्वादिवत्** । तच्च प्रकरणप्रतिपाद्यतया परोवरीयस्त्वादिमात्रवदित्यर्थः । अत्र मतुपो मकारस्य वकारश्छान्दसः ।

इदमुक्तं भवति । 'स एष परोवरीयान्' (छा.१.९.२) इति प्रकरणे तावत् यावन्तो गुणाः श्रूयन्ते तेषामेव ग्रहणं नोपलक्षणतया सर्वगुणानां ग्रहणमित्यभ्युपगन्तव्यम् । अन्यथा परोवरीयःशब्देनैवोद्गीथत्वादीनामपि ग्रहणसम्भवेनोद्गीथ इत्यादिशब्दवैयर्थ्यप्रसङ्गात् । अनेनैव न्यायेन सर्वाण्यपि प्रकरणानि स्वरसलभ्यगुणपराण्येव नोपलक्षणया सर्वगुणपराणीति । यद्वा, परोवरीयस्त्वादिवदिति सप्तम्यर्थे वतिमङ्गीकृत्य परोवरीयस्त्वादिप्रकरणे इवेत्यर्थः । अत एव भाष्ये 'परोवरीयस्त्वादिषु' (ब्र.सू.भा., पृ. १४६) इत्युक्तम् । परोवरीयानित्यादिप्रकरणेषु यथा परोवरीयस्त्वादिकं तावन्मात्रमुपास्यमुक्तं तथा तत्तद्विद्योक्तमात्रमुपास्यं नतूपसंहृत्येत्यर्थः ।

उक्तमनुपसंहारमाक्षिप्य शक्तानामुत्तमाधिकारिणामुपसंहारमङ्गीकृत्य असमर्थाधिकारिपुरुषविषयोऽनुपसंहार इति गूढाभिसन्धिः समाधत्ते -

**ॐ सञ्ज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॐ** (३-३-९)

(सू.) सर्वविद्या उक्त्वा 'सोऽहम्[१] नामविदेवास्मि' (छा. ७.१.३) इति वचनात् सर्वविद्या **सञ्ज्ञातः** नामत्वेन तद्गुणवाचित्वात् तद्गुणानां च ध्यानार्थत्वाद् उपसंहारस्य कर्तव्यत्वं **चेत्** उच्यते । तर्हि तन्नास्माकं विरोधि । यतः **तदुक्तं** तदुपसंहारस्य कर्तव्यत्वमुक्त**मस्ति** । **तदपि**

८८५.यद्यपि 'सोऽहं मन्त्रविदेव' इति छन्दोगानां पाठः । तथाऽपि वाक्यमेतच्छाखान्तरगतमित्यवधेयम् । अथवा, 'यद्वै किञ्चिदध्यगीष्ट नामैवेतत्' (छा.७.१०३) इत्युत्तरवाक्यबलान्मन्त्रशब्दो नामपरो वा । केचित्तु 'मन्त्रवित्' इत्येव श्रुतिपाठः । भाष्यं तु तदर्थानुवादरूपमित्याहुः ।

उपसंहारस्य कर्तव्यत्वे 'नाम वा एता: ब्रह्मण: सर्वविद्या: तस्माद् एक: सर्वगुणैर्विचिन्त्य:' इति प्रमाणमप्यस्त्येव । न केवलं नामत्वयुक्तिमात्रमित्यपेरर्थ: ॥ २ ॥

(त.दी.) प्रयत्नेनोपसंहारे फलाधिक्यबोधनार्थं बहुप्रमाणग्रहणार्थं च पुन:पुन: उपसंहारोपन्यास इत्युक्तं तत्त्वप्रदीपे। (पृ.सं.११८,११९)

॥ इत्युपसंहाराधिकरणम् ॥ २ ॥

## ॥ ३ ॥ अथ प्राप्त्यधिकरणम् ॥

### (पुरुषभेदेन गुणोपसंहारानुपसंहारयो: कर्तव्यत्वोक्ति:)

अत्र गुणोसंहारानुपसंहारयो: पुरुषभेदेन कर्तव्यत्वं समर्थ्यते ।

**ॐ प्राप्तेश्च समञ्जसम् ॐ (३-३- १०)**

(सू.) न केवलमुक्तरीत्योपसंहारानुपसंहारयो: कर्तव्यत्वम्, किन्तु तद्द्वयं **समञ्जसं** युक्तं च । कुत:? **प्राप्ते:** योग्यताया अनुसारेणेत्यर्थ: ।

'युगपद् ब्रह्मण: सर्वे भासन्ते हि गुणा हरे: ।
[1]तदन्येषां यथायोग्यं स्वमाहात्म्यानुसारत: ॥' (न्या.वि.उ. श्रुति:)

इति न्यायविवरणोदाहृतश्रुते: । ब्रह्मणो युगपत् स्वभुजाविव वेदोक्ता: सर्वे गुणा: प्रतिभासन्ते इति सर्वोपसंहारस्तद्विषय: । तदन्येषां रुद्रादीनां तत्तद्योग्यतानुसारेण प्रतिभासन्त इति सर्ववेदोपसंहारस्तद्विषय इति भाव: ॥ ३ ॥

॥ इति प्राप्त्यधिकरणम् ॥ ३ ॥

---

१. 'तदन्येषां यथायोग्यान्' इत्यपि क्वचित् पाठ: ।

## ॥ ४ ॥ अथ सर्वाभेदाधिकरणम् ॥

### ॐ सर्वाभदादन्यत्रेमे ॐ (३-३-११)

### (फलाधिक्योक्त्या बहुगुणोपसंहारस्य कर्तव्यत्वसमर्थनम्)

अत्र बहुगुणोपसंहारस्य कर्तव्यत्वं समर्थ्यते ।

**सर्व**शब्दोऽत्र बहुपर्यायः । **सर्वेषां** बहूनां गुणानाम् **अभेदात्** अयमुपसंहर्तव्यो नायमुपसंहर्तव्य इति विभागमकृत्वा उपासनात् , बहुगुणोपसंहारेणोपासनादिति यावत् । सर्वगुणयुक्तत्वेनोपासनादित्यर्थः। **अन्यत्र** अल्पगुणोपसंहर्तृफलादन्यत्र विलक्षणफले (इमे) ब्रह्मादयो भवन्ति । अतिशयितफलभाजो भवन्तीत्यर्थः ॥ ४ ॥

(त.दी.) उपसंहारलभ्यफल इति निर्देश्ये अन्यत्रेत्युक्तिः तस्यांनुपसंहारलभ्यत्वसूचनाय । तेन तेनैवालमिति न शङ्क्यम् । 'इमे' इत्युक्तिः तेषां सर्वगुणोपसंहर्तृतया महत्त्वेन महाफलयोग्यतां सूचयितुम् । तेन मानाभावात् तेषां फलातिशयानिर्णय इति न शङ्क्यम् । (पृ.सं.१२१)

### ॥ इति सर्वाभेदाधिकरणम् ॥ ४ ॥

## ॥ ५ ॥ अथाऽनन्दाधिकरणम् ॥

### (अशेषमुमुक्षूपास्यसाधारणगुणकथनम्)

अत्राशेषमुमुक्षूणामुपास्याः साधारणगुणाः निर्णीयन्ते ।

### ॐ आनन्दादयः प्रधानस्य ॐ (३-३-१२)

**(सू.) आनन्दो ज्ञानं सत् आत्मेति चत्वारो गुणाः, प्रधानस्य** मोक्षस्य अर्थे सर्वमुमुक्षूपास्या इत्यर्थः । सर्वेषां मुक्तौ आनन्दज्ञानदुःखाभावानामपेक्षितत्वात् तत्सिद्ध्यै सच्चिदानन्दास्तावदुपास्याः । यत्तु,

आत्मत्वापरपर्यायं स्वामित्वं तदपि स्वसम्बन्धानुस्मरणस्य भगवत्प्रीति-हेतुत्वादुपास्यमिति भावः । तत्रोक्तानन्दादिगुणचतुष्टयनियतिः कर्म-क्षयोत्क्रान्तिमार्गभोगलक्षणचतुर्विधमोक्षवतामेव । तेनाऽत्मत्वमात्रोपा-सकानां मनुष्याणां चतुष्टयाधिकगुणोपासनासमर्थानां ब्रह्मादीनां च सद्भावाद् गुणचतुष्टयोपासनस्य अशेषमुमुक्षुगुणसाधारण्यं कथमिति चोद्यं परास्तम् । आत्मत्वमात्रोपसाकानां 'नोत्क्रामन्ति कदाचन' इति सम्पूर्णमोक्षाभावोक्तेः 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः' (अनु.व्या. ४-१७५३) इति देवानामपि तदभावोक्तेः । अत एव वक्ष्यति भोगपादे तत्त्वप्रकाशिकायाम्- 'न चाऽनन्दादयः प्रधानस्येत्युक्ति-विरोधः । तदुपासनस्य सम्पूर्णमोक्षार्थत्वात्' (तत्त्वप्रकाशिका) इति । ब्रह्मणश्च काम्यानिष्टकर्मणामेवाभावान्न कर्मक्षयरूपो मोक्षस्तस्येति तत्त्वम् । ब्रह्मातिरिक्तानामेव कर्मक्षयाख्यो मोक्ष इत्यालोचनीयं सूरिभिरित्यलम् ॥ ५ ॥

**॥ इत्यानन्दाधिकरणम् ॥ ५ ॥**

(त.दी.) मोक्षस्येति वाच्ये प्रधानस्येत्युक्तिः ' सुखमेव मे स्याद् दुःखं मनागपि मा भूत्' इति निखिलाशास्यत्वेन प्रधाननिर्दोषसुखानुभवरूपत्वात् तस्य तदर्थमेत एवोपास्याः नान्य इति तदुपपादकं सूचयितुम् । 'तं यथा यथोपासते' (ब्र.सू.भा.दी.उ.श्रुतिः) इत्यादेः । (पृ.सं.१२२,१२३)

**॥ ६ ॥ अथ प्रियशिरस्त्वाधिकरणम् ॥**

**(प्रियशिरस्त्वादिगुणानां सर्वोपास्यत्वं नास्तीति निरूपणम्)**

अत्र प्रियशिरस्त्वादीनां साधारण्येनोपास्यत्वं निरस्यते ।

**ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ (३-३-१३)**

(सू.) **प्रियशिरस्त्वादीनां** गुणानाम् **अप्राप्तिः** सर्वोपास्यत्वाऽप्राप्तिः। कुतः ? **हि** यतः **भेदे** 'अथात आनन्दस्य' (ब्र.सू.भा.दी.उ.श्रुतिः) इत्यानन्दश्रुतिसिद्धफलभेदसिध्यर्थम् **उपचयापचयौ** गुणोपासनेऽप्युत्कर्षापकर्षौ, तारतम्यमिति यावत्। सर्वेषामपेक्षितौ, उपासने तारतम्यस्यापेक्षितत्वादिति यावदित्यर्थः ॥ ६ ॥

**॥ इति प्रियशिरस्त्वाधिकरणम् ॥ ६ ॥**

(त.दी.) भेद इत्युक्त्या 'नैव सर्वे गुणाः सर्वैरुपास्यां मुक्तिभेदतः' (ब्र.सू.भा.उ. वाराहवचनम्) इति स्मृतिः सूचिता । अप्राप्तिरित्युक्त्या योग्यताऽपि तावतीति सूचितम्। (पृ.सं.१२५)

**॥ ७ ॥ अथ इतराधिकरणम् ॥**

**(देवादीनां बहुगुणोपासनासमर्थनम्)**

अत्र देवादीनां बहुगुणोपासना समर्थ्यते ।

**ॐ इतरे त्वर्थसामान्यात् ॐ (३.३.१४)**

(सू.) विरिञ्चोपास्यसर्वगुणेभ्यः **इतरे** अर्वाक्तनाः मनुष्योपास्यचतुर्गुणेभ्यश्चेतरे उपरितनाः मध्यमगुणाः देवादिभिः उपसंहर्तव्या एव । कुतः ? **अर्थसामान्यात्** । **अर्थस्य**= तदपेक्ष्यस्य तत्तत्प्राप्यस्य च योग्यफलस्य **सामान्यात्** भाविफलोत्कर्षाज्ञेन च भविष्यत्फलानिर्णयात् कथं तेनोपासनानिर्णय इति शङ्क्यम् । ल्यब्लोपनिमित्तेयं पञ्चमी । स्वप्राप्यफलसाम्यमपेक्ष्य फलानुरोधेनोपसंहार्यगुणान् प्रति योग्यतानिश्चयोपपत्तेः । विरिञ्चस्योपदेशेन योग्यतानिर्णयोपपत्तेः ।

नन्वपरोक्षज्ञानात् पूर्वं सर्वेषां चतुर्मुखोपदेशाभावात् कथमेतदिति चेत् ? सत्यम् । तदन्यस्यापि योग्यताभिज्ञस्य गुरोः तदनुसारिगुण-

नियमोपदेशेन निर्णयाङ्गीकारात् । तथा च श्रुतिः- 'अन्येषु यथायोगं यथा ह्याचार्या आचक्षते' (ब्र.सू.भा.उ.कमठश्रुतिः,पृ.२१९)इत्यादिका । 'तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां नरः' (ब्र.सू.भा.उ. अध्यात्मवचनम्, पृ. २२०) इति स्मृतेश्च । यथा ध्रुवादेर्नारदादिति ध्येयम् ।। ७ ।।

॥ इतीतराधिकरणम् ॥ ७ ॥

(त.टी.) अर्थादित्येव पूर्तौ सामान्यादित्युक्तिः फलोपासनयोः साम्यादिति युक्तिं सूचयितुम्। (पृ.सं.१२६)

## ॥ ८ ॥ अथाऽध्यानाधिकरणम् ॥

### (गुणोपसंहारानुपसंहारयोः प्रमाणोक्त्या दृढीकरणम्)

अत्र पुनः गुणोपसंहारानुपसंहारयोः प्रमाणोक्त्या दृढीकरणाय समर्थनं क्रियते ।

### ॐ आध्यानाय प्रयोजनाभावात् ॐ (३-३-१५)

(सू.) भगवन्नामभूतसर्वविद्यासु गुणाः **आध्यानाय** सम्यग् ध्यानाय अशेषगुणोपसंहारपूर्वकध्यानायोच्यन्ते। कुतः ? **प्रयोजनाभावात्** सम्यक् ध्यानं विना प्रयोजनान्तराभावादित्यर्थः । 'ज्ञानार्थमथ ध्यानार्थं'[१] इति श्रुतिरिति भावः । ननु तत्रैव 'श्रवणाच्चैव पाठाद् वा' इति गुणाभिधानस्य श्रवणपाठयोरपि प्रयोजनत्वाभिधानात् कथं प्रयोजनान्तराभाव इति चेन्न । श्रवणादेर्ज्ञानार्थत्वेन मुख्य-

---

८९४. 'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा। ज्ञातव्याश्चैव ध्यातव्या गुणाः सर्वेऽप्यतो हरेः ।। नान्यत् प्रयोजनं ज्ञानाद्ध्यानात् कर्मकृतेरपि । श्रवणाच्चाथ पाठाद्वा विद्याभिः किञ्चिदिष्यते ।।' इति (ब्र.सू.भा.उ. परमसंहितावचनम्, पृ. १५६,१५७)

प्रयोजनत्वाभावात् । ज्ञानस्य च ध्यानोपयोगितयैव प्रयोजनत्वेन ध्यानवन्मुख्यत्वाभावादिति ज्ञेयम् ।

(त.दी.) फलेति वाच्ये प्रयोजनेत्युक्तिः गुणोक्तिं प्रति ध्यानस्य प्रयोजकत्व-सूचनाय। 'सञ्ज्ञातः' (ब्र.सू. ३.३.९) इति गुणोक्तेरुपसंहारार्थत्वोक्तावपि गुणानां विप्रकीर्णतयोक्तत्वात् न तस्या इदं फलमित्याशङ्क्य तादृशानामुपसंहृत्य ध्याने फलातिशयोऽस्तीति आङा सूचयित्वा विप्रकीर्णोक्तेरन्यथासिद्धिं वक्तुं चायमिति। ( पृ.सं. १२८)

एवं सर्वगुणोपसंहारं चतुर्मुखाधिकारिकत्वेन प्राधान्यात् प्रमाणेन समर्थ्य तदितराधिकारिकसर्वगुणानुपसंहारं च प्रमाणेन समर्थयति -

**ॐ आत्मशब्दाच्च ॐ (३-३- १६)**

(सू.) गुणान्तरव्यावृत्तिपूर्वकमात्मत्वोपासनविधायिकायाः 'आत्मेत्येवोपासीत'(बृ.उ.३.४.७) इति श्रुतेरशेषगुणानुपसंहारश्चेत्यर्थः । ब्रह्मादीनुत्तमाधिकारिणः प्रत्ययोगव्यवच्छेदकत्वेऽपि तदितराधमाधिकारिणः प्रति अन्ययोगव्यवच्छेदकत्वम् आत्मेत्येवेत्यवधारणस्यास्तीत्युक्तं भवति ॥ ८ ॥

**॥ इत्याध्यानाधिकरणम् ॥ ८ ॥**

(त.दी.) मनोतामन्त्र इत्यादिवदात्मपदयुक्तः शब्दः आत्मशब्द इति वा विग्रहः। अन्यथात्वमित्यत्रायोगव्यावृत्त्यर्थत्वेऽभिमतेऽप्यत्र चतुर्गुणोपास्तावप्यशक्तान् प्रति प्राप्तेश्चेत्यत्रोक्तदिशा तत्तद्योग्यतानुसारेण तथा तथा प्रतीतेरविरोधः । (पृ.सं.१२९.१३०)

## ॥ ९ ॥ अथाऽत्मगृहीत्यधिकरणम् ॥

### (उपासनायामानन्दादिचतुर्गुणनियतिसमर्थनम्)

अत्राऽनन्दादिनियतिः समर्थ्यते ।

## ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ (३-३- १७)

(सू.) **आत्म**शब्देनाऽनन्दादीनामपि **गृहीतिः** ग्रहणम् उक्तिरिति यावत् । अभ्युपेया । **इतरवत्** 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २.१) 'विज्ञानमानन्दं ब्रह्म' (बृ.उ. ५.९.२८) इतिवत् । यथा सत्यज्ञानादिवाक्ये आनन्दादेर्गृहीतिः विज्ञानादिवाक्ये सत्यत्वादेर्गृहीतिस्तद्वत् । कुतः? **उत्तरात्** 'अत्र ह्येते सर्व एकीभवन्ति' (बृ.उ.३.४.७) इत्युत्तरवाक्य-बलादित्यर्थः ॥ ९ ॥

### ॥ इत्यात्मगृहीत्यधिकरणम् ॥ ९ ॥

(त.दी.) अत्र 'प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः' (बृ.उ.) इत्यादिपूर्ववाक्योक्तगुणान् 'एते' इति परामृश्या-त्राऽत्मत्वगुणे एकीभवन्ति अन्तर्भवन्तीत्युक्तेः । प्राणशब्दस्य च 'प्रकृष्टानन्द-रूपत्वात् प्राणः' इत्युक्त्या प्राणत्वस्य आनन्दत्वात् प्रेति निर्दोषत्वलाभात्, मन इत्यादिना ज्ञानोक्तेरिति भावः । (पृ.सं.१३१,१३२)

## ॥ १० ॥ अथान्वयाधिकरणम् ॥

### (आत्मशब्दोक्तगुणोपासनस्य सर्वैः कर्तव्यत्वोक्तिः)

अत्राऽत्मशब्दस्य सर्वोपासकान् प्रति तत्तद्योग्यगुणाभिधायक-त्वेनाऽत्मशब्दोक्तगुणोपासनस्य सर्वैः कर्तव्यत्वमुच्यते ।

## ॐ अन्वयादिति चेत् स्यादवधारणात् ॐ (३-३-१८)

(सू.) सर्वगुणानामात्मशब्देन **अन्वयात्** सम्बन्धात् । सद्भावादिति यावत् । तथा चाऽत्मशब्दस्य सर्वगुणाभिधायकत्वान्नास्यानुपसंहारे प्रमाणत्व**मिति चेद्**, उच्यते । तर्हि स्याद् ब्रह्मादीन् प्रत्येव नान्यान् प्रतीति शेषः । सर्वगुणाभिधायकत्वमात्मशब्दस्य **स्यादेव** । तत्तु ब्रह्मादीन्

प्रत्येवेतरान् प्रति तु चतुर्गुणाभिधायकत्वम्, न सर्वगुणाभिधायकत्वम् । कुतः? **अवधारणात्** अन्ययोगव्यवच्छेदकपरावधारणादित्यर्थः । तादृशावधारणं तु ब्रह्मादीनेवाधिकरोति । तथाऽयोगव्यवच्छेदकपरस्त्वितरान् । न त्वेतावता तेषां बहुगुणोपासनाप्रसङ्गः । आत्मशब्द-प्रकाशितगुणवत्तया 'उपासीतैव' इति आत्मशब्दप्रकाशितयावद्गुणोपासनाङ्गीकारात् । तेषां चाऽत्मशब्दप्रकाशितगुणानां चतुष्ट्वादेव इति हृदयम् ।। १० ।।

**।। इत्यन्वयाधिकरणम् ।। १० ।।**

## ।। ११ ।। अथ कार्याधिकरणम् ।।

**(अलौकिकगुणोपसंहारसमर्थनम्)**

अत्रालौकिकगुणोपसंहारः समर्थ्यते ।

**ॐ कार्याख्यानादपूर्वं ॐ (३-३-१९)**

**(सू.) कार्याख्यानात्** ध्यानकार्यस्य मोक्षस्यालौकिकत्वाख्यानात् **अपूर्वं** लोकविलक्षणमेव गुणजातमुपास्यमित्यर्थः । फलानुसारिध्यानस्य कर्तव्यत्वादिति भावः ।

**(लाघवात् 'आख्यानादपूर्वम्' इत्यकथने कारणवर्णनम्)**

अत्र यद्यपि 'आख्यानादपूर्वम्' इत्येव वाच्यम् । लाघवात् । गुणानामलौकिकत्वाभिधानाद् अलौकिका एव ध्येया इत्यर्थसम्भवात् । नतु तत्कार्यस्य मोक्षस्यालौकिकत्वाभिधानमाश्रयितव्यम् । तथाऽपि 'अलौकिकास्तस्य गुणा ह्युपास्याः'[१] इति श्रुतौ गुणानामलौकित्वं

१. 'अलौकिकास्तस्य गुणा ह्युपास्या अलौकिकं मुक्तिकार्यं यतोऽस्य' इति (ब्र.सू.भा.उ.श्रुतिः, पृ.१६२)

प्रतिज्ञाय कार्यालौकिकत्वं हेतुतयोक्तमिति श्रुत्यनुसारिणा सूत्रकृताऽपि तथोक्तम् ।

(अलौकिकस्य कथं ध्यानमित्याक्षेपः तत्समाधानं च)

ननु 'श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानमित्यङ्गीकारात्' (न्या.सु.) इति सुधोक्तेर्मानसवासनामयस्य वस्तुनो मनसाऽवलोकनस्यैव ध्यानत्वाद् वासनामयस्य च लौकिकत्वाद् अलौकिकस्य ध्यानं कथमिति चेत्, न। इदमेवाऽशङ्क्याभिहितमभिनवचन्द्रिकायाम् । अलौकिकस्य ध्यानमित्यनेनालौकिकार्थानुभवजनितवासनोपादानकपदार्थावलोकनस्यैव विवक्षितत्वात् । भवति च वासनोपादानकपदार्थध्यानं वासनामयमुल्लिखदपि लिङ्गज्ञानं लिङ्गिविषयमिव वाक्यज्ञानं वाक्यार्थविषयमिवालौकिकार्थविषयं च । तदुक्तम्- तदुपासनं च भवति । प्रतिमोपासनं यथेतीति । अत एव 'क्रियामानसवत्' (ब्र.सू. ३.३.४६) इति सूत्रस्य 'नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः' (ब्र.सू.भा.उ. नारायणतन्त्रवचनम्, पृ. १६) इति प्रमाणस्य च अविच्छिन्नपरोक्षज्ञानसन्ततिर्ध्यानमिति 'प्रज्ञान्तरपृथक्त्ववत्'[१] इति द्वात्रिंशाधिकरणोपासनापादीयवक्ष्यमाणतत्त्वप्रकाशिकायाश्च नान्योन्यं विरोध इति द्रष्टव्यम् ।। ११ ।।

।। इति कार्याधिकरणम् ।। ११ ।।

## ।। १२ ।। अथ समानाधिकरणम् ।।

('वाण्याः सर्वगुणोपसंहारेऽपि क्रियाणां न विशेषेण' इति निरूपणम्)

वाण्याः सर्वगुणोपसंहारेऽपि क्रियाणां न विशेषेण[२], किन्तु सामान्येनेति समर्थ्यते ।

---

१. 'प्रज्ञान्तरपृथक्त्ववद् दृष्टिश्च तदुक्तम्' (ब्र.सू. ३.३.५२)

२. 'विशेषणम्' इति क.पाठः ।

ॐ **समान एवं चाभेदात्** ॐ (३-३- २०)

(सू.) चशब्द एवार्थे। त्रिविक्रमत्वादिक्रियाणामपूर्वत्वेऽपि **समान एव** योग्यक्रियाविषय एवोपसंहारः। एवकारव्यावर्त्यमाह- **एवं** ब्रह्मवत् **अभेदात्** त्रिविक्रमत्वादीनां भेदेन पृथक्त्वेनोपसंहारस्याभावादित्यर्थः । यद्वा, एवं चेशधर्माणामपूर्वत्वेऽपि समाने च योग्यविषये एवोपसंहारः कार्यो न त्वयोग्ये । 'यथाशक्ति स्मृतान् धात्रा गुणान् विष्णोः सरस्वती' (न्या.वि.उ.स्मृतिः, पृ. १४८) इत्यादिस्मृत्या वाण्याश्च सर्वगुणे क्रियासामान्ये च योग्यत्वम्, नतु विरिञ्चवत् क्रियाविशेष इत्याशयः । तर्हि तस्यास्त्रिविक्रमत्वादिध्यानं न स्यादित्यत उक्तम्- **अभेदात्**।। नित्यविक्रान्त्यादिसामान्यक्रियास्वन्तर्भावादिति योजना । तयोः समविषमोपासनाभ्यां तादृक् फलं भवतीत्यर्थः ।

(त.दी.) समान इत्युक्तिर्योग्यताफलाभ्यां सामान्यमुपसंहारस्य द्योतयितुम्। तेन वाणीवाणीशयोः स्थानैक्यगुणतारतम्याभ्यां समविषमफलत्वेन तद्धेतूपासनस्यापि गुणेषु द्वयोः साम्यं , क्रियासु सामन्यविशेषाभ्यां विषमत्वं युक्तमिति भावः। (पृ.सं.१३६,१३७)

ननु भवेदेवं ब्रह्माणीब्रह्मणोः समविषमोपासनं, यदि ब्रह्मणः सदा त्रिविक्रमत्वादिक्रियोपसंहारो भवेत्। न चासौ युज्यते। तासामित्यनेन ध्यानकालेऽभावात्। अविद्यमानस्य च ध्यानायोगादित्यत आह -

ॐ **सम्बन्धादेवमन्यत्रापि** ॐ (३-३- २१)

(सू.) **एवं** गुणोपसंहारवत् **अन्यत्रापि** त्रिविक्रमत्वादिक्रियाविषयेऽपि हिरण्यगर्भस्य सर्वदोपसंहारो युज्यते । कथम् ? **सम्बन्धात्** भगवत्तादात्म्यसम्बन्धात् , तासां नित्यत्वादित्यर्थः । 'गुणक्रियादयो

विष्णोः स्वरूपं नान्यदिष्यते' इत्यादेः क्रियायाः स्वरूपत्वं ज्ञेयम् ॥१२॥

॥ इति समानाधिकरणम् ॥ १२ ॥

(त.दी.) नित्यत्वादिति वाच्ये एवमुक्तिस्तत्र युक्तिसूचनाय। सम्बन्धादित्युक्तिः तादात्म्येऽपि विशेषात् क्रिया तद्वत्त्वं व्यक्त्यात्मना कादाचित्कत्वमित्यादि सूचयितुम्। (पृ.सं.१३८)

## ॥ १३ ॥ अथ नवाधिकरणम् ॥

### (आत्मशब्दः तत्तदधिकारियोग्यगुणाभिधायकः)

अत्रात्मशब्दोक्तगुणोपासनस्य सर्वैः कर्तव्यत्वं समर्थ्यते ।

### ॐ न वा विशेषात् ॐ (३-३-२२)

(सू.) आत्मशब्दः सर्वान् प्रति सर्वगुणाभिधायको **न वा** । कुतः ? **विशेषात्** । अधिकारिसामर्थ्यविशेषादित्यर्थः । अधिकारिविशेषमपेक्ष्य तत्त्वमस्यादिवाक्यस्य प्रमाप्रमाजनकत्वात् । सर्वगुणाभिधायकस्याऽत्मशब्दस्याधिकारिविशेषानुरोधेन तत्तद्योग्यतामपेक्ष्य गुणबोधकत्वात् तेन यावन्तो गुणा युगपद् भान्ति तेन तावन्तो ध्येया इति नाव्यवस्थितिरिति भावः ।

एवं युक्तिमभिधाय तदुपोद्बलकश्रुतिमाह-

### ॐ दर्शयति च ॐ (३-३-२३)

(सू.) 'सर्वगुणानात्मशब्दो[१] ब्रवीति ब्रह्मादीनामितरेषां न चैव' (ब्र.सू.भा.उ. भाल्लवेयश्रुतिः, पृ.१६७) इति श्रुतिश्च **दर्शयति** । न केवलं

---

१. 'सर्वान् गुणान् आत्मशब्दो' इति क्वचित् पाठः ।

योग्यतामात्रादिति चार्थः । स सर्वान् स्वयोग्यान् ब्रवीति युगपत् प्रकाशयति इति श्रुत्यर्थः ॥ १३ ॥

॥ इति नवाधिकरणम् ॥ १३ ॥

## ॥ १४ ॥ अथ सम्भृत्यधिकरणम् ॥

### (सम्भृत्यादिगुणा न सर्वोपास्याः)

अत्र सम्भृत्यादिगुणानां सर्वोपास्यत्वाभावोऽभिधीयते ।

**ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ (३-३-२४)**

**(सू.) अपि**पदान्नञः समाकर्षः । **च**शब्द एवार्थः । **सम्भृतिद्युव्याप्ती** सम्भृतिः सम्यग् भरणं द्युव्याप्तिः प्रकाशव्याप्तिः ते **अपि** न सर्वोपास्ये, किन्तु देवोपास्ये एव । कुतः? **अतश्च** अधिकारि-योग्यतायां विशेषसद्भावादेवेत्यर्थः । सम्भृतिद्युव्याप्ती नचात इति नञः प्रयोगस्यैव अपि-पदान्नञोऽनुवृत्तिज्ञापनाद् वरत्वादपिपदं व्यर्थमित्याशङ्का-परिहारस्तु **अभिनवे**[1] स्फुटः ॥ १४ ॥

॥ इति सम्भृत्यधिकरणम् ॥ १४ ॥

---

१. ननु- नञोऽनुवृत्तेः सापेक्षत्वादेव ज्ञातुं शक्यत्वादपिपदं व्यर्थम्, किञ्चापिपदात् नञः समाकर्षादपि सूत्रे नञः प्रयोग एव वरः, प्रतिपत्तिलाघवात्, नञः प्रयोगे तु झटिति नञर्थप्रतिपत्तिः, अपिपदप्रयोगे तु नञोऽनुवृत्तिप्रतिपत्तिद्वारा तदर्थ-प्रतिपत्तिरिति । अपि च अपिशब्दान्नञः समाकर्ष इति कथमिदं विज्ञायते, किम् अपिशब्दाल्लाङ्गलादिना तृणादीनामिव नञः समाकर्षो भवति, उत अन्येनैव जायमानो नञः समाकर्षः प्रदीपादिना तृणादीनां समाकर्ष इव विज्ञायत इति । यद्याद्यः- न तर्हि राजानो हस्त्यश्वं बिभृयुः अपीत्येवोक्त्वा परकीयराज्यादेः समाकर्षकर्तारो भवेयुः नहि अपिशब्दात् नञः समाकर्षो भवति, न राज्यादेरिति

(त.दी.) योग्यतैवोपास्तिनियमे प्रयोजिका न फलापेक्षेति द्योतयितुमेवार्थश्च-शब्दः। तेन मुक्तौ स्वावरभरणप्रकाशव्याप्त्योः सर्वाशास्यत्वात् सर्वोपास्यत्वं तयोरिति न शङ्क्यम्। तत्त्वप्रदीपे तु अपिः वीर्यौदार्यादिसमुच्चायकः। अत एव द्वित्वमात्रव्यावृत्त्यर्थं सम्भृतिद्युव्याप्त्यपीत्यप्रगह्य निर्देशः। सम्भृतिव्याप्ति-वीर्यैश्वर्यादयो देवोपास्या इत्युक्तम्। तत्पक्षे न समाहारः। (पृ.सं.१४२)

---

राज्ञामाज्ञाऽस्ति। द्वितीयेऽपि वक्तव्यम्, किं व्याप्तिबलेन, उताऽन्यथा। नाऽद्यः-तदभावात्। द्वितीयेऽपि वक्तव्यम्, किं व्याप्तिबलेन, उतान्यथा। नाऽद्यः-तदभावात्। द्वितीये तु- अतिप्रसङ्ग इति चेत्, सत्यम् - सापेक्षत्वात् नञोऽनु-वृत्तिर्ज्ञातुं शक्यते, तथाऽपि- नापिपदवैयर्थ्यम्, अन्तरङ्गज्ञापकाभाव एव बहिरङ्गस्यानुसर्तव्यत्वात्। अन्यथा - क्वापि वाक्येऽहमादिशब्दप्रयोगो न स्यात्। उत्तमपुरुषप्रयोगादिनैव तस्य सर्वत्र ज्ञातुं शक्यत्वात्। सूत्रकारा हि यस्यानु-वृत्तिमिच्छन्ति तत्र किञ्चिल्लिङ्गमासज्य, तदनुवृत्तिं ज्ञापयन्ति। यथाऽऽह पाणिनिः-'स्वरितेनाधिकार' (१.३.११) इति, यस्य पदस्य बहुष्वनुवृत्तिमिच्छन्ति तत्पदं स्वरितत्वेनोच्चारयन्तिः, यस्य तु क्वचिदेवानुवृत्तिमिच्छन्ति, तस्यानुवृत्तिस्स्थले चशब्दादिप्रयोगेण तद् विशेषयन्ति। यथाऽऽहुः- 'चानुकृष्टं न सर्वत्र' इति। यदत्रोक्तम्- अपिपदप्रयोगेण नञोऽनुवृत्तिज्ञापनात्, नञः प्रयोग एव वरः प्रतिपत्तिलाघवादिति, तन्न- अल्पाक्षरेषु सूत्रेषु शब्दाभावस्यैवानुसर्तव्यत्वेन प्रतिपत्तिलाघवस्याननुसर्तव्यत्वात्। 'सम्भृतिद्युव्याप्तीन चातः' (ब्र.सू.३.३.२४) इति पाठे ईकारो द्विमात्रो नेति व्यञ्जनमर्धमात्रम् अकारस्त्वेकमात्र इति सार्धत्रिमात्रा भवन्ति, 'सम्भृतिद्युव्याप्त्यपिचातः' इति पाठे ईकारादेशो यकारस्त्वर्धमात्रः, अकारस्त्वेकमात्रः, पीति सार्धमात्रमिति त्रिमात्रा भवन्ति। एवञ्चास्मिन्, पाठेऽर्धमात्रालाघवं भवति। सूत्रकारास्तु - मात्रालाघवं पुत्रोत्सवादपि बहुमन्यन्ते, ज्ञापकपक्षस्यैवाङ्गीकृतत्वेन न कारकपक्षोक्तदोषः। इति (अभिनवचन्द्रिका) पृ.सं.१०८-१०९

## ॥ १५ ॥ अथ पुरुषाधिकरणम् ॥

### (नानास्थानोक्तगुणोपसंहारसमर्थनम्)

अत्र विप्रकीर्णनानास्थानोक्तस्वयोग्यगुणोपसंहारः समर्थ्यते ।

**ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ (३-३-२५)**

(सू.) सर्वविद्योत्तमायामपि **पुरुष**सूक्तशब्दवाच्य**विद्यायामपि इतरेषां** केषाञ्चिद् गुणानाम् **अनाम्नानाच्च** अनुक्तत्वात् केषाञ्चिदेव गुणानां पठितत्वाच्च सर्वतो गुणोपसंहारः कार्य इत्यर्थः ।

॥ इति पुरुषाधिकरणम् ॥ १५ ॥

(त.दी.) किमु विद्यान्तरेण सर्वानाम्नानमिति कैमुत्यसूचनार्थोऽपिशब्दः । (पृ.सं.१४३)

## ॥ १६ ॥ अथ वेधाधिकरणम् ॥

### (भेदनादिगुणा न सर्वोपास्याः)

अत्र भेदनादिगुणानां सर्वानुपास्यत्वमुच्यते ।

**ॐ वेधाद्यर्थभेदात् ॐ (३-३-२६ )**

(सू.) सम्भृतीति सूत्रेऽपिपदानुकृष्टो नञ् मण्डूक प्लुत्याऽत्रानुवर्तते । 'अग्ने त्वचं यातुधानस्य भिन्धि तं प्रत्यञ्चमर्चिषा विध्य' (ऋ.१०.८७.४) इत्युक्त**वेध**न**भेद**नादिगुणजातं न सर्वोपास्यम् । कुतः? **अर्थस्य** वेधाद्युपासनफलस्य हिंसादेः (दुष्टजनहिंसाच्छेदन) **भेदात्** यत्यादियोग्यफलविलक्षणत्वादित्यर्थः ॥ १६ ॥

॥ इति वेधाद्यधिकरणम् ॥ १६ ॥

## ॥ १७ ॥ अथ हान्यधिकरणम् ॥

(मुक्तावप्युपासनादिकमस्तीति निरूपणम्)

अत्र मुक्तावुपासनावृत्तिः समर्थ्यते ।

**ॐ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ॐ (३-३-२७)**

(सू.) तुशब्द एवार्थः । **स्तुत्युपगानवदेवेति** सम्बन्धः । तथा च **हानौ** संसारहानिरूपे मोक्षे स्वेच्छया भगवदुपासनादि अस्त्येवेति शेषः । **कुशैः कुशग्रहणेन आच्छन्देन** स्वेच्छया, नियतब्रह्मयज्ञानन्तरमपि ब्राह्मणैः क्रियमाणस्तुत्युपगानवत् मन्त्रसामाध्ययनवत् । नियत-ब्रह्मयज्ञानन्तरमपि द्विजन्मनां स्वेच्छयैव कुशधारणेन मन्त्राध्ययनं यथा तथेत्यर्थः । मुक्तानाममस्ति चेदुपासनं तत् स्वेच्छया कुतः? विधित एव किं न स्यात्? इत्यत आह - **उपायनशब्दशेषत्वात् उप** समीपे अयनं गमनं , मोक्षे इति यावत् । तस्य **शब्दः** 'ब्रह्मविदाप्नोति परम्' (तै.उ. २.१.१) इति वाक्यं **तच्छेषत्वात्** उपासनाविधीनामित्यक्ष-रार्थः । ब्रह्मज्ञानेन मोक्ष इत्युक्ते तत् कथं भवेदित्यपेक्षायां तादर्थ्येन ह्युपासनाविधयः प्रवृत्ताः । मोक्षसिद्ध्यर्थं प्रवृत्ताः विधयः कथं मुक्तविषया भवेयुरिति भावः । भवेदियं चिन्ता यदि मुक्तस्योपासनमेव स्यात् । तदेव कुत इत्यतः **तदुक्तम्** । तत् मुक्तकर्तृकोपासनं 'एतत् साम गायन्नास्ते' (तै. ३-१०) इति श्रुतावुक्तमित्यर्थः । सर्वत्र समत्वात् साम ब्रह्म, गायन् तद्विषयकोपासनं कुर्वन्नास्ते इति श्रुत्यर्थः ।

(त.दी.) हानावित्युक्तिःसर्वक्लेशबन्धत्यागो मुक्तिरिति तत्स्वरूपोक्त्यर्था । साऽपि स्वेच्छयेत्यस्योपासनार्था । उपायनेत्युक्तिरपि अयनं ज्ञानं तस्य उप समीपे गमनम् उपायनमिति मुक्तेर्ज्ञानसाध्यत्वोक्त्यर्था । सा च तच्छेषत्वम्

उक्तदिशा व्यक्तीकर्तुम्। सामीप्यादिरूपत्वं वक्तुमेवमुक्तिरित्येके। आबन्धहानेर्विधितः, हानौ तु स्वेच्छयेति विशेषद्योतकस्तुरिति तत्त्वप्रदीपे भाति। तदुक्तमित्यस्य तत् स्वेच्छयोपासनं 'मुक्ता अपि हि कुर्वन्ति' (ब्र.सू.भा.उ. ब्रह्मतर्कवचनम् - पृ.सं.१७४) इति स्मृतावुक्तमिति वृत्यन्तरं च ध्येयम्। (पृ.सं.१४७,१४८)

ननु मुक्तस्याविधिबन्धेनोपासनाभावेऽपि स्वेच्छया कुतः। अनिष्टपरिहारार्थं किं न स्यादित्यत आह -

**ॐ साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॐ (३-३-२८)**

**(सू.) साम्पराये** मोक्षे तर्तव्यस्यानिष्टस्याभावात् मुक्तकर्तृकमुपासनं स्वेच्छयैवेत्यङ्गीकार्यम् । **तथा [1]तर्तव्याभावात् हि** यतः **अन्ये** शाखिनः 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' (बृ.उ. ६.३.२२, पृ.१७६) इति **पठन्तीत्यर्थः**। सर्वशोकान् तीर्णः सन् हृदयस्य सर्वहृद्गतस्य विष्णोः भृत्यो भवतीति श्रुत्यर्थः।

**('साम्पराये' इत्यस्य सार्थक्य कथनम्)**

यद्यप्यत्र सूत्रे हानाविति पूर्वसूत्रादनुवृत्तिः सम्भवति। तथाऽपि तद्विवरणार्थं पुनः साम्पराये इत्युक्तमिति ध्येयम् ॥ १७ ॥

॥ इति हान्यधिकरणम् ॥ १७ ॥

## ॥ १८ ॥ अथ छन्दाधिकरणम् ॥

**(मुक्तानां कर्मणि नियमाभावसमर्थनम्)**

अत्र प्रासङ्गिको मुक्तानां कर्मणि नियमाभावः समर्थ्यते।

**ॐ छन्दत उभयाविरोधात् ॐ (३-३- २९)**

---

१. 'तर्तव्याभावम्' इति क.पाठः।

(सू.) अविरोधोऽभावः । तथा च न मुक्तानां कर्मणि नियमः । किन्तु **छन्दतः** स्वेच्छया । कदाचित् कर्म कुर्वन्ति कदाचिन्न कुर्वन्ति । कुतः ? **उभयाविरोधात्** कर्मकरणाकरणयोर्विधिबन्धप्रत्यवाययोरभावादित्यर्थः। ननु मुक्तानां विधिबन्धप्रत्यवाययोरभाव एव कुतः? येन कर्मानियमः स्यादित्यत आह -

**ॐ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॐ** (३-३- ३०)

(सू.) न मुक्तानां विधिबन्धप्रत्यवायौ विद्येते । कुतः ? **हि** यस्मात् **उभयथा** विधिबन्ध-प्रत्यवाययोरभावेनैव । **गतेः** ईशप्राप्तिरूपमुक्तेः **अर्थवत्त्वं** पुरुषार्थवत्त्वं **अन्यथा** विधिबन्धप्रत्यवायित्वे संसारसमान-धर्मत्वापत्त्या मुक्तत्वविरोधः, मुक्तत्वाभावः स्यादित्यर्थः ।

(त.दी.) उभयथा खल्विति प्रसिध्यर्थो वा हिशब्दः। गतेरित्युक्तिः न क्लेशहानिरूपैव मुक्तिः किन्त्वीशगतिरूपा चेति द्योतयितुम्। (पृ.सं.१५२)

[१]ननु न मुक्ता कर्मकरणनियतिमन्त : तत्करणाकरणयोर्विधि-बन्धादिरहितस्यापीश्वरस्य तत्करणनियमदर्शनेन व्यभिचारादित्यतो निश्चायकं प्रमाणमाह -

**ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ** (३-३- ३१)

(सू.) स्वेच्छया कदाचित् कुर्वन्ति कदाचिन्नेत्येवं भावः मुक्तानाम् **उपपन्नः** । **तल्लक्षणस्य** परम्परया कर्मफलस्य **अर्थस्य** मोक्षस्य **उपलब्धेः** प्राप्तत्वात् । फलप्राप्त्यनन्तरं साधनस्यानावश्यकत्वात् । **लोकवत्** । यथा लोके विष्णुक्रमणेष्टिं कृत्वा समापितयागो यजमानः यागविधिपूर्ति-लक्षणफलसाधनं विष्णुक्रमणं स्वेच्छया करोति न वा यागादौ

१. 'अतो' इति क. पाठः ।

क्रियमाणस्य विष्णुक्रमणस्य यागावसाने कृताकृतत्वं यथा तद्वदित्यर्थः। विष्णुक्रमणशब्दवाच्यादेव यात्रेति **सत्यनाथस्वामिनः**। विष्णुमुद्दिश्य क्रियमाणं कर्म विष्णुक्रमणमित्यन्ये । मुक्ताः न कर्मनियमवन्तः विशेषहेत्वभावे सति प्राप्ततत्फलत्वाद् यजमानवदित्यनुमानमुक्तं भवति ॥ १८ ॥

॥ इति छन्दाधिकरणम् ॥ १८ ॥

**(त.दी.)** तदर्थेत्येव पूर्तिविमुक्तिः मुक्तौ कर्मणः परम्परया हेतुत्वमिति द्योतनाय । तद्धेतुकेत्यनुक्त्वा लक्षणेत्युक्तिरपि फलस्य स्वप्राप्त्यनन्तरं पुनः साधनानुष्ठाननियमनिवारकत्वं लक्षणमिति सूचयितुम्। (पृ.सं.१५३)

## ॥ १९ ॥ अथानियमाधिकरणम् ॥

### (ब्रह्मज्ञानिनां नियमेन मोक्षो भवतीति निरूपणम्)

उपासाजनितज्ञानिनां मोक्षनियमः साध्यते ।

**ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्यां ॐ** (३-३-३२)

**(सू.) सर्वेषां** प्राप्तज्ञानानां **अनियमः** उपासनवत् ज्ञानिनामपि केषाञ्चिन्मोक्षः केषाञ्चिन्नेति नियमो व्यवस्था नास्ति । केषाञ्चिदेव ज्ञानिनां मोक्षो न सर्वेषामिति वदन् प्रष्टव्यः । किं बाधकसद्भावात् सर्वेषां न मोक्ष इत्युच्यते उत साधकाभावात् । नाऽद्य इत्याह- **अविरोधात्**। सर्वेषामनियमेनोपसंहारपूर्वकोपासने 'सर्वे गुणाः ब्रह्मणैव ह्युपास्याः'[1] इति निषेधकप्रमाणविरोधवद् अत्र तद्विरोधाभावात्। नापि द्वितीय इत्याह- **शब्दानुमानाभ्यां** 'न कश्चिद् ब्रह्मवित् सृतिमनुभवति

१. 'सर्वे गुणाः ब्रह्मणैव ह्युपास्याः नान्यैर्देवैः किमु सर्वैर्मनुष्यैः' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. १८१)

मुक्तो ह्येवैष भवति'[१] इति श्रुतेः विप्रतिपन्ना ज्ञानिनः मोक्षवन्तः ज्ञानित्वात् सम्प्रतिपन्नवदित्यनुमानाच्चेत्यर्थः ॥ १९ ॥

॥ इत्यनियमाधिकरणम् ॥ १९ ॥

(त.दी.) उपसंहारानुमानतौल्यनिरासायास्य बाधकशून्यत्वश्रुतिमूले वक्तुं पश्चादुक्तिः । बाधकाभावसाधकयोः द्वयोरप्युक्तिः ज्ञानिनामपि केषाञ्चित् जिज्ञासूनामुपसंहार इवायोग्यत्वं न शङ्क्यम् । ताभ्यां तदभावनिश्चयादिति सूचयितुम् । उपसंहारवैषम्यं वक्तुमेवानियम इत्युक्तिः । अन्यथा नियम इत्यवक्ष्यत् । (पृ.सं.१५६)

## ॥ २० ॥ अथ यावदधिकरणम् ॥

### (उपासनायां योग्यतानियमसमर्थनम्)

अत्रोपासने योग्यतानियमः समर्थ्यते ।

**ॐ यावदधिकारमवस्थितिराधिकारिकाणां ॐ** (३-३-३३)

(सू.) **आधिकारिके**ति ब्रह्मादिपुरुषविशेषसञ्ज्ञा । **आधिकारिकाणां** (अधिकारो योग्यता तदनुसार्यनुष्ठानं शीलं योग्यता येषां ते आधिकारिकास्तेषाम्) ब्रह्मादीनां मुक्तावानन्दादिगुणतारतम्येन **अवस्थितिः यावदधिकारम्** अधिकारानुसारेणैव, नतूपासनाप्रयत्नतारतम्येन । येन प्रागधिकारनियमो न स्यात् । मुक्तावानन्दतारतम्यस्य चोपासनाधिकारनियमानुसारित्वमित्यर्थः । मुक्तौ सुखादितारतम्यस्य प्राक्तनयोग्यतातारम्यैकनिबन्धनत्वात् । तदभावे तन्न स्यात् । प्रयत्नतारतम्यस्यापि तदाश्रयत्वात् । '[२]अधिकाराधिको यत्नः' (न्या.वि.उ. श्रुतिः, पृ.१४९) इति स्मृतेरिति भावः ।

---

१. 'न कश्चिद् ब्रह्मवित् सृतिमनुभवति मुक्तो ह्येवैष भवति तस्मादाहुः सृतिहेति' इति (ब्र.सू.भा.उ. कौण्डिन्यश्रुतिः, पृ.१८१,१८२)

२. 'स्वाधिकाराधिको यत्नः' इति ह.पाठे ।

(त.दी.) तदेकायत्तत्वं द्योतयितुं समासेन निर्देशः। संसारेऽपि यथाधिकारमवस्थितिसत्त्वेऽपि मुक्तावित्युक्तिः संसारे विक्षेपवशाद् योग्यतानुसारित्वम् अवस्थितेः किञ्चिद् विहन्यते, हानौ तु नेति सूचयितुम्। आधिकारिकाणामित्युक्तिः अधिकाराधिको यत्नो न तेष्विति सूचनाय। (पृ.सं.१५८,१५९)

ननु मुक्तानामानन्दतारतम्यमेव नोपपद्यते। येनोपासनाधिकारनियमः स्यात्। असमत्वे मुक्तानां परस्परविरोधप्राप्तेर्लौकिकपुरुषवदित्यत आह-

**ॐ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॐ (३-३-३४)**

(सू.) **अक्षरधियां त्वविरोध** इत्यर्थगर्भम्। अक्षरधीत्वात् ब्रह्मधीत्वाद् विषयलम्पटत्वाभावात् **सामान्यतद्भावाभ्यां** तु मत्सरादिदोषाभावसाम्यात्, निर्दोषत्वादिति यावत्। तद्भावात् उत्तमेभ्योऽन्येषां भावात् परस्परोपकारित्वाच्चेति। उत्तमानामनुग्राहकत्वादिनोपकारित्वम्। अधमानां च ज्ञानोपदेशसहकारितयोत्तमोपकारित्वम्। शिष्याभावे तत्त्वोपदेशायोगात्। तेभ्यः उत्तमेभ्योऽन्येषामधमानां भावात् उत्कर्षभावात् उत्तमानुग्रहप्राप्तपरमैश्वर्यादिमत्त्वाच्चेति यावदिति वा 'अक्षरधियां मुक्तानाम**विरोधः** असमत्वहेतुको विरोधो नास्ति। **औपसदवत्** गुरुप्रसादप्राप्तोत्कर्षयुक्तसच्छिष्यवत्। ते यथा न गुरुद्वेषिणस्तथा। **तदुक्तं** च मुक्तानां विरोधशून्यत्वम्- 'नानाविधा जीवसङ्घा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः'[१] इति तुरश्रुतावुक्तं चेत्यर्थः ॥ २० ॥

**॥ इति यावदधिकरणम् ॥ २० ॥**

---

१. 'नानाविधा जीवसङ्घा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः। दोषाभावाद् गुरुशिष्यादिभावल्लोकेऽपि नासौ किमु तेषां विमुक्तेः ॥' इति (ब्र.सू.भा.उ. तुरश्रुतिः, पृ.१८५)

(त.दी.) अक्षरधियो वैराग्यसाधनत्वात् तेन विषयलम्पटत्वाभावः सूच्यते। अक्षरेत्युक्तिः 'अक्षयगुणगणधाम्नि परमानन्दरूपे परमाश्चर्यरूपे यथेष्टानन्द-भोजके भगवति स्थितधियां कुतोऽसमत्वेन विरोधः? इति तत्त्वप्रदीपोक्त्याऽ-नेकविशेषणसूचनाय। तुरेवार्थे वा। हेतुभिरन्वेति। तेनान्वयव्यतिरेका-भ्यामेतेषामेवाविरोधव्याप्तत्वं न समत्वस्येति सूचयति। लोके विरोधिष्वसमत्वस्य विषयलम्पटत्वादेश्च दर्शनात् कथमेवमित्यतो दृष्टान्तोक्तिः। सामान्यादित्युक्तिः सर्वेषां दोषाभावं वक्तुम्। पूर्वोक्तानन्दतारतम्यश्रुतेः संसारिपरत्वशङ्कनात् तदुक्तमिति प्रमाणोक्तिः। (पृ.सं.१६१,१६२,१६३)

## ॥ २१ ॥ अथ इयदामननाधिकरणम् ॥

### (अधिकारिणां प्राणावसानत्वसमर्थनम्)

अत्राधिकारिणां प्राणावसानत्वं समर्थ्यते।

### ॐ इयदामननात् ॐ (३-३-३५)

(सू.) **इयत्** ब्रह्मोपासकानामधिकारिणां प्राणावसानत्वमेव। न तु प्राणादधिकोऽस्ति। कुतः? 'प्राणो वाव सर्वेभ्यो भूयान् न प्राणाद् भूयान्'[1] इति श्रुतौ तथा **आमननादि**त्यर्थः।

उक्तमाक्षिप्य समाधत्ते -

### ॐ अन्तरा भूतग्रामवदिति चेत् तदुक्तम् ॐ (३-३- ३६)

(सू.) **अन्तरा** परमात्मानं श्रियं च विना प्राणः स्वोत्तमयुक्तः **भूतग्राम-वत्**। भूतसमूहे नामवागादौ यथा एकस्माद् एको विशिष्टो दृष्टः तद्वदिति चेन्नेति शेषः। प्राणः परमेश्वरमन्तरेण स्वोत्तमयुक्तः अधिकारित्वात्

---

१. 'प्राणो वाव सर्वेभ्यो भूयान् न हि प्राणाद् भूयान् प्राणो ह्येष भूयांस्तस्माद् भूयान्नाम' इति (ब्र.सू.भा.उ. कौण्ठरव्यश्रुतिः, पृ. १८६)

नामादिवदित्यनुमानेन न प्राणादुत्तमः साध्यः। कुतः ? **तदुक्तम्** तस्मिन् प्राणादुत्तमाभावे तत् 'प्राणो वाव' (ब्र.सू.भा.उ.कौण्ठरव्यश्रुतिः) इति प्रमाणमुक्तमित्यर्थः । अनुमानं बाधितविषयमिति भावः ।

उक्तमाक्षिप्य समाधत्ते -

**ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशात् ॐ (३-३-३७)**

**(सू.) अन्यथा** 'सर्वेभ्यो भूयान्'[१] इति सर्वशब्दस्यासङ्कुचितसर्वार्थत्वेन प्राणस्य निरुपचरित-सर्वोत्तमत्वे **भेदानुपपत्तिः** सर्वोत्तमद्वयायोगात् श्रुतिसिद्धो यः प्राणेश्वरयोर्भेदस्तस्यानुपपत्तिः प्राणपरमात्मनोरैक्यप्रसङ्ग **इति चेन्न** । सर्वशब्दस्य सङ्कुचितार्थवत्त्वान्न प्राणस्य निरुपचरित-सर्वोत्तमत्वम् । तर्हि कतिपयाधिकारिव्यतिरिक्तसर्वार्थोऽपि किं न स्यादित्यत- **उपदेशवत्**॥ श्रुत्युपदिष्टवत् सर्वशब्दस्य सङ्कोचः। प्राणस्य सर्वाधिकार्युत्तमत्वं ततो महालक्ष्म्यास्ततः परमात्मनोऽधिकत्वस्य श्रुतावुक्तत्वादित्यर्थः ॥ २१ ॥

॥ इतीयदामननाधिकरणम् ॥ २१ ॥

**॥ २२ ॥ अथ व्यतिहाराधिकरणम् ॥**

**(प्राणाद् विष्णोरुत्तमत्वसमर्थनम्)**

अत्र प्राणात् परमेश्वरस्योत्तमत्वं समर्थ्यते ।

**ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ (३-३-३८)**

**(सू.)** 'यः सत्येनातिवदति' (छा.उ. ७-१६) इति सत्यपदोदितस्य विष्णोरुत्तमत्वान्न प्राणस्य सर्वोत्तमत्वम् । न च प्रश्नाद्यभावाद् 'यः

१. 'प्राणो वाव सर्वेभ्यो भूयान् न हि प्राणाद् भूयान् प्राणो ह्येष भूयांस्तस्माद् भूयान्नाम' इति (ब्र.सू.भा.उ. कौण्ठरव्यश्रुतिः, पृ.१८६)

सत्येन' (छा.उ. ७-१६) इति प्राणविशेषणमिति वाच्यम्। यतः **व्यतिहारः** प्रश्नप्रतिवचनाध्याहारः कर्तव्यः। **इतरवत्** 'नाम्नो वाव' (छा.उ. ७.१५) (सनत्कुमारप्रतिवचनवच्च) 'भूयोऽस्तीति तन्मे भगवान् ब्रवीतु' (छा.उ. ७.१५) इति 'वाग् वाव नाम्नो भूयसी' (छा.उ. ७-२-१) इति नामवागादिप्रकरणान्तरवत्। 'एष तु वा अतिवदति यः सत्येनातिवदति' (छा.उ. ७-१६) इति तुशब्देन प्राणात् सत्यं छन्दोगाः **विशिंषन्ति हि** यस्मादित्यर्थः। तथा च तुशब्दस्यैव प्रकरणभेदकस्य सत्वात् प्रश्नप्रतिवचनयोरध्याहारः कार्य इति फलितोऽर्थ इति। 'एष तु वा अतिवदति यः सत्येनातिवदति' (छा.उ. ७-१६) इति प्राणातिवादिनः सकाशात् सत्यादिवादिनं तुना **विशिंषन्ति** इत्यपि योज्यम्। तेन प्राणात् सत्यस्याऽधिक्यज्ञानात् तदन्यथानुपपत्त्याऽध्याहारो ज्ञायत इत्यर्थः ॥ २२ ॥

**॥ इति व्यतिहाराधिकरणम् ॥ २२ ॥**

**(त.दी.)** व्यतीत्युक्तिः विशेषेणातिक्रान्तस्य विशिष्यात्राश्रुतस्य हारः पूर्वप्रकरणादाहरणमिति वा, विशिष्यातिशयितार्थकस्य प्राणादधिकार्थकवाक्यस्याऽहरणमिति वा द्योतयितुमित्याहुः। कथं विशेषणस्य पूर्वप्रकरणभेदकतेत्यतो दृष्टान्तोक्तिः। नामाद्याधिक्यवाचित्वात् प्रश्नादेर्यथा भेदकता तथा तोरप्याधिक्यवाचित्वादिति। (पृ.सं.१७०)

## ॥ २३ ॥ अथ सत्याधिकरणम् ॥

### (प्राणाद् विष्णोरेवोत्तमत्वम्)

अत्र प्राणाद् विष्णोरेवोत्तमत्वं साध्यते।

**ॐ सैव हि सत्यादयः ॐ** (३-३-३९)

(सू.) प्राणाद् विष्णोरेकस्यैवोत्तमत्वं युक्तम्। नतु बहूनाम्। कुतः?

हि यस्मात् **सत्या-दयो**ऽहङ्कारात्मान्ताः [१]नामादिप्राणादूर्ध्वमाम्नाताः **सैव** ईश्वराख्या परदेवतैव । नतु ततो भिन्ना । इति **हि** 'सत्यं पूर्णं' इत्यादिन्यायविवरणोदाहृतश्रुतौ 'नामादिप्राणपर्यन्तात्' (न्या.वि.उ. श्रुतिः, पृ. १४९) इति स्मृतौ च प्रसिद्धमित्यर्थः ।

**(सैवेति ब्रह्मणः स्त्रीलिङ्गेन निर्देशे कारणोक्तिः)**

अत्र सत्यादिनिविष्टानां कृतिनिष्ठादीनां स्त्रीत्वाद् अस्त्रीभूतस्य ब्रह्मणो न कृत्याद्यैक्यमिति शङ्कानिरासाय परमात्मनोऽपि स्त्रीरूपत्वान्न तदैक्यमनुपपन्नमिति सूचनाय **सैवे**ति स्त्रीलिङ्ग-प्रयोगः । अन्यथा सर्वत्र ब्रह्मणः प्रकृतत्वेन तदिति नपुंसकलिङ्गं स्यादिति द्रष्टव्यम् ॥ २३ ॥

**॥ इति सत्याधिकरणम् ॥ २३ ॥**

(त.दी.) सेति कृतिनिष्ठाद्यनुरोधेन स्त्रीलिङ्गोक्तिः । स्त्रीलिङ्गानां बहुत्वात् । तेन प्रकृतिनयोक्तं स्मारितं ध्येयम् । (पृ.सं.१७२)

**॥ २४ ॥ अथ कामाधिकरणम् ॥**

**(उपासनायां श्रियोऽनधिकारित्वसमर्थनम्)**

अत्र श्रियोऽनधिकारित्वं समर्थ्यते ।

**ॐ कामादितरत्र तत्र चाऽयतनादिभ्यः ॐ** (३-३-४०)

**(सू.) चो**ऽवधारणे समुच्चये च । **कामाच्च** स्वेच्छयैव ईश्वरेच्छया च **तत्र** भगवत्समीपे मूलरूपेण स्थित्वा **इतरत्र** च अवतारान् करोतीति शेषः । कुतः ? **आयतनादिभ्यः** 'सर्वायतना सर्वकाला सर्वेच्छा सर्वज्ञा न बद्धा बन्धिका'[२] इति सर्वगत्वाभिधायकवत्सश्रुतेरित्यर्थः । तथा च

---

१. 'न वा प्राणादूर्ध्वमाम्नाताः' इति क. पाठः ।

२. 'सर्वायतना सर्वकाला सर्वेच्छा सर्वज्ञा न बद्धा बन्धिका सैषा प्रकृतिरविकृतिः' इति (ब्र.सू.भा.उ.वत्सश्रुतिः, पृ. १९५)

स्वेच्छया जनने इन्द्रादिवत् कर्मनिमित्तत्वाभावाज्जननेऽपि मूलरूपेण भगवत्समीपवर्तित्वेन सीतादिरूपेण जननादेरवतारत्वेन संसार-हेतुत्वाभावान्न प्रकृतेर्नित्यमुक्ताया अधिकारित्वमिति भावः ।

(त.दी.) अवतारोक्त्या जन्मादेराविर्भावादित्वेन बन्धाहेतुत्वेनाबद्धत्वात् तस्याः नोपासनाधिकारित्वमिति सूचितम् । जन्माद्येव किं नेत्यतः तत्रेत्युक्तिः । तत्र तथास्थितत्वेऽपीन्द्रादिवत् जन्मैव स्यादित्यतः कामादेवेत्युक्तिः । तर्हीशवत् स्वातन्त्र्येण किम् ? इत्यतः आद्या कामादित्युक्तिः । इतरत्र चेत्युक्त्यैवावतरतीति लाभात् तस्यापि सार्थक्यम् । तत्र तथास्थितैवान्यत्रेच्छयाऽवतरतीत्येतत्सर्व-गतत्वादिवाचिश्रुतिसिद्धमिति वक्तुमायतनेत्याद्यप्यर्थवत् । अवतरतीत्युक्त्याऽ-बद्धत्वस्य कामाधीनकामादेवेति पारतन्त्र्योक्त्याऽमोचकत्वस्य च लाभेन प्राणसत्ययोर्मध्ये श्रीतत्त्वानुगतिरपि सूचिता । नामादयस्तु बद्धत्वादित्यादेः । (पृ.सं.१७४.१७५)

ननु रमायाः असंसारित्वे कृतकृत्यत्वेन 'यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या' (ब्र.सू.भाष्यदीपिकोदाहृता श्रुतिः, पृ.१९८) इत्यादि-प्रमितभगवदुपासनाभावः स्यादित्यत आह -

**ॐ आदरादलोपः ॐ (३-३-४१)**

(सू.) 'आदरो भजनं भक्तिः' (अभिधानम्) इत्यभिधानात् । **आदरात्** भक्त्यतिशयात् **अलोपः** । उपासनाया इति शेषः । कृतकृत्यत्वेऽपि निरुपाधिकभक्त्यतिशयेनोपासनावत्त्वमित्यर्थः ।

(ननु ) न रमाया नित्यमुक्तत्वं युक्तम् । कारणाभावात् । नच स्वत एव, अस्वातन्त्र्यादित्यत आह -

**ॐ उपस्थितेस्तद्वचनात् ॐ (३-३-४२)**

(सू.) **उप** समीपे **स्थितेः** अनादिकाले भगवत्सम्बन्धित्वात् । तेन

चातिशयिततत्प्रसादाख्यकारणसद्भावाद् युज्यते नित्यमुक्तत्वं तस्याः। कुतः ? **तद्वचनात्** 'द्वावेतावनादिनित्यावनादियुक्तौ नित्यमुक्तौ'[१] इति गौपवनश्रुतौ तस्या उपस्थितेर्वचनादित्यर्थः ॥ २४ ॥

॥ इति कामाधिकरणम् ॥ २४ ॥

## ॥ २५ ॥ अथ निर्धारणाधिकरणम् ॥

### (श्रवणमननध्यानरूपसमस्तोपास्तेः कर्तव्यतासमर्थनम्)

श्रवणमननध्यानरूपसमस्तोपासनस्य कर्तव्यत्वं समर्थ्यते ।

**ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॐ** (३-३-४३)

(सू.) तन्निर्धाणरणसहितोऽर्थनियम**स्तन्निर्धारणार्थनियमः**। तच्छब्दो बुद्धिस्थतत्त्वपरः । भावप्रधानो वा । तस्य वेदबोध्यत्वस्य निर्धारणं अयमस्यार्थ इति तत्त्वनिश्चयः, श्रवणफलं तेन सहितोऽर्थनियमः अयमेव वेदार्थो नान्य इति निर्णयः मननफलं तदुभयं **तद्दृष्टेः** तस्य परमात्मनः दृष्टेरपरोक्षज्ञानात् ध्यानफलात् ब्रह्मदर्शनात् **पृथक्** । अतस्ताभ्यां दृष्ट्यसिद्धेः दर्शनार्थं ध्यानं कर्तव्यमिति हृदयम् । ननु तर्हि ध्यानेनैव दर्शने श्रवणमननाभ्यां किं कृत्यमित्यतो **हि** 'आत्मा वारे द्रष्टव्यः'[२]

---

१. 'द्वावेतावनादिनित्यावनादियुक्तौ नित्यमुक्तौ अनादिकृतौ नित्यकृतौ योऽयं परमो या च प्रकृती रमते ह्यस्यां परमो रमते ह्यस्मिन् प्रकृतिः स्वस्मिन् हि रमते परमो न स्वस्मिन् प्रकृतिरत एनमाहुः परम इति' (ब्र.सू.भा.उ. गौपवनश्रुतिः, पृ.१९९,२००)

२. 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति (बृ.उ.४.४.५) पृसं.२०१

इति विधिवाक्यप्रसिद्धसर्वमुपासनं विहितत्वात् त्रयमपि कर्तव्यमिति हृदयम् ।

ननु श्रुतोऽपि समुच्चयः कथमङ्गीकर्तुं शक्यते । ध्यानादेव दर्शन-सम्भवात् । न च ज्ञानोद्योपयोगितया श्रवणादेः कर्तव्यता । श्रवणादेः फलान्तरस्योक्तत्वादित्यत (उक्तम्)- **अप्रतिबन्धः फलम्** । (इति) ज्ञानप्रतिबन्धकनिवृत्तिः श्रवणमननफलमित्यर्थः । भगवद्दर्शनस्य तावद-ज्ञानसंशयविपर्यया: प्रतिब न्धका: । तत्र श्रवणस्य तत्त्वज्ञानमुत्पाद-यतोऽज्ञानाख्यप्रतिबन्धकनिवर्तकतया ध्यानफलदर्शनोपयोगित्वात् समस्तोपासनमपि कर्तव्यमेवेति भावः ॥ २९ ॥

॥ इति निर्धारणाधिकरणम् ॥ २९ ॥

(त.दी.) तद्दृष्टेर्ह्यप्रतिबन्धः फलमित्युक्त्यैव दृष्ट्यर्थं ध्यानम् अप्रतिबन्धार्थं श्रुतिमती कार्ये इति सिद्धावपि शेषोक्तिः दृष्टिस्तयोः साक्षादेव फलं स्यात्, किं ध्यानेनेति शङ्कां व्युदसितुम् । तर्हि तेनैव दृष्टिसिद्धेः किं ताभ्यामिति शङ्कां व्युदसितुम् अप्रतिबन्ध इत्युक्तिः । अप्रतिबन्धस्य फलत्वकल्पकतया हीति दृष्ट्यर्थं विहितत्वाख्यहेतूक्तिः । तदुपपादकत्वेन चाप्रतिबन्धः फलमिति सर्वमर्थ-वत् । श्रवणादेर्जनलोकाद्यर्थं कार्यत्वसिद्धावपि दृष्ट्यर्थं त्रितयकर्तव्यत्वमत्रोच्यत इति बोध्यम् । (पृ.सं. )

## ॥ २६ ॥ अथ प्रदानाधिकरणम् ॥

### ( उपास्तौ गुरुप्रसादरूपेतिकर्तव्यताया आवश्यकत्वोक्तिः)

अत्र गुरुप्रसादरूपेतिकर्तव्यताया आवश्यकत्वं समर्थ्यते ।

**ॐ [१]प्रदानवदेव हि तदुक्तम् ॐ** (३-३-४४)

१. 'प्रदानवदेव तदुक्तम्' इति ह.पाठः । पृ.१६१

**(सू.)** अत्र तदिति पूर्वसूत्रप्राप्तश्रवणाद्युपासनपरामर्शः । **तद्** श्रवणाद्युपासनं **प्रदानवदेव** दानमुपदेशः । प्रीतिपूर्वकत्वं प्रकर्षः । प्रीतिपूर्वकोपदेशयुक्तमेव ज्ञानसाधनं, न श्रवणादिमात्रम् । कुतः ? **तदुक्तम्** । **तत्** ज्ञानस्य गुरुदानाधीनत्वं 'आचार्यवान् पुरुषो वेद' (छा.उ. ६-१४-२) इति श्रुतौ **उक्तम्** अत इत्यर्थः ॥ २६ ॥

**॥ इति प्रदानाधिकरणम् ॥ २६ ॥**

**(त.दी.)** एवेत्युक्तिः दृष्टेर्गुरुप्रीत्यायत्तत्वे मुक्तेरपि तथात्वापत्त्या कदाचित् तदप्रीत्या मुक्त्यभावोऽपि स्यादिति न शङ्क्यम् । किञ्चिद्ध्रासादेः तत्राङ्गीकारात् । 'ज्ञानिनो गुरुशापेऽपि' (न्या.वि.उ.श्रुतिः) इत्यादेरिति वा, 'श्रोतव्यः' (बृ.उ.४.४.५) इति श्रुतौ श्रुत्यादिमात्रोक्तावपि सेतिकर्तव्यस्य साधनत्वमनुक्तिसिद्धमिति स्पष्टमिति सूचयितुं वा । उक्तं च टीकायाम्- 'नहि दृढमुष्टिनिपीडनादि पृथक् साधनमुच्यते । (पृ.सं.१८३)

## ॥ २७ ॥ अथ लिङ्गभूयस्त्वाधिकरणम् ॥

### (गुरुप्रसादस्य बलीयस्त्वसमर्थनम्)

अत्र गुरुप्रसादस्य बलीयस्त्वं समर्थ्यते ।

**ॐ लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॐ** (३-३-४५)

**(सू.) तद्धि** गुरुप्रसादपूर्वकप्रदानमेव **बलीयः** ज्ञानसाधने बलवत् । [१]तद् बलं नापि समम् । कुतः ? **लिङ्गभूयस्त्वात्** ऋषभादिभ्यो विद्यां श्रुत्वाऽपि सत्यकामेन 'भगवांस्त्वेव मे कामे ब्रूयात्' (छा.उ. ४-९-२) इति गुरुः प्रार्थ्यते । गुरुणा च गोतमेन 'अत्र ह न किञ्चन वीयाय' (छा.उ.) इत्यनुज्ञानं क्रियते । श्रवणादेरेव प्राबल्ये न तेन गुरुः

१. 'न दुर्बलम्' इति क.पाठः ।

प्रार्थ्येत । स्वप्रदानस्याप्राबल्येऽनुज्ञावैयर्थ्यमापद्येत । तथोपकोसलेनाग्निभ्यः श्रुतविद्येनापि कृतगुरुप्रार्थना तद्गुरुकृतविद्योक्तिश्चेति भूयसां लिङ्गानां सद्भावात् । किं तर्हि श्रवणादिनेत्यतस्तदपि श्रोतव्य इत्यादिविधेः श्रवणाद्यपि कार्यमित्यर्थः ॥ २७ ॥

(त.दी.) लिङ्गबाहुल्यादिति वाच्ये प्रकर्षोक्तिः श्रवणादित्रितयादधिकलिङ्गसूचनाय। तच्च तत्त्वप्रदीपे दर्शितम्। बलवदिति वाच्ये बलीय इति प्रकर्षोक्तिः न श्रवणादितो दुर्बलं नापि तद्बलवत्, किन्तु बलीय इति दौर्बल्यतत्साम्ये व्युदसितुमिति। (पृ.सं.१८६,१८७)

॥ इति लिङ्गभूयस्त्वाधिकरणम्॥ २७॥

## ॥ २८ ॥ अथ पूर्वविकल्पाधिकरणम् ॥

### (पश्चात्ततोऽपि गुरुः स्वीकार्य इति निरूपणम्)

अत्र गुरुर्विचार्यते ।

**ॐ पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॐ** (३-३-४६)

(सू.) अत्र प्रेत्युपसर्गस्य समग्रत्वमर्थः। योग्यतयाऽनुग्रहस्येत्यस्य लाभः। तथा च **स्यात्** पश्चात्तनोऽपि गुरुः स्वीकार्यः स्यात्। कुतः? **प्रकरणात्** प्रकृष्टानुग्रहकारणात्, समग्रानुग्रहकारणादिति यावत् । उक्तस्यापवादः। **पूर्वविकल्पः** पश्चात्तनः समग्रानुग्रहकर्ता पूर्वेण समश्चेत् पूर्वानुज्ञया विकल्पः । नतूत्तमवत् स्वीकारनियमः । पूर्वानुज्ञा चेत् स्वीकार्यः न चेन्नेति। तत्र दृष्टान्तः- **क्रियामानसवत्** । क्रियारूपं यन्मनःसम्बन्धि तद्वत् ध्यानवदित्यर्थः। मानसी सृष्टिर्हि ध्यानम्। 'यदि मानसी सृष्टिरिति मतमनुमतमेतत्' (न्या.सु.) इति प्रथमाधिकरणसुधोक्तेः। फलतः समयोः रामादिमूर्तिध्यानयोर्यथा विकल्पस्तथेत्यर्थः । अधमस्तु त्याज्य एव ।

'गुणाधिकं गुरुं प्राप्य तद्धीनं नाऽऽप्नुयात् क्वचित्' (ब्र.सू.भाष्यदीपिकोदाहृतं वचनम्, पृ. २१०) इत्यादिवचनादिति द्रष्टव्यम् । 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' (ब्र.सू.भाष्यदीपिकोदाहृतं वचनम्, पृ. २१०) इति दोषवचनं त्वधमस्वीकारविषयम् । न तु समग्रानुग्रहकर्तृ उत्तमस्वीकार-विषयम् । पूर्वानुज्ञाभावे समस्वीकारविषयं चेति ध्येयम् ।

(त.दी.) विकल्पेत्युक्त्या 'विकल्पः समयोर्भवेत्' (ब्र.सू.भा.उ. बृहत्तन्त्र-वचनम्, पृ.२१०) इति, 'विकल्पः कामतो भवेत्' (ब्र.सू.भा.उ. महासंहिता-वचनम्, पृ.२१०) इति च स्मृतिः सूचिता । तेन पूर्वस्मादुत्तमश्चेत् परः सङ्ग्राह्य एव । न विकल्पः । समोऽपि पूर्वानुज्ञयैव । अधमश्चेन्न ग्राह्य एवेति सूचितम् । प्रकृष्टानुग्रहकर्तृत्व एव नान्यथेति वक्तुम् । तेन पूर्वत्यागे हेतुर्नेति निरस्तम् । पूर्णानुग्रहार्थत्वा-दिति । एतेन 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' (ब्र.सू.भाष्यदीपिकोदाहृता स्मृतिः) इत्यादिवचनम् अधमविषयं व्यर्थविषयकं वेत्युक्तं भवति । ध्यानेति वाच्ये क्रियामानसेत्युक्तिः तत्स्वरूपोक्त्यर्था । केचित्तु पूर्वविकल्पश्च पूर्वसमश्चेदन्यस्तदा विकल्प इति द्योतनायैवमुक्तिरित्याहुः । (पृ.सं.१८९,१९०)

हेत्वन्तरेण समोत्तमगुरुस्वीकारं समर्थयति ।

**ॐ अतिदेशाच्च ॐ (३-३-४७)**

(सू.) 'यथाकाममुपचरेर्ये चान्येऽस्मद्विधाः श्रेयसश्च तानुपास्व तानुप-चरस्व तेभ्यः श्रुणुहि ते त्वामवन्तु' (ब्र.सू.भा.उ. पौष्यायणश्रुतिः) पृ.सं. २१२ इत्यादौ पूर्वगुरुणा स्वसमोत्तमगुरुस्वीकाराय **अतिदिश्यमानत्वाच्च** समोत्तमौ ग्राह्यावित्यर्थः ॥ २८ ॥

॥ इति पूर्वविकल्पाधिकरणम् ॥ २८ ॥

## ॥ २९ ॥ अथ विद्याधिकरणम् ॥

### (ब्रह्मज्ञानमेव मोक्षसाधनम्)

अत्रोपासनजन्यापरोक्षज्ञानस्यैव मोक्षसाधनत्वं समर्थ्यते ।

### ॐ विद्यैव तु निर्धारणात् ॐ (३-३-४८)

(सू.) **विद्यैव** मोक्षसाधनं न कर्मादि । 'नान्यः पन्था अयनाय विद्यते' (श्वे.उ. ३-८) **इत्यवधारणादित्यर्थः** ।

(त.दी.) 'कर्मणैव हि संसिद्धिम्' (भ.गी.३.२०) इत्यतोऽपि 'नान्यः पन्थाः' (श्वे.उ.३-८) इत्यस्य प्राबल्यसूचकस्तुशब्दः । विद्यैवेत्युक्तिः विद्या कर्म वा इत्यनिर्णय इति न शङ्क्यमिति द्योतयितुम् । तेन भाक्तं वेत्युक्तावपि कर्मणैवेत्युक्त्या प्राप्तविशेषशङ्कानिरासार्थत्वादस्यापौनरुक्त्यं ध्येयम् । एवेत्युक्त्यैव वाद्यन्तरोक्तसर्वमुक्तिहेतूनां व्युदासो बोध्यः । स च विस्तृतोऽनुव्याख्याने । (पृ.१९२.१९३)

नन्वेवं विद्या चेन्मोक्षसाधनं तर्हि न ध्यानोपासनं कार्यम् । श्रवणादिनैव तत्सम्भवादित्यत आह -

### ॐ दर्शनाच्च ॐ (३-३-४९)

(सू.) न केवलं विद्यया मोक्षः । येन ध्यानवैयर्थ्यमित्याशयः । किन्तु **दर्शनाच्च**= भगवत्साक्षात्का-राच्च । अतो ध्यानमावश्यकमिति । 'दृष्ट्वैव मुच्यते नापरेण'[१] इति श्रुतेश्चेत्यप्यर्थः । विशेषश्रुत्या सामान्य-श्रुतेरयमेवार्थ इति भावः ॥ २९ ॥

### ॥ इति विद्याधिकरणम् ॥ २९ ॥

---

१. 'सर्वान् परो माययाऽयं सिनीते दृष्ट्वैव तं मुच्यते नापरेण' इति (ब्र.सू.भा.उ.कौशिकश्रुतिः, पृ.२१३)

## ॥ ३० ॥ अथ श्रुत्यधिकरणम् ॥

### (आक्षेपनिरासपूर्वकं ज्ञानस्य मोक्षसाधनत्वसमर्थनम्)

अत्रापि ज्ञानस्य मोक्षसाधनत्वं समर्थ्यते ।

**ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ (३-३-५०)**

**(सू.) श्रुत्यादिबलीयस्त्वात्** प्रत्येकं बलवतां श्रुतिलिङ्गोपपत्तिस्मृतिवचनानां भावात् विद्यैव मोक्षसाधनमित्यस्य 'कर्मणैव हि संसिद्धिमास्थिताः' (भ.गी. ३-२०) इति स्मृतिबाधो नास्ति । अवधारणस्यायोगव्यवच्छेदार्थकत्वात् । 'कर्मणैव' (भ.गी. ३-२०) इति स्मृत्यप्रामाण्यं नेत्यर्थः । निरवकाशावधारणयुक्तत्वात् 'तमेवं विदित्वाऽतिमृत्युमेति' (श्वे.उ. ३-८) इति श्रुतिः स्मृतेर्बलवती । 'इन्द्रोऽश्वमेधांच्छतमिष्ट्वाऽपि राजा ब्रह्माणमीड्यं समुवाचोपसन्नः'[१] इति बहुकर्मकृतोऽपीन्द्रस्य दुःखासम्भिन्नसुखरूपमोक्षार्थं तत्त्वज्ञानप्रार्थनलिङ्गं च निरवकाशत्वाद् बलवत् । 'नास्त्यकृतः कृतेन' (मु. १-२-१२) इत्यत्रोक्तोत्पत्तिनाशवत्फलत्वेनावधृतकर्मणा नित्यपुरुषार्थो न भवतीत्युपपत्तिश्च दूषणशून्यत्वात् श्रौतत्वाच्च बलवती । 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥' (ब्र.सू.भा.उ. गी.स्मृतिः) इति स्मृतिवचनं भगवद्वाक्यत्वेन साम्याद् युक्तिमत्त्वेनाऽधिक्याच्च बलवदिति बलीयस्त्वं ज्ञेयम् ॥३०॥

॥ इति श्रुतिबलीयस्त्वाधिकरणम् ॥ ३० ॥

---

१. 'इन्द्रोऽश्वमेधांच्छतमिष्ट्वाऽपि राजा ब्रह्माणमीड्यं समुवाचोपसन्नः । न कर्मभिर्न धनैर्नैव चान्यैः पश्येत् सुखं तेन तत्त्वं ब्रवीहि' इति (ब्र.सू.भा.उ.वचनम्, पृ. ३१४)

**(त.दी.)** कर्मणैवेत्युक्तिरमानं किमित्यतश्चेत्युक्तिः । आस्थिता एवेत्यन्वय इति भावः। बाध इत्युक्तिः 'कर्मणैव' (भ.गी. ३.२०)इति स्मृतेरेवकाराद् ईशवाक्यत्वाच्च प्राबल्यमिति शङ्कां द्योतयितुम्। बलीयस्त्वादिति प्रकर्षोक्तिः 'तमेवं' (श्वे.उ.३.८) इत्यादेः सावधारणादित्वेऽपि न 'कर्मणैव' (भ.गी. ३.२०) इति बलवत्स्मृतिसाम्यं निरवकाशत्वादिना ततोऽप्यतिशयितत्वमिति सूचयितुम्। चस्तु स्मृतिगतिसूचकः। (पृ.सं.१९६)

## ॥ ३१ ॥ अथ अनुबन्धाधिकरणम् ॥

### (उपासनस्य भक्तिपूर्वकत्वसमर्थनम्)

अत्रोपासनस्य भक्तिपूर्वकत्वं समर्थ्यते ।

### ॐ अनुबन्धादिभ्यः ॐ ॥ ३-३-५१ ॥

(सू.) अत्र पूर्वसूत्राच्चशब्दोऽनुकृष्यते । 'अनुबन्धस्तु भक्तिः स्यात्' (अभिधानम्) इत्यभिधानम्। न केवलं श्रवणादिना प्रबलेनापि गुरुप्रसादेन किन्तु **अनुबन्धादिभ्यश्च** हरिगुरुभक्तिशमादिभिश्च भगवद्दर्शनं भवतीत्यर्थः । भक्त्यादिकं विना गुरुप्रसादस्य ध्यानस्य चासिद्धेः । द्वेषयुतध्यानस्यानर्थहेतुत्वेन श्रुत्यादिसिद्धत्वात् । 'द्वेषाच्चैद्यादयः'[१] इत्यादिवचनान्तराणां स्वभावभक्तविषयत्वादिति हृदयम् ॥ ३१ ॥

**॥ इत्यनुबन्धाधिकरणम् ॥ ३१ ॥**

(त.दी.) भक्तीति वाच्येऽनुबन्धेत्युक्तिः स्वानुसारेण बध्नाति आर्जयति हरिगुर्वादिप्रसादादिकमित्येवंरूपा भक्तिरेव न द्वेषादिरिति ज्ञापयितुम्। तेन 'द्वेषाच्चैद्यादयः' (भा.७.१.३१)इत्युक्तिः स्वभावभक्तविषयेति सूचितम् । अत्र दृष्टेर्भक्तिसाध्यत्वमुक्तम्। अम्बुवदित्यत्र मोक्षस्य भक्तिसाध्यत्वमिति भेदः।

---

९५५. 'गोप्यः कामात् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः । सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ॥' इति (भा. ७.१.३१)

तत्त्वप्रदीपे तु प्रधानसाधनत्वज्ञापनार्थः, साधनान्तरोपसङ्ग्रहार्थश्च पुनरारम्भ इत्युक्तम्। (पृ.सं.१९८)

## ॥ ३२ ॥ अथ प्रज्ञान्तराधिकरणम् ॥

### (ब्रह्मदर्शने तारतम्यसमर्थनम्)

[1]अत्र परोक्षज्ञाने विशेषः समर्थ्यते।

**ॐ प्रज्ञान्तरपृथक्त्ववद् दृष्टिश्च तदुक्तम् ॐ (३.३.५२)**

(सू.) **प्रज्ञान्तरस्य** प्रज्ञाविशेषस्य अविच्छिन्नपरोक्षज्ञानस्य, ध्यानरूपोपासनस्येति यावत्। **पृथक्त्ववत्** अनेकप्रकारत्ववद् **दृष्टिश्च** पृथक् नानाविधा, भगवद्दर्शनरूपं फलं चानेकप्रकारमित्युपासनातारतम्यवद् दृष्टिश्च नानाप्रकारेत्यर्थः। **तदुक्तम्**- तत् दृष्टितारतम्यं 'अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टयः'[2] इति श्रुतावुक्तमित्यर्थः।

### (मानसक्रियात्वेनोक्तस्य ध्यानस्य प्रज्ञान्तरपदवाच्यत्वानुपपत्तिशङ्का, तत्परिहारश्च)

ननु क्रियामानसवदिति पूर्वसूत्रे ध्यानस्य मानसक्रियात्वोक्तेः परोक्षज्ञानाभिधायकप्रज्ञान्तरपदवाच्यत्वं कथमिति चेन्न। क्रियाशब्दस्य धात्वर्थक्रियावाचित्वेन मानससृष्टिरूपकार्यपरत्वेन वा परिस्पन्दात्मकत्वाभावात्। तथात्वेऽतीन्द्रियाश्रितक्रियाया अतीन्द्रियत्वेनापरोक्षावभासविरोधात्। परिस्पन्दस्य विषयशून्यत्वेन ध्याने सविषयकत्वावभासविरोधाच्च। ननु तथाऽपि ध्यानस्य परोक्षज्ञानरूपत्वं

---

१. 'अत्रापरोक्षज्ञाने' इति क. पाठः ।

२. 'अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टय इति। देवा वाव सर्वदृष्टयस्तेषु चोत्तरोत्तर माब्राह्मणोऽन्येषु यथायोगं यथा ह्याचार्या आचक्षते' इति (ब्र.सू.भा.उ. कमठश्रुतिः, पृ. २१९)

कथम् ? लिङ्गशब्दाजन्यत्वात्। 'नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः' (ब्र.सू.भा.उ. नारायणतन्त्रवचनम्, पृ. १६) इति ध्यानस्य मानसत्वेनापरोक्षत्वोक्तेश्चेति चेत्, सत्यम्। अत्र ध्यानस्य परोक्षज्ञानजन्यवासनामयपदार्थविषयकत्वेनापरोक्षत्वव्यवहारात्। अत एव सुधायां 'श्रवणवासनादिजनितमानसवासनामयस्य' (न्या.सु.) इति श्रवणरूपज्ञानस्यापि वासनाकारणत्वमुक्तम्।

यद्वा, ध्यानस्य वासनामयपदार्थविषयकत्वेनापरोक्षरूपत्वेऽपि तस्य परमात्मविषयकत्वाभावेन नैष्फल्यप्रसङ्गात् तद्विषकत्वमावश्यकम्। तथा च ध्यानस्य परमात्मविषयकत्वेऽ-परोक्षरूपत्वायोगेन ज्ञातः परमाणुरितिवद् उपनीतभानत्वाभ्युपगमेनोपनायकस्य परोक्षत्वापरो(क्षा)क्षत्वादिव्यवहार इति भाववोधोक्तं समाधानं ज्ञेयम्॥ ३२॥

॥ इति प्रज्ञान्तराधिकरणम्॥ ३२॥

(त.दी.) दृष्टान्तोक्तिः दृष्टहेतुध्यानस्य भेदादिति हेतुसूचनाय। ध्यानवदिति वाच्ये एवमुक्तिः तत्स्वरूपोक्त्यर्था। तेन ज्ञानान्यमानसक्रिया ध्यानमिति वादो निरस्तः। कर्षकाणामिव साधनभेदेऽपि कदाचित् साध्यसाम्यं स्यादित्यत 'तदुक्तं' इत्युक्तिः। दर्शनग्रहणे वर्तमाने दृष्टिरित्युक्तिः स्पष्टार्थत्वाय वा, साध्यार्पकचशब्दान्वयाय वा। 'अन्तर्दृष्टयः' (ब्र.सू.भा.उ. कमठश्रुतिः) इति श्रुतिविशेषसूचनाय वा इत्येके। (पृ.सं.२०१,२०२)

## ॥ ३३ ॥ अथ न सामान्याधिकणम्॥

### (विम्बदर्शनमेव मुक्तिहेतुः)

अत्र स्वयोग्यरूपविषयकस्य ज्ञानस्य मोक्षहेतुत्वं समर्थ्यते।

**ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ**

(३-३-५३)

(सू.) **अपि**पदं मात्रार्थमुपलब्धेरित्यनेन सम्बध्यते । ब्रह्मरूपाणां **सामान्यात्** समानत्वात् **उपलब्धेः** सामान्यादपि यत्किञ्चिद्भगवद्रूपाणां दर्शनमात्रात् न मुक्तिर्नास्ति । **मृत्युवत्** । यथा मृत्युत्वे साम्येऽपि न मृत्यामात्रादनन्तरं मुक्तिः । किन्तु मृत्युविशेषादनन्तरं तथा भगवद्रूपाणां साम्येऽपि रूपविशेषज्ञानमेव मोक्षसाधनं न सामान्यदर्शनम् । रूपान्तर-दृष्टेर्वैफल्यात् तस्याः यत् फलं स एव मोक्षः किं न स्यादित्यतो- **न हि लोकापत्तिः** । हि यस्माद् रूपान्तरदृष्टिफलभूतमहरादिलोकापत्तिमात्रं मुक्तिर्नेत्यर्थः । अत्रोक्तो बिम्बदर्शनादेव मोक्ष इत्ययं नियमो न सर्वेषां किन्तु ये बिम्बदर्शनयोग्या ऋष्यादयस्तेषामेव । सर्वेषां बिम्बदर्शना-योग्यत्वात् । यथोक्तम्- 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' (ब्र.सू. १.१.३१) इति । 'ऋषयोऽन्तःप्रकाशाः' इति श्रुतेश्च । अन्यथा 'दृष्टचैव ह्यवताराणां'[१] इति प्रागुक्तविरोधात् । येषां बहिरुपासनेन मोक्षस्तेषामपि ह्युपासनं किञ्चित्कार्यमेव । बृहदारण्यकभाष्यं त्ववतारादिदृष्टविशेषार्थ-मेवान्तरुपास्त्यावश्यकत्वपरम् । अत एव 'दृष्टचैव' (ब्र.सू.भा.उ.अध्यात्मवचनम्) इत्यत्राञ्जसेत्युक्तम् । यथोक्तं काठकभाष्ये-

'प्रादुर्भावान् ऋते विष्णुमिन्द्रियैर्नैव पश्यति ।
प्रादुर्भावानपि यदा ज्ञानदृष्टचैव पश्यति ।
तदैव मुच्यते योगी न दृष्टैरिन्द्रियैः क्वचित् ॥' (का.भाष्यम्)

इति **भावबोधोक्तं** रहस्यमनुसन्धेयम् ॥ ३३ ॥

**॥ इति न सामान्याधिकरणम् ॥ ३३ ॥**

---

१. 'दृष्टचैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा । दर्शनेनान्तरेणान्ये देवाः सर्वत्र दर्शनात् । तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां नरः ॥ इति (ब्र.सू.भा.उ. अध्यात्म-वचनम्, पृ. २२०)

(त.दी.) तत्फलमिति वाच्ये लोकापत्तिरित्युक्तिः तत्फलमिदमिति सूचनाय। दृष्टिपदे प्रकृतेऽप्युपलब्धेरित्युक्तिः उप समीपे योग्यतया स्थितस्य रूपस्योपलब्धिरिति स्वयोग्यदृष्टेः मुक्तिरित्यपि सूचनायेत्येके। न सामान्यादुपलब्धेरित्यनेन स्वयोग्यदृष्टेरित्यपि लभ्यत इत्यन्ये। (पृ.सं.२०३,२०४)

## ॥ ३४ ॥ अथ परेणाधिकरणम् ॥

### (भक्तेः स्वातन्त्र्येणापरोक्षज्ञानहेतुत्वं न सम्भवति)

अत्र भक्तेरपरोक्षजनने स्वातन्त्र्यनिरासः क्रियते।

**ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ (३.३.५४)**

(सू.) चशब्द एवार्थोऽप्यर्थश्च। दर्शनादिकमिति शेषः। **परेण च** परेणैव परमात्मनैव दर्शनादिकं भवति नतु भक्त्या च, तथाऽपि **शब्दस्य** 'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति'[१] इति श्रुतेः **ताद्विध्यं** मोक्षकर्तृत्वप्रतिपादकत्वं युज्यते। परमात्मैव भक्त्या दर्शनादि करोतीति करणे कतृत्वोपचाराङ्गीकारात्। 'हन्ता रामशरः' इतिवत्। साधनान्तराण्यनुक्त्वा विशिष्य भक्तिः कस्मादुच्यत इत्यतो-**भूयस्त्वात्त्वनुबन्धः**। अनुबन्धो भक्तिः तु इतरसाधनान्तराणि विहाय विशिष्योच्यते। भूयस्त्वात् साधनेषु प्रधानत्वादित्यर्थः। परेणैव भक्तिपदवाच्येन निमित्तेन शब्दस्य ताद्विध्यं दर्शनादिकर्तृत्वप्रतिपादकत्वं युक्तमिति चार्थः॥ ३४ ॥

॥ इति परेणाधिकरणम्॥ ३४ ॥

---

९६५. 'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी' इति (ब्र.सू. भा.उ.माठरश्रुतिः, पृ. २२३)

## ॥ ३५ ॥ अथ एकाधिकरणम् ॥

(उपासनस्यानादियोग्यतासापेक्षत्वसमर्थनम्)

अत्रोपासनस्य योग्यतासापेक्षत्वं समर्थ्यते ।

**ॐ एक आत्मनः शरीरे भावात् ॐ (३-३-५५)**

(सू.) अवधारणार्थश्चशब्दः पूर्वसूत्रादनुवर्तते । आत्मशब्दोऽशांश्युभयपरः । अंशिकर्मनिर्मितत्वं षष्ठ्यर्थः । तथा च **एकश्च** अंशोंऽशी चेत्येक एव । अतो नांशस्योत्पत्तिरिति हृदयम् । कुतः ? **आत्मनः शरीरे भावात्** । आत्मनः अंशिनः कर्मनिर्मितशरीरे आत्मनः अंशस्य (अर्जुनस्य) **भावात्** वर्तमानत्वादित्यर्थः । तत्कर्मार्जितदेहे सत्वं तद्भेदे न युक्तमिति भावः । तथा चास्त्येव सर्वेषामुपासनादावनादियोग्यतापेक्षा । नचार्जुनादीनामुत्पत्तिमत्त्वेनानादियोग्यताभावः । तेषामंशभिन्नत्वेन तद्योग्यताया एव तद्योग्यतात्वात् । तदैक्यं च [१]अंशी अंशाभिन्नः तत्कर्मनिर्मितशरीरे वृत्तित्वादित्यनुमानसिद्धमित्युक्तं भवति ।

ननु अंशिनि ( इन्द्रे ) सुखिनि दुःखिनि (सति) अंशस्य (अर्जुनस्य) तदनुसन्धानाभावाद् ज्ञानादिभेदेन तयोर्भिन्नत्वं किं न स्यादित्यत आह-

**ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ (३-३-५६)**

(सू.) तुशब्द एवार्थः । **उपलब्धिवद् व्यतिरेक एवे**ति सम्बन्धः । **उपलब्धिवत्** उपलब्ध्यादौ यथा व्यतिरेकस्तथाऽशांशिनोरपि **व्यतिरेकस्तु** भेद एवेति **न**, कुतः? **तद्भावभावित्वात्** तस्य अंशिनः प्रधानसाधनोपासनादिजन्यसुखादिभोगभावे सति अंशगतोपासनादि-

९६६. 'अंशो अंश्यभिन्नः' इति क.पाठः ।

भोगस्य भावित्वाद् अंशस्यापि तत्फलानुसन्धातृत्वादित्यर्थः । तथा तस्यांशस्य ज्ञानादिभावेऽशिनोऽपि भावित्वाद् अनुसन्धीयमानत्वादिति योजना । अंशिनोंऽशगतयावदनुसन्धाने सत्यपि अंशस्यांशिगत-सर्वाननुसन्धानं प्रधानसाधनोपासनादिफलानुसन्धानं चेश्वराचिन्त्य-शक्तिवशादुपपन्नमित्याशयः ॥ ३५ ॥

॥ इत्येकाधिकरणम् ॥ ३५ ॥

## ॥ ३६ ॥ अथ अङ्गावबद्धाधिकरणम् ॥

**(अङ्गावबद्धानां चतुर्मुखब्रह्मादीनामुपास्तिः कार्या इति निरूपम्)**

अत्रोपासनस्य यथायोग्याङ्गदेवोपासनायुक्तत्वेन कर्तव्यत्वं समर्थ्यते-

**ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ (३-३-५७)**

**(सूत्रार्थः)** तुशब्द एवार्थः । ब्रह्मोपासनादयः कार्या इति शेषः । **प्रतिवेदं शाखास्विति** सम्बन्धः । तथा च **अङ्गावबद्धाः** अङ्गदेवतासम्बद्धाः, तत्सहिता इति यावत् । अङ्गदेवतासहिता ब्रह्मोपासनादयः कार्या एव । यद्वा, ईशस्याङ्गतया अप्रधानतया अवबद्धाः स्थिताः ब्रह्माद्या उपास्याः । तर्हि देवत्ववैष्णवत्वादिधर्माणामिव ब्रह्मत्वाद्यसाधारण-धर्माणां रुद्रादिष्वुपसंहार्यता स्यादित्यत उक्तम्- **त्विति** ॥ उपसंहारे त्वस्ति विशेष इत्यर्थः । अङ्गदेवतोपासने तद्गुणोपसंहारविषये विशेषोऽस्तीत्युक्तम् । स क इत्यत आह - **प्रतिवेदं शाखासु** प्रतिवेदं तत्सर्वशाखासु च प्रतीतमुत्तमानां ब्रह्मादीनां गुणजातम् अधमेषु रुद्रादिषु नोपसंहर्तव्यम् । किन्तु तत्तद्योग्यमेवेति हि 'समत्वाद् वोत्तमत्वाद् वा नाङ्गदेवाद्युपासनम्'[१] इत्यादिस्मृतिप्रसिद्धमित्यर्थः ।

---

१. 'समत्वाद् वोत्तमत्वाद् वा नाङ्गदेवाद्युपासनम् । उपसंहार्यमित्याहुर्वेद-सिद्धान्तवेदिनः ॥' इति (ब्र.सू.भा.उ. ब्रह्मतर्कवचनम्, पृ. २३०)

(त.दी.) ब्रह्माद्या इति वाच्येऽङ्गेत्याद्युक्तिः तेषामुपास्तिर्न प्राधान्येन, किन्तु अङ्गत्वेनेति सूचनाय । तेन 'तमेवैकम्'(मु.२.२.५) इति श्रुतिविरोधो नास्ति। तत्र प्राधान्येन ज्ञेयत्वनिरासादिति फलितम्। अङ्गदेवा इति वाच्ये, अवबद्धा इत्युक्तिःअवमत्वाद् बद्धत्वादङ्गत्वमित्यङ्गत्वोपपादनायेत्येके। अन्ये तु- ईशाङ्गेष्ववबद्धाः स्थिता इत्येव तेषामङ्गदेवतात्वं न तु तदङ्गत्वेनैव। 'विष्णोरङ्गसमुद्भूतेः विष्णोरङ्गानि देवताः'(अनुपलब्धाकरा स्मृतिः)इत्युक्तेः। यतो जनिस्तत्रैव स्थितेः अङ्गत्वमेव कुतो नेत्यतोऽबद्धत्वादिति वक्तुमित्याहुः। वस्तुतस्तु अङ्गावबद्धा इत्यस्य नायमर्थः। भाष्यादिविरोधात् । किन्तु, अङ्गैः अङ्गदेवैरवबद्धाः सम्बद्धास्तद्विषयाः उपास्तिपरिचर्यादयः कार्या इत्येवार्थः। शाखासु इत्येव पूर्तौ प्रतिवेदमित्युक्तिः अविभक्तवेदस्यापि सत्त्वादित्युक्तं तत्त्वप्रदीपे। (पृ.सं.२१३,२१४)

एवमुत्तमदेवगुणानामधमेषूपसंहाराभावमभिधायाधमगुणानामुत्तमेषूप-संहारं समर्थयति -

**ॐ मन्त्रादिवद् वाऽविरोधः ॐ** (३-३-५८)

(सू.) **मन्त्रादिवद्वा** मन्त्रविद्यादिवदेव, यथाऽग्न्याद्यधमदेवताविषयमन्त्र-विद्यादिकं ब्रह्माद्युत्तमदेवताविषयकत्वेन अधीयतेऽध्येतृभिः उत्तमानां तत्प्रतिपाद्यत्वात्। एवम् **अविरोधः** अधमगुणानामुत्तमेषूपसंहारे न कश्चिद् विरोध इत्यर्थः। तेषामुत्तमानां तद्गुणवत्त्वादिति भावः॥३६॥

॥ इति अङ्गावबद्धाधिकरणम्॥ ३६ ॥

## ॥ ३७॥ अथ भूमाधिकरणम्॥

### (एतदधिकरणप्रतिपाद्यविषयः)

अत्र भूमगुणोपासनस्य सर्वसाधारण्यं समर्थ्यते ।

**ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च[1] दर्शयति ॐ** (३-३-५९)

१. 'तथा हि दर्शयति' इत्यपि क्वचित् पाठः।

### सूत्रार्थः

**भूम्नः** भूमगुणस्य **क्रतुवत्** यथा खलु दीक्षाप्रायणीयोदयनीय-सवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्याद् अन्यथा वैफल्यात् **ज्यायस्त्वं** (प्राधान्यं) तथा भूमत्वस्य सर्वत्राऽनन्दादिषु अनुगतत्वेनोपासन एवेष्टफलसिद्धेः। सर्वगुणेषु ज्यायस्त्वं **च** यस्मात् 'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते'[१] इत्यादिका श्रुतिः **तथा** प्रस्तुतार्थं **दर्शयतीत्यर्थः** ॥ ३७ ॥

**॥ इति भूमाधिकरणम् ॥ ३७ ॥**

(त.दी.) इतरगुणापेक्षयाऽस्य प्रशस्ततरत्वद्योतनाय प्रकर्षप्रत्ययः। क्रतुशब्दो दीक्षाद्यङ्गकलाप-विशिष्टज्योतिष्टोमवाच्यपि अत्र तदङ्गकलापपर इति गुरुपादाः। तेन कस्यचिदत्र मीमांसाविरोध-प्रलापोऽपोढः। तत्त्वप्रदीपे तु - यथा सवनत्रयात्मकः क्रतुः अहीनादिषु प्रत्यहं सम्बध्यमानो विशिष्टो भवति तमन्तरेण एकस्याप्यह्नोऽननुष्ठेयत्वेन 'ध्रुवाः सत्राणाम् अहीनाः' इति सत्राणि प्रकृत्य याज्ञिकोक्तेरेवम् इहापीत्युक्तम्। क्वचिद् भाष्ये तथा चेति पाठः। अत्र 'तथा हि दर्शयति' इति पाठान्तरं केचन पठन्ति। (पृ.सं.२१८,२१९)

## ॥ ३८ ॥ अथ नानाधिकरणम् ॥

### (भूमगुणस्य तारतम्येन सर्वोपास्यत्वकथनम्)

अत्र भूमगुणोपासनाधिकारिणां विशेषसमर्थनं क्रियते।

### ॐ नानाशब्दादिभेदात् ॐ (३-३- ६०)

(सू.) **नाना** नानाप्रकारेणैव भूमत्वम् अधिकारिणां प्रतीयते।

---

१. 'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते। तस्माद् भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः ॥' इति (ब्र.सू.भा.उ.गौपवनश्रुतिः, पृ. २३३)

शब्दादिभिः प्रमाणैस्तत्प्रतीतेरेवेष्टव्यत्वात् **शब्दादिभेदात्** शब्दादीनां प्रमाणानाम् अधिकारियोग्यता[१] भेदेनानेकार्थप्रत्यायकत्वादित्यर्थः। नच भूमत्वे विशेषानुपपत्तिः। अतीतवत्सराणां मासानां (वर्षापेक्षया मासानामानन्त्यात्) चाऽनन्त्येऽपि तारतम्यवद् भूमत्वेऽपि तारतम्योपपत्तेः। घटः पूर्णः समुद्रः पूर्णः इत्युक्ते पूर्णत्वे तारतम्यदर्शनादिति भावः ॥ ३८ ॥

**॥ इति नानाधिकरणम् ॥ ३८ ॥**

(त.दी.) प्रत्यक्षादीति वाच्ये व्युत्क्रमोक्तिः श्रवणादिक्रममपेक्ष्येति ध्येयम्। त्रितयोक्तिः नैकेनाप्येकरूपा धीः सर्वस्य जायत इति सूचयितुमित्येके। (पृ.सं.२२१)

**॥ ३९ ॥ अथ विकल्पाधिकरणम् ॥**

**(बिम्बान्यनृसिंहाद्युपासनस्य विकल्पत्वकथनम्)**

अत्र हरिदर्शनोपयोगितयाऽऽवश्यकस्य अबिम्बोपासनस्याकर्तव्यतानिरासः क्रियते।

**ॐ विकल्पो विशिष्टफलत्वात् ॐ (३-३-६१)**

(सू.) नरसिंहाद्युपासनं कर्तव्यमेवेति न भवति। किन्तु **विशिष्टफलत्वाद् विकल्पः** मोक्षार्थं बिम्बोपासनमनुष्ठाय दुरितादिनिवृत्तिलक्षणविशिष्टफलापेक्षा चेत् कर्तव्यमिति विकल्प इत्यर्थः। न च नृसिंहाद्युपासनाभावे दुरितनिवृत्त्यसिद्धिः। तीव्रया स्वयोग्योपासनयैव दुरितादिनिवृत्त्युपपत्तेरिति भावः।

**॥ इति विकल्पाधिकरणम् ॥ ३९ ॥**

---

१. 'योग्यताभेदादनेकार्थप्रत्यायकत्वादित्यर्थः' इति क.पाठः।

## ॥ ४० ॥ अथ कामाधिकरणम् ॥

(एतदधिकरणप्रतिपाद्यविषयः)

अत्र ब्रह्मज्ञानसाधनोपासनस्यैवाऽवश्यकत्वमनावश्यककाम्योपासनस्य विकल्पश्चोच्यते ।

**ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ (३-३-६२)**

(सू.) **काम्याः** कामस्येमे काम्याः, षष्ठ्यर्थश्च साध्यसाधनभावः । ततश्च मोक्षान्यकामसाधनाः, ईशगुणास्तु **यथाकामं** स्वस्वकामानुसारेण, पुत्रकामना चेत् तत्साधनीभूतगुणाः द्रव्यकामना चेत् तत्साधनीभूता वसुतर्पकत्वादयो गुणाः अन्यान्यकामना चेत् तत्तत्कामसाधनीभूतगुणाः अमुमुक्षुभिः तत्कामभिः **समुच्चीयेरन्** कामसाधनीभूतभगवद्रूपेषूपसंहर्तव्याः अन्यैर्मुमुक्षुभिस्तु **नो**पसंहर्तव्या इति **वा** विकल्प एव नतु नियतिः । नोपसंहर्तव्या इति कोटौ हेतुः । **पूर्वहेत्वभावात्** मुमुक्षातः पूर्वो यः कामस्तद्रूपहेत्वभावादित्यर्थः ।

यद्वा, मुमुक्षुष्वेवायं विकल्पः । तत्रेत्थं योजना । काम्याः गुणाः यथाकामं मुमुक्षारूपस्वकामनाऽविरोधेनेश्वरप्रसादार्थमुपासने समुच्चीयेरन् न वा तद्विरोधेन फलकामनया समुच्चीयेरन् काम्या गुणाः भगवत्प्रसादार्थमुपास्या इति कुतः ? **पूर्वहेत्वभावात्** । काम्यगुणोपासनप्रवृत्तौ हि कारणद्वयम् । फलकामना प्रसादकामना चेति । तत्र मुमुक्षोः फलकामनारूपपूर्वहेत्वभावात् परिशेषात् प्रसादकामनैव हेतुरिति सिद्ध्यतीति भावः ।

**('अपूर्वहेत्वभावात्' इति पदच्छेदेन कृतं भावबोधोक्तं वर्णकान्तरम्)**

ननु (भावबोध)कामाख्यहेत्वभावेऽपि नृसिंहाद्युपासनस्य फलान्तरार्थं

क्रियमाणत्वेन व्यभिचार इत्यत पूर्वहेत्वभावात् पूर्वस्य 'नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये' (ब्र.सू.भा.उ.ब्रह्मतर्कवचनम्, पृ.२३६) इति पूर्वाधिकरणोक्तस्य दुरितादिप्रतिबन्धकलक्षणस्य प्रबलहेतोरभावादित्यर्थः ।

ननु भगवत्प्रसादार्थं काम्यगुणोपासनं न कार्यम् । तीव्रया बिम्बोसनयैव भगवत्प्रसादसिद्धेरित्यतोऽपूर्वहेत्वभावादित्यकारप्रश्लेषः । प्रबलहेत्वभावादित्यर्थः । यस्य तीव्रबिम्बोपासना वर्तते न कार्यमेव तेन काम्यगुणोपासनम् । यस्य तु नास्ति तेन कार्यमिति भावः ।। ४० ।।

**।। इति कामाधिकरणम् ।। ४० ।।**

**(त.दी.)** अन्यकामाय नेति कुतः ? पूर्वहेत्वभावात् कामाख्यहेत्वभावादित्यर्थः। यद्वा विशिष्टफलाख्यपूर्वनयोक्तहेत्वभावादित्यर्थः । अत एव कामेति वाच्ये पूर्वेत्युक्तिः मुमुक्षादशायां अन्यकामो नास्ति, तस्य पूर्वकालीनत्वादिति कामाभावस्य पक्षधर्मतासूचनाय च । कामाभावेऽप्यस्तु समुच्चय इत्यप्रयोजकत्वशङ्काव्युदासाय हेत्वित्युक्तिः । (पृ.सं.२२५)

## ।। ४१ ।। अथ अङ्गाधिकरणम् ।।

**('ब्रह्मादयः भगवदङ्गाश्रिताः' इत्युपासने देवानामेवाधिकारः)**

अत्र योग्यानां देवतानामेवाङ्गदेवतोपासनस्य कर्तव्यत्वं समर्थ्यते ।

**ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ** (३-३-६३)

(सू.) सूर्यादिदेवानाम् **अङ्गेषु** चक्षुरादिभगवदङ्गेषु **यथाऽऽश्रयभावः** 'चक्षोः सूर्योऽजायत' (ऋ. १०-९०-१३) इत्यादिना यथा यथाऽऽश्रितत्वमुक्तं तथातथोपासनं कर्तव्यमेवेत्यर्थः । अन्यथा तत्तद्देवानां तत्तदङ्गाश्रितत्वप्रतिपादकविद्यावैयर्थ्यादिति भावः ।

न केवलमङ्गाश्रितत्वेनोक्त्यन्यथानुपपत्त्या तथोपासनस्य कर्तव्यता किन्तु श्रुतौ तथा विधानाच्चेत्याह-

ॐ शिष्टेश्च ॐ (३-३-६४)

(सू.) **शिष्टिः** विधिरिति यावत्। 'यस्मिन् यस्मिन् यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैव' (ब्र.सू.भा.उ.पौत्रायणश्रुतिः, पृ. २४०) इति पौत्रायणश्रुतौ **विहितत्वाच्चेत्यर्थः** ।

निरधिकारिकत्वान्नाङ्गाश्रितत्वेन देवोपासनं युक्तमित्यत आह -

ॐ समाहारात् ॐ (३-३- ६५ )

(सूत्रार्थः)

**समाहारपदं** श्रुतिसूचकम् ।

'अङ्गैः पराद्ये हि देवा विसृष्टास्तत्तद्गुणान् परमे संहरेत ।
तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत ॥'

(ब्र.सू.भा.उ.काषायणश्रुतिः, पृ. २४१)

इति **समाहारपदोपेतस्मृते**स्तत्पूर्वकोपासनाप्रतिपादकश्रुतेरित्यर्थः। साक्षादधिकार्यप्रत्यायकमपि तल्लिङ्गोपस्थापकमिदं सूत्रम् । तथा हि । देवानामधिकारित्वादङ्गाश्रितत्वेन देवतोपासनं युक्तम् । न च तदनुक्तिर्दोषः। तस्योपासनस्य हि परमस्थानप्राप्तिः फलं श्रूयते । तच्च देवानामेव योग्यमिति फलपर्यालोचनया देवानामधिकारित्व-कल्पनोपपत्तेरिति भावः। देवानामधिकारित्वकल्पने यद्यप्यत्र मुमुक्षुरिति न युक्तम् । देवानामेकान्तभक्तत्वेन मोक्षेच्छुत्वाभावात् । तथाऽपि मुमुक्षुरित्यस्य भगवत्प्रीत्यतिरिक्तकामनाशून्य इत्यर्थकत्वान्न दोष इति ज्ञेयम्। सूर्यादयः भगवच्चक्षुराश्रितत्वेनोपास्याः सूर्याद्याश्रयचक्षुष्ट्वादीनां भगवद्गुणत्वादित्यनुमानं तदुपासनस्य कर्तव्यतां समर्थयति ॥

## ॐ गुणसाधारण्यश्रुतेश्च ॐ (३-३-६६)

(सू.) 'साधारण्यात् सर्वगुणाः परस्य समाहार्यास्तत्त्वदृशो मुमुक्षोः' (ब्र.सू.भा.उ.माण्डव्यश्रुतिः, पृ. २४२) इति गुणानां भगवद्गुणानां **साधारण्यस्य** सर्वेषामुपास्यत्वेन साम्यस्य **श्रुतेः** श्रवणाच्चेत्यर्थः ॥४१॥

(त.दी.) सूर्याश्रयचक्षुष्ट्वादीनामपि ईशगुणत्वादेवमुपास्तिः कार्येति भावः। (पृ.सं.२३१)

॥ इत्यङ्गाधिकरणम् ॥ ४१ ॥

## ॥ ४२ ॥ अथ नवाधिकरणम् ॥

### (अङ्गदेवतोपासनं देवेतराणां नास्ति)

अत्र देवतातिरिक्तानामङ्गदेवतोपासनस्य प्रतिषेधः क्रियते।

## ॐ न वाऽतत्सहभावश्रुतेः ॐ (३-३-६७)

(सू.) 'अङ्गेषु यथाऽऽश्रयभावः' (ब्र.सू. ३.३.६३) इत्यनुवर्तते। सर्वेषामङ्गदेवतोपसंहारपूर्वकमुपासनं **न वा** न कर्तव्यमेव। कुतः ?

**अतत्सहभाव** इति **श्रुतेः**। **तत्सहभावाश्रुतेरिति** नञो व्यत्यासेनान्वयः। सर्वशाखागतोपासनेन सहाश्रवणादित्यर्थः। [1]क्वचिदुक्तत्वात् क्वचिदनुक्तत्वाच्च देवैरेव भगवदङ्गेष्वङ्गदेवतोपसंहारः कर्तव्यो नान्यैरिति **वा**शब्दः।

श्रुत्या चैतमर्थं समर्थयति -

## ॐ दर्शनाच्च ॐ (३-३-६८)

---

१. 'सर्वत्रानुक्तत्वाच्च' इति क्वचित् पाठः।

(सू.)

'सत्यो ज्ञानः परमानन्दरूपः आत्मेत्येवं नित्यदोपासनं स्यात् ।
नात्यकिञ्चित् समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते ॥'

(ब्र.सू.भा.उ.कमठश्रुतिः)

इति श्रुतौ देवैस्तथोपास्तिः कर्तव्या नान्यैरित्यस्यार्थस्य **दर्शनाच्चेत्यर्थः** ॥ ४२ ॥

॥ इति नवाधिकरणम् ॥ ४२ ॥

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥**

# अथ तृतीयाध्यायस्य चतुर्थः पादः

## (ज्ञानसामर्थ्यकथनम्)

अपरोक्षज्ञानस्य सामर्थ्यमस्मिन् पादे उच्यते ।

## ॥ १ ॥ पुरुषार्थाधिकरणम् ॥

### (ज्ञानस्य स्वर्गाद्यशेषपुरुषार्थहेतुत्वमहिमोक्तिः)

प्रथमाधिकरणे ज्ञानस्य स्वर्गाद्यशेषपुरुषार्थहेतुत्वं वर्ण्यते ।

**ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ (३-४-१)**

(सू.) यस्यापरोक्षज्ञानस्यार्थे पूर्वमुपासनोक्ता, **अतः** उपासनाजन्याद् अपरोक्षज्ञानात् **पुरुषार्थः** पुरुषैरर्थ्यमानः कामितः सर्वोऽपि, प्राप्यत इति शेषः । कुतः ? **शब्दात्** । 'यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्'[1] इति श्रुतेरिति भगवान् **बादरायणो** मन्यत इत्यर्थः ।

### (ज्ञानिनां कामाभावात् कामितं ज्ञानेन प्राप्यत इत्ययुक्तमिति शङ्का तन्निरासश्च)

नच 'परीक्ष्य लोकान् कर्मचितान्' (मु. १-२-१२) इति श्रुत्या ज्ञानिनां कामाभावस्योक्तत्वात् कामितं ज्ञानेन भवतीत्ययुक्तमिति वाच्यम् । प्रायः कामाभावस्य श्रुत्यर्थत्वेन सर्वथा कामाभावस्यातदर्थ-त्वात् । यस्य कर्दमादिवद् भवति कामस्तस्य ज्ञानादेव सर्वपुरुषार्था-वाप्तिरित्यङ्गीकारादित्याशयः । विप्रतिपत्तिसूचनाय बादरायणपदम् ।

---

१. 'यंयं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तंतं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥' इति (मु. ३.१.१०, पृ. २४५)

एतमर्थमाक्षिपति -

**ॐ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ**
**(३-४-२)**

**(सू.)** मोक्षाद्यखिलपुरुषार्थसाधनं ज्ञानमिति यत्पूर्वमुक्तं तत्रास्तु ज्ञानस्य मोक्षसाधनत्वं नतु स्वर्गादिसाधनत्वम्। तत्साधनं तु कर्मैव। नच 'यं यं लोकं' (मु. ३-१-१०) इति सर्वपुरुषार्थसाधनत्ववादविरोधः। **शेषत्वात् पुरुषार्थवादः** ज्ञानस्य शेषत्वात् कर्मणैव सिध्यति स्वर्गेऽतिशयाधायकत्वात् सर्वपुरुषार्थसाधनवादः। **यथाऽन्येषु** स्वर्गसाधनकर्मशेषेषु धनादिषु 'स्वर्गं धनाद् देहतो वै गृहाच्च'[1] इति प्राधान्येन पुरुषार्थहेतुत्ववादवदिति **जैमिनि**र्मन्यत इत्यर्थः।

(ननु) ज्ञानस्यैवाशेषपुरुषार्थसाधनत्वे देवसम्बन्ध्याचारवैयर्थ्यलक्षणं बाधकमाह -

**ॐ आचारदर्शनात् ॐ (३-४-३)**

**(सू.)** 'नैव देवपदं प्राप्ताः ब्रह्मदर्शनवर्जिताः' (ब्र.सू.भाष्यदीपिकोदाहृतं वचनम्, पृ. २४६) इति वचनाद् देवास्तावद् ज्ञानिनः। तेषां ज्ञानिनामपि देवानां 'यज्ञेन यज्ञमयजन्त' (तै.आ. ३-१२-७) इति यज्ञाद्या**चारदर्शनादे**वैषा कल्पना। अन्यथाऽऽचारवैयर्थ्यादित्यर्थः। ज्ञानस्यैव सर्वपुरुषार्थसाधनत्वे कर्मानुष्ठानवैयर्थ्यं स्यादिति भावः।

ज्ञानस्य कर्मशेषत्वे श्रुतिरूपसाधकमाह -

**ॐ तच्छ्रुतेः ॐ (३-४-४)**

---

१. 'स्वर्गं धनाद् देहतो वै गृहाच्च प्राप्स्यन्ति धीरा न त्वधीराः कुतश्चित्' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. २४६)

(सू.) ‘यदेव विद्यया करोति’[१] इति **कर्मशेषत्वाभिधायकश्रुतेः** इत्यर्थः ।

ननु यथाश्रुतमपि ज्ञानस्य प्राधान्यं न स्वीक्रियते । किन्तु शेषत्वमेव । एवं ‘यदेव विद्यया’ (छा.१-१-१०) इति श्रुतमपि कर्मणः प्राधान्यं नाङ्गीकार्यम् । किं नाम ? कर्मणः ज्ञानशेषत्वं साम्यं वा भवत्वित्याशङ्कानिरासाय कर्मणः प्राधान्ये निरवकाशप्रमाणमाह -

**ॐ समन्वारम्भणात् ॐ** (३-४-५)

(सू.) ‘कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभेत्’[२] इति श्रुतौ कर्मणैवाऽमुष्मिकदेहादेः **समन्वारम्भणात् सम्यक्** प्राधान्येन **अन्वारम्भणात्** उत्पादनोक्तेः कर्मण एव प्राधान्यं न ज्ञानशेषत्वं तत्साम्यं वेत्यर्थः ।

ननु ज्ञानस्यैव सर्वपुरुषार्थसाधकत्वे बाधकत्वेनोक्तं ज्ञानिकृतं कर्म फलशून्यमेव । मुक्तवल्लीलामात्रं किं न स्यादित्याशङ्कापरिहाराय ज्ञानिनः कर्मकरणे विधिमाह-

**ॐ तद्वतो विधानात् ॐ** (३-४-६)

(सू.) **तद्वतः** ज्ञानवतः ‘ज्ञानी च कर्माणि सदोदितानि कुर्यात्’[३]

---

१.‘यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति’ इति (छा.१.१.१०, पृ.२४७)

२. ‘कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभन्नापरस्तत्र हेतुः । भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यत् ।।’इति(ब्र.सू.भा.उ.माठरश्रुतिः, पृ.२४८)

३. ‘ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत ।’ इति (ब्र.सू.भा.उ.कमठश्रुतिः)पृ.सं.२४८

इति कमठश्रुतौ कर्मविधानान्न लीलात्वम् । विहितस्य लीलात्वायोगादित्यर्थः ।

न केवलं विहितत्वाल्लीलमात्रं न, किन्त्वकरणे ईषत्प्रत्यवायश्रुतेश्चेत्याह-

**ॐ नियमाच्च ॐ (३-४-७)**

(सू.) 'कुर्वन्नेवेह कर्माणि'[१] इति श्रुतौ **नियमाच्च** नियमोक्तेश्चेत्यर्थः । अकरणे ईषत्प्रत्यवायश्रवणाच्च न लीलात्वमिति भावः ।

एतेन 'येन स्यात् केन स्यात् तेनेदृश एव' (बृ.उ. ५.५.१) इति ज्ञानिप्रशंसावचनविरोध इति परास्तम् । तद्वचनस्य बहुतरलेपाभावपरत्वादिति ज्ञेयम् ।

एवं जैमिनिमतावलम्बेन चोदिते ज्ञानस्याशेषपुरुषार्थहेतुत्वे बाधकत्वेनोक्तानामाचारविधिनियमानां गतिप्रदर्शनाय स्वमतेन कर्मणः ज्ञानसाध्ये स्वर्गादावाधिक्यापादकत्वरूपं ज्ञानशेषत्वं समर्थयति -

**ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ (३-४-८)**

(सू.) **बादरायणस्यैवं** ज्ञानादेव सर्वपुरुषार्थप्राप्तिरिति । नतु ज्ञानं कर्मशेष इति । नचैवं ज्ञानिनामाचारविधिनियमानामनुपपत्तिरिति वाच्यम् । ज्ञानादेव जायमानेषु पुरुषार्थेषु कर्मणोऽतिशयापादकत्वेन ज्ञानशेषत्वात् । इदं कुत इत्यत **अधिकोपदेशात्** 'यथा यथा कर्म कुरुते तथा तथाऽधिको भवति'[२] इति श्रुतौ अधिकोपदेशात् । ज्ञानार्जिते फले

---

१. 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति (ई.उ. २., पृ. २४९)

२. 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामाः सम्पद्यन्ते । तथाऽपि यथा यथा कर्म कुरुते तथा तथाऽधिको भवति' इति (ब्र.सू.भा.उ.कौण्ठरव्यश्रुतिः, पृ.२५०)

अधिकस्य कर्मादिनाऽधिकस्योक्तेः । कर्मणो ज्ञानशेषत्वोक्तेरित्यर्थः । **तद्दर्शनात्** तस्य राजसूयादिकर्मणा ज्ञानफले आधिक्यस्य युधिष्ठिरादेरुपलम्भाच्चेत्यर्थः ।

'राजसूयजितान् लोकान् अश्वमेधाभिवर्धितान् ।
प्राप्नुहि त्वं महाभाग तपसश्च महाफलम् ॥'

(ब्र.सू.भाष्यदीपिकोदाहृतं महाभारतस्वर्गारोहणपर्ववचनम्) पृ.सं. २५०

इति तत्त्वप्रदीपोक्तवचनादेतदेव ज्ञेयम् ।

ननु कर्मणः ज्ञानफलेऽतिशयाधायकत्वं कुतः ? ज्ञानस्वरूपेऽतिशयाधायकत्वरूपं ज्ञानशेषत्वं किं न स्यादित्यत आह-

**ॐ तुल्यं तु दर्शनम् ॐ (३-४-९)**

**(सू.)** तुशब्द एवार्थः । कर्मकरणाकरणयो**र्ज्ञानं तुल्यं** ज्ञानस्वरूपेऽतिशयाधायकत्वं सममेवेत्यर्थः । अन्यथा कर्मकरणे ज्ञानं पुरुषार्थसाधने समर्थमकरणे त्वसमर्थमिति विशेषः स्यादिति भावः । नच जैमिनिमतस्याप्रामाण्यम् । तस्य भगवन्मतैकदेशत्वेन प्रामाण्यात् । न च विरुद्धयोः प्रामाण्यायोगः । भगवन्मतस्य देवताविषयत्वात् । जैमिनिमतस्य प्रतिबन्धकयुक्तदेवताविषयत्वेन वा मानुषविषयत्वेन वाऽविरोधादिति [१]अनुव्याख्यानादौ स्फुटम् ॥ १ ॥

**॥ इति पुरुषार्थाधिकरणम् ॥ १ ॥**

**(त.दी.)** नन्वेवं शेषत्वादिषट्सूत्र्या ज्ञानिमनुष्याणां प्रतिबन्धयुतदेवानां च मोक्षान्यपुमर्थो ज्ञानशेषिकर्मणा प्रतिबन्धहीनदेवानां तु कर्मशेषिज्ञानेन

---

१. 'जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन । सामान्यं भगवत्प्रोक्तं देवादीनां विशेषतः । बलवद्विरोधि-सद्भावे जैमिन्याद्युक्तिरिष्यते ॥' इति (अनुव्याख्यानम्, श्लो. १४०७,१४०८, पृ. २५८)

भवतीत्यर्थस्याधिकेत्यादियोगाभ्यामेव सिद्धेराद्यो योगः शक्योऽवक्तुम् । तदर्थस्याप्येतदर्थद्वये एव स्थाप्यत्वात्, सामान्यस्य विशेषनिष्ठत्वावश्यम्भावादिति चेन्नैवम्।

सामन्यतो ज्ञानस्य पुमर्थमात्रहेतुत्वसिद्धावेव केषाञ्चित् कर्मशेषत्वेनन केषाञ्चित् कर्मशेषित्वेनान्यफलहेतुत्वमिति विशेषविचारावसरात्। अन्यथा अस्यानवसरदुःस्थत्वेनानुत्थानात् । उक्तं च पूर्वमीमांसायाम्- सामान्यविशेषवता लक्षणेनेत्यादि। एवमन्यत्रापि ध्येयम्। (पृ.सं.२४६,२४७)

## ॥ २ ॥ अथ असार्वत्रिकाधिकरणम् ॥

### (ज्ञानाधिकारिता न सर्वनिष्ठा)

अत्राध्ययनादिविशिष्टानामेव ब्रह्मज्ञानाधिकारो न सर्वेषामिति प्रतिपाद्यते ।

**ॐ असार्वत्रिकी ॐ (३-४-१०)**

(सू.) अधिकारितेति शेषः । ज्ञानाधिकारिता **न सर्वनिष्ठेत्यर्थः ।**

नन्वधिकारितानिमित्तार्थित्वादेः सत्त्वात् कथं नाधिकारितेत्यत आह-

**ॐ विभागः शतवत् ॐ (३-४-११)**

(सू.) **शतवत्** नवकोटीनां देवत्वसाम्येऽपि परापरब्रह्मद्वयाधिकशतस्यैव सोमाधिकारवत् सर्वेषां पुरुषार्थापेक्षासाम्येऽपि केषाञ्चिदधिकारो न सर्वेषामिति पुरुष**विभागो**ऽङ्गीकार्य इत्यर्थः ।

ननु यदि नार्थित्वमधिकारप्रयोजकं तर्हि किंविशेषणविशिष्टानाम् अधिकार इत्यत आह-

**ॐ अध्ययनमात्रवतः ॐ (३-४-१२)**

(सू.) अत्र **मात्रपदं** कात्स्न्र्यपरम् । 'मात्रं कार्त्स्न्येऽवधारणे' ९९३. (अमरकोशः, कां.३,वर्ग-३,श्लो.१७८) इत्यभिधानम् । यथाशक्त्यखिल-**वेदाध्ययनवतः** ज्ञानाधिकार इत्यर्थः । चतुर्मुखेतरेष्वखिलवेदाध्यय-नाभावादतिव्याप्तिपरिहाराय यथाशक्तीत्युक्तम् । विष्णुभक्त्याद्यङ्ग-सहितसकलवेदाध्ययनवत्त्वं प्रयोजकमिति भावः ॥ २ ॥

**॥ इति असार्वत्रिकाधिकरणम् ॥ २ ॥**

(त.दी.) तत्त्वप्रदीपे तु अध्ययनेति फलवदध्ययनमुच्यते । मात्रेति साङ्गत्वरूपकात्स्न्र्योक्तिः । तेनावैष्णवकृताध्ययनस्य साङ्गत्वसफलत्वयो-रभावाद् व्यावृत्तिरित्युक्तम् । साङ्गसफलवेदाध्ययनवत्त्वं प्रयोजकमिति भावः। (पृ.सं. २४९,२५०)

## ॥ ३ ॥ अथ अविशेषाधिकरणम् ॥

### (देवादीनां साम्येन न ज्ञानाधिकारः)

अत्र सम्पूर्णज्ञानाधिकारस्य दौर्लभ्यं कथ्यते ।

**ॐ नाविशेषात् ॐ ॥ ३-४-१३ ॥**

(सू.) देवाद्यधिकारिणाम् **अविशेषात्** साम्येन ज्ञानाधिकारो **ने**त्यर्थः। तथात्वे ज्ञानेऽपि साम्यप्रसङ्गादित्याशयः ॥ ३ ॥

**॥ इति अविशेषाधिकरणम् ॥ ३ ॥**

(त.दी.) 'यावदधिकारम्' (ब्र.सू.३.३.३३) इत्यत्र वृद्धिह्रासभाक्त्वमिति नयसिद्धेन मुक्तितारतम्येन उपासनाधिकारितातारतम्यमुक्तम् । इह तु प्रज्ञान्तरेत्यत्र सिद्धदृष्टितारतम्येन तदधिकारविशेष उच्यत इति भेदः । (पृ.सं.२५१)

## ॥ ४ ॥ अथ स्तुत्यधिकरणम् ॥

**(ज्ञानिनोऽसत्प्रवृत्तावपि ज्ञानस्य मोक्षसाधनत्वमक्षतमेव)**

अत्रासत्प्रवृत्तावपि ज्ञानस्य लिङ्गभङ्गरूपमोक्षसाधनत्वं वर्ण्यते ।

### ॐ स्तुतयेऽनुमतिर्वा ॐ (३-४-१४)

**(सू.)** 'केन स्याद् येन स्यात्' (बृ.उ. ५-५-१) इत्येतद् ज्ञानिनः **स्तुतये** यथेष्टाचारोऽपि ज्ञानी मुच्यत एवेति सामर्थ्यप्रकटनायैवोच्यते । यथा कश्चिद् भृत्यं प्रति तत्स्तुतये यथेष्टं कुर्विति कथ्यते न विधिः । **अनुमतिर्वा** । अथवा यथेष्टाचारेऽनुज्ञामात्रमेतत् । न यथेष्टाचरणविधिरित्यर्थः । वाशब्दोऽपरोक्षिमात्रसाधारणस्तुत्यर्थेन सह देवमात्रविषयानुमतिरूपार्थभेदस्य विकल्पार्थः । तथा चास्त्येव ज्ञानिनः सदसत्प्रवृत्त्योर्विशेष इति भावः ।

ननु नेदं युज्यते । असत्प्रवृत्त्या [१]प्रतिरुद्धत्वात् (कुण्ठितशक्तित्वात्) इत्यत आह -

### ॐ काम(चा)कारेण चैके ॐ (३-४-१५)

**(सू.) कामका(चा)रेण च**= यथेष्टाचारेणापि मोक्षः । 'कामचारा कामभक्षाः'[२] **इत्येके** शाखिनः पठन्तीत्यर्थः । अतो नासत्प्रवृत्त्या कुण्ठितत्वमित्याशयः ।

अत्रैव कैमुत्यमाह -

### ॐ उपमर्दं च ॐ (३-४-१६)

---

१. 'प्रतिरुद्धत्वान्न ज्ञानेन मोक्षः स्यादित्यत आह' इत्यधिकं क.पाठे दृश्यते ।

२. 'कामचारा कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात् परमीयुरनारम्भणम्' इति (ब्र.सू.भा.उ. सामशाखाश्रुतिः, पृ. २६१)

(सू.) चशब्दः पूर्वसूत्रगतस्यैके इत्यस्यानुकर्षणार्थः। विषभक्षणान्मृतेरिवानिवर्त्यतया प्राप्तस्य प्रारब्धकर्मणोऽपि किञ्चिद्भुक्तस्य संविदा **उपमर्दं** फलह्रासं च 'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च'[१] इत्येके शाखिनः पठन्तीत्यर्थः । यदाऽऽरब्धकर्मणोऽप्युपमर्दस्तदा ज्ञानोत्तरकृतस्य पापस्य मोक्षाप्रतिबन्धकत्वमिति किं वर्णनीयमिति भावः । यथोक्तं भागवतप्रथमस्कन्धे- 'न वै जनो जातु [२]कथञ्चनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम्' (भागवतम्१.५.१९)इति।

ननु कामचारिणां ज्ञानिनां मोक्षयोग्यत्वे तद्विजिज्ञासूनामपि कामचाराणां ज्ञानयोग्यत्वं स्यादिति प्रतिबन्दीमपाकरोति -

**ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ (३-४-१७)**

(सू.) चशब्द एवार्थः, रेतःसेचनं हित्वेत्यर्थः । ज्ञानोपदेशो विधीयते इति शेषः । कामचाराणां ज्ञानयोग्यत्वं न मन्तव्यम् । **हि** यस्मात् 'य इमं परमं गुह्यं'[३] इति **शब्दे** श्रुतौ **ऊर्ध्वरेतस्सु च** ऊर्ध्वरेतस्त्वादिगुणवत्स्वेव ज्ञानोपदेशो विधीयत इत्यर्थः । रेतसोऽधो विसर्जनमकृत्वा ऊर्ध्वरेतस्कत्वोक्त्या कामचाराभावो विज्ञायत इति भावः ।

(त.दी.) चः साध्यसमुच्चयेऽवधारणे च । ज्ञानिवत् जिज्ञासूनामपि तथेति न। कुतः? हि यस्माद् ऊर्ध्वरेतस्सु च , उपलक्षणं,ऊर्ध्वरेतस्त्वादिगुणयुक्तेष्वेव 'य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेत्' (ब्र.सू.भा.उ.माठरश्रुतिः) इत्यादिशब्दे ज्ञानोपदेशविधिरस्तीति शेषः, अत इत्यर्थः। परोक्षपूर्वकत्वादपरोक्षस्येति भावः।

---

१.'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुव्रजन्ति' इति (ब्र.सू.भा. उ.तुरश्रुतिः, पृ. २६२)

२. 'कथञ्चन व्रजेत्' इत्यपि कचित् पाठः ।

३. 'य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेत् । न तथा विद्यते भूयान्यं प्राप्यान्येऽपि भूयसः ॥' इति (ब्र.सू.भा.उ. माठरश्रुतिः, पृ. २६२)

प्राधान्यात् स्वशब्देनोर्ध्वरेतस्त्वोक्तिः । 'ऊर्ध्वरेतस्सु भाषयेत्' (ब्र.सू. भा.उ.माठरश्रुतिः) इति श्रुतिविशेषद्योतनाय वा। (पृ.सं.२५६,२५७)

एवं 'केन स्यात्' (बृ. ५.५.१) इति वाक्यस्य विधित्वमङ्गीकृत्यार्थ उक्तः । अधुना जैमिनिमतानुसारेण नियमेन सत्कर्ममात्रानुष्ठानरूप-मर्थान्तरमाह -

**ॐ परामर्शं जैमिनिरचोदना चापवदति हि　(३-४-१८)**

**(सू.) जैमिनिः** 'केन स्यात्' (बृ. ५.५.१) इति श्रुतेः 'प्रातरुत्थाय'[१] इत्यादिश्रुत्यन्तरोक्तसदाचारपरामर्शं ब्रूते । 'प्रातरुत्थाय' (ब्र.सू.भा.उ. श्रुतिः) इत्यादिश्रुतिस्मृत्युक्तसदाचारपरामर्शेन विधिबन्धवर्जितत्वेन सदाचारस्यैव नियमेनाऽचरणं 'येन स्यात्' (बृ. ५.५.१) इति श्रुत्यो-च्यते । अत्रोक्तं कामचारणमसद्विषयमपि किं न स्यादिति चेत् । किं निषिद्धं ज्ञानिनां कर्तव्यमिति स्फुटं विधिसद्भावादेतत्कल्प्यते निषेधाभावाद् वा । नाऽद्य इत्याह- **अचोदना** । निषिद्धं कर्तव्यमिति विधिर्नास्ति । द्वितीयं पराह- **अपवदति च** । 'ब्राह्मणो न हन्तव्यः' (ब्र.सू.भा.उ. श्रुतिः, पृ.२६५) इति श्रुतिरपवदति च **हि** यस्माद् अतो विध्यभावान्निषेधसत्वाच्च कल्पकाभाव इत्यर्थः ।

एवं जैमिनिमतानुसारेण 'केन स्यात्' (बृ. ५.५.१) इति वाक्यस्य सदाचारविषयत्वमेवोक्त्वाऽधुना प्रथमसूत्रोक्तानुज्ञानमेव ज्ञानिविशेष-परत्वज्ञापनाय प्रतिपादयति -

---

१. 'प्रातरुत्थाय सन्ध्यामुपासीत यत्सन्ध्यामुपासते ब्रह्मैव तदुपासतेऽथ देवान्नमेज्जुहुयाद् वेदानावर्तयीत नान्यत्किञ्चिदारचरेन्न सुरां पिबेन्न पलाण्डुं भक्षयीत नभृशं वदेन्न विस्मरेदात्मानं सोमं पिबेद्धुतशेषेण वर्तयेत्' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. २६४)

**ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ (३-४-१९)**

**(सू.) अनुष्ठेयं** कामचारश्रुतेरर्थं **बादरायणो** मन्यते । श्रुत्याद्युक्तानामनुष्ठेयानां मध्ये स्वेच्छया केषाञ्चिच्चरणं केषाञ्चिदचरणमित्यनुज्ञानमेव कामचारश्रुत्यर्थ इत्युक्तं भवति । कुतः? **साम्यश्रुतेः** । 'केन स्याद्येन स्यात्तेनेदृश एव' (बृ. ५.५.१) इति साम्यश्रुतेरित्यर्थः । उक्तकामचरणाङ्गीकार एव विहितेषु किञ्चिदकरणनिमित्तकसाम्यासम्भवस्य प्राप्तिसद्भावात् 'तेनेदृश एव' (बृ. ५.५.१) इति साम्योक्तिः । प्राप्तासम्भवनिवृत्तिकत्वेन सम्यक् सम्बद्ध्यत इति भावः ।

एवं 'केन स्यात्' (बृ. ५.५.१) इति वाक्यस्य यथेष्टाचारविधित्वाभावमभ्युपेत्यार्थद्वयमुक्तम् । अथ स्वेच्छाचरणविधिरूपमर्थान्तरं वक्ति -

**ॐ विधिर्वा धारणवत् ॐ (३-४-२०)**

**(सू.)** 'केन स्यात्' (बृ. ५.५.१) इति ज्ञानिनो यथेष्टाचरण**विधिः** । **वा**शब्दोऽधिकारिभेदेन प्रागुक्तेन व्यवस्थितविकल्पार्थः । तर्ह्यज्ञस्याप्येवं स्यादित्यत - **धारणवत्** । यथा वेदावधारणं त्रैवर्णिकानामेव विहितं नान्येषाम् एवं स्वेच्छाचरणविधिर्ज्ञानिनामेव भवति नान्येषामित्यर्थः ।

स्वेच्छाचरणविधिमाक्षिप्य समाधत्ते -

**ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ (३-४-२१)**

**(सू.)** यदुक्तं 'केन स्यात्' (बृ. ५.५.१) इति स्वेच्छाचरणं विधीयत इति न तद् युक्तम् । किन्तु **स्तुतिमात्रं** = पूर्वोक्तस्तुतिरेव न विधिः । कुतः? **उपादानात्** । ज्ञानिभिरपि 'सन्ध्यामुपासीत' (ब्र.सू.भा.उ. श्रुतिः, पृ. २६४) इत्यादिसर्वजनसाधारणविधिस्वीकारात् स्वेच्छाचरणविधौ

तदयोगादिति **चेन्न** । कुतः ? **अपूर्वत्वात्** । अः परमात्मा पूर्वको (पूर्वो ) येषां तेऽपूर्वास्तेषां भावः अपूर्वत्वं तस्मात् परमात्माधीनत्वादित्यर्थः ।

इदमुक्तं भवति । 'केन स्यात्' (बृ. ५.५.१) इत्यस्य स्वेच्छाचारविधित्वरहितस्तुतित्वे[1] ज्ञानिनां स्वेच्छाचरणविध्यभावेन स्तुतिमात्रविषयत्वप्राप्त्या सर्वविध्यतिदूरत्वेन स्तुतिमात्रविषयत्वं स्यात् । तच्चायुक्तम् । तस्य ब्रह्मलक्षणत्वात् । ज्ञानिनश्च ब्रह्माधीनत्वेनाब्रह्मत्वादिति ॥ २१ ॥

ज्ञानिनां स्वेच्छाचारविधौ स्पष्टं प्रमाणमाह -

**ॐ भावशब्दाच्च ॐ ॥ ३-४-२२ ॥**

(सू.) सामान्यविधिविषयस्य परब्रह्मसाम्यव्यवच्छेदाय स्वेच्छाविषयत्वस्यापूर्वत्वादित्यनेनार्थसिद्धत्वाच्चशब्दः ।

'यथाविधानमपरे विधिर्भावे प्रजापतेः ।
ब्रह्मणः परमस्यैव सर्वविध्यतिदूरता ॥'

(ब्र.सू.भा.उ.तुरश्रुतिः, पृ.२७१)

इतीच्छावाचि**भावपदोपेतश्रुते**श्चेत्यर्थः ॥

'केन स्यात्' (बृ. ५.५.१) इति श्रुतेः पञ्चमषष्ठसप्तमैरुक्तार्थस्य परस्परविरुद्धत्वेनाव्यवस्थितत्वमाशङ्क्य तन्निषेधपूर्वकं ज्ञानिनामनेकप्रकारतामाह -

**ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ (३-४-२३)**

१. 'स्वेच्छाचारविधित्वस्तुतित्वे' इति क्वचित् पाठः ।

**(सू.)** 'प्रातरुत्थाय' (ब्र.सू.भा.उ.श्रुतिः) इति वाक्यानुसारेण जैमिनिमतमवलम्ब्य ज्ञानिभिः समस्तं कार्यमित्यर्थ उक्तः । तथा 'यस्त्वात्मरतिः' (भ.गी. ३.१७) इत्यादिवाक्यानुसारेण स्वेच्छाचरणानुज्ञानमर्थ उक्तः । पुनश्च 'यथाविधानं' (ब्र.सू.भा.उ.तुरश्रुतिः) इत्याद्यनुसारेण स्वेच्छाचरणविधायकत्वमुक्तम् । ततश्च 'केन स्यात्' (बृ. ५.५.१) इत्यादिव्यपदेशाः **पारिप्लवार्थाः** स्थिरत्वनिवृत्त्यर्थाः [1]चञ्चलत्वार्थाः अस्थिरत्वार्थाः स्युः । यथावस्तुबोधका न भवन्ति । प्रकारत्रयस्य परस्परविरुद्धत्वात् **इति चेन्न** । 'त्रेधा ह वाव ज्ञानिनो भवन्ति'[2] इति श्रुतौ 'विधिनियता मनुष्याः अनियता देवाः ब्रह्मैव स्वेच्छानियतः' (ब्र.सू.भा.उ.गौपवनश्रुतिः, पृ.२७२) इति **विशेषितत्वात्** । ज्ञानिनामनेकप्रकारत्वाभिधानादित्यर्थः ।

ईदानीं ज्ञानिनामनेकत्वोक्तेः प्रकृतोपयोगमाह-

**ॐ तथा चैकवाक्योपबन्धात् ॐ** (३-४-२४)

**(सू.) तथा च** एवं ज्ञानिनां त्रैविध्ये 'प्रातरुत्थाय' (ब्र.सू.भा.उ.श्रुतिः) इत्यादिवाक्यानां 'यस्त्वात्मरतिः' (भ.गी. ३.१७) इत्यादीनां 'यथाविधानमपरे' (ब्र.सू.भा.उ.तुरश्रुतिः) इत्यादीनां **चैकवाक्यतया उपबन्धात्** सम्बन्धात्, भिन्नविषयत्वसम्भवेन, विरोधाभावादिति यावत् । तथा च तेषामविरोधे सति 'केन स्यात्' (बृ. ५.५.१) इति वाक्यस्याप्येकवाक्यत्वोपबन्धाद् अपरिप्लवार्थोपबन्धाद् ज्ञानि-

---

१. 'चञ्चलार्थाः अव्यवस्थितार्थाः' इति क.पाठः ।

२. 'त्रेधा ह वाव ज्ञानिनो भवन्ति विधिनियता अनियताः स्वेच्छानियता इति । विधिनियता मनुष्याः अनियता हि देवाः ब्रह्मैव स्वेच्छानियतः' इति (ब्र.सू.भा.उ.गौपवनश्रुतिः, पृ. २७२)

भेदस्त्वित्यर्थत्वयोगादित्यर्थः । अनेन जैमिनिमतं मानुषविषयं द्वितीयं देवताविषयं तृतीयं हिरण्यगर्भविषयमित्युक्तं भवति ।

ननु कामचारश्रुत्याऽसत्प्रवृत्तेः[1]मोक्षप्रतिबन्धकत्वसिद्धावपि ज्ञानस्य मोक्षजननेऽग्निहोत्रादिसत्प्रवृत्तिसापेक्षत्वं स्यादित्यत आह -

**ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ (३-४-२५)**

**(सू.) अत एव** कामचाराणां मोक्षस्य पठितत्वादेव ज्ञानस्य मोक्षसाधनत्वे **अग्नीन्धनाद्यनपेक्षा** अग्नेरिन्धनं सन्दीपनं यस्मिन् तत् अग्निहोत्रं तस्यानपेक्षा अग्निहोत्रादिसत्प्रवृत्तिसापेक्षत्वं नास्तीत्यर्थः । **च**-शब्दोऽज्ञानिनः सदसत्प्रवत्तिभ्यां विशेषसत्त्वेऽपीति समुच्चिनोति । तेन ज्ञानिनः कथं विशेष इति परिहृतम् ।

**(त.दी.)**चशब्दो ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषसत्त्वेऽपीति वा, 'येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः। शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ॥' (ब्र.सू.भा.उ. ब्रह्मतर्कवचनम्, पृ.२७४) इत्यादिस्मृतिं वा समुच्चिनोति । **(पृ.सं. २७०)**

किञ्च ज्ञानस्य लिङ्गभङ्गरूपमोक्षजनने किं ज्ञानपूर्वकालीनकर्मसापेक्षत्वमुच्यते ? तदुत्तरकालीनकर्मसापेक्षत्वं वेति विकल्पं हृदि निधायाऽद्ये आह -

**ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ (३-४-२६)**

**(सू.) सर्व**सत्प्रवृत्तीनाम् **अपेक्षा च** ज्ञानोत्पत्त्यर्थमेव । न ज्ञानस्य मोक्षसाधनत्वे । कुतः ? **यज्ञादिश्रुतेः** । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ.उ. ६-४-२२) इति श्रुतेः । ननु ज्ञानार्थस्यापि

---

१. 'मोक्षाप्रतिवन्धकत्वसिद्धावपि' इति क.पाठः ।

सत्कर्मणो मोक्षार्थमपेक्षितत्वमपि किं न स्यादित्यतः- **अश्ववत्**। यथा गतिसाधनाश्वादयो निष्पन्नायां गतौ गतिसाध्यफले नापेक्ष्यन्ते तथा कर्माणि ज्ञानसाधनानि, निष्पन्ने ज्ञाने न तत्फलार्थमपेक्षितानीत्यर्थः ।

उक्तसत्प्रवृत्तेरस्तु (ज्ञानपूर्वकालीनसत्प्रवृत्तेः) ज्ञानप्रतिष्ठापकत्वं सम्पूर्णफलकत्वे प्रमाणोक्त्या ज्ञानस्य लिङ्गभङ्गरूपमोक्षजनने उत्तरसत्प्रवृत्त्यपेक्षेति द्वितीयं परिहरति -

**ॐ शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॐ** (३-४-२७)

(सू.) यद्यप्यस्ति ज्ञानिनो मोक्ष**स्तथाऽपि** ज्ञानस्यैव मोक्षहेतुत्वेऽपि ज्ञानी **शमदमाद्युपेतः**[१] **स्यात्** । कुतः ? **तद्विधेः** । 'आचार्याद् विद्यामाप्येतमात्मानमभिपश्य शान्तो भवेद् दान्तो भवेत्'[२] इति माठरश्रुतौ ज्ञानिनोऽपि शमादेर्विधानात् । किञ्च **तदङ्गतया तेषामवश्यानुष्ठेयत्वात्** । 'तस्यै तपो दमः कर्मेति प्रतिष्ठा'[३] इति तेषां शमादीनां तदङ्गतया तस्य ज्ञानस्याङ्गतया प्रतिष्ठापकत्वेनावश्यानुष्ठेयत्वादित्यर्थः । अत्र **तु**शब्देन सत्प्रवृत्तेः पूर्णफलत्वसूचनेनासत्प्रवृत्तेरल्पफलहेतुत्वमर्थात् सूचितमिति ज्ञेयम् ।

---

१. सूत्रे यद्यपि 'शमाद्युपेतः' इति सुवचम् ।अल्पाक्षरत्वात् । तथाऽपि श्रुतौ पृथङ्निर्देशात् सर्वत्र साहचर्याच्च उभयोपादानमिति भाष्यदीपिकोक्तरीत्याऽवधेयम् ।

२. 'आचार्याद् विद्यामाप्येतमात्मानमभिपश्य शान्तो भवेद् दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेत् परिचरेदाचार्यम् ॥' इति (ब्र.सू.भा.उ.माठरश्रुतिः, पृ.२७७)

३. 'ब्राह्मीं वाव त उपनिषदमब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनं यो वा एतामुपनिषदमेवं वेद' इति (के.उ. ४-७-८,९, पृ. २७९)

ननु यदि सदसत्प्रवृत्तिभ्यामस्ति ज्ञानिनो विशेषस्तर्हि कथं 'एवंविन्निखिलं भक्षयीतैवमेव स भवति'[१] इति तस्य निषिद्धान्नभोजनेऽपि ह्रासाभावोक्तिरित्यतो वक्ति -

**ॐ सर्वान्नानुमतिश्च प्राणात्यये दर्शनात् ॐ (३-४-२८)**

(सू.) अत्र चशब्दः पूर्वपक्षव्यावृत्त्यर्थः । नैतच्छ्रुतिबलेन ज्ञानिविशेषाभावो वक्तव्यः । 'एवंवित्' (ब्र.सू.भा.उ.श्रुतिः) इति **सर्वान्नानुमतिश्रुतिः प्राणात्यये** प्राणात्ययकाले ज्ञानी यदि निषिद्धं भुञ्जीत तर्हि तस्य न तेन विशेष इति प्राणात्ययविषयासाधारणश्रुतेः । कुतः प्राणात्ययविषयत्वकल्पनमित्यतः- **तद्दर्शनात्** । 'न वा अजीविष्यमिमानखादन्निति होवाच कामो मे उदपानम्' (छा.उ.१-१०-४) इत्युच्छिष्टोदकत्यागेन उच्छिष्टकुल्माषाभक्षणे जीवनं न स्यादिति तद्भक्षणं दृश्यत इति लिङ्गदर्शनादित्यर्थः ।

यदत्रोक्तं ज्ञानिनां न निषिद्धं त्याज्यमिति तत्र वक्तव्यम् । किं निषिद्धाकरणे बाधकसद्भावान्निषिद्धं कर्तव्यमित्युच्यते उत विधिसद्भावाद् उत निषेधकाभावाद् अथ करणे बाधकाभावाद् वेति विकल्पं हृदि निधाय नाऽद्यद्वितीयावित्याह -

**ॐ अबाधाच्च ॐ (३-४-२९)**

(सू.) 'अन्याय्यचरणाभावे नहि ज्ञानस्य बाधनम्'[२] इति **बाधकाभावकथनादित्यर्थः** ।

---

१. 'यदि ह वा अप्येवंविन्निखिलं भक्षयीतैवमेव स भवति' इति (ब्र.सू.भा.उ. श्रुतिः, पृ.२७९)

२. 'अन्याय्यचरणाभावे नहि ज्ञानस्य बाधनम् । अतो विद्वानपि न्याय्यं वर्ततोत्कर्षसिद्धये ।' इति (ब्र.सू.भा.उ.ब्रह्मतर्कवचनम्, पृ. २८१)

(त.दी.) किञ्चेति चार्थः। (पृ.सं.२७७)

निषेधकस्मृतिसद्भावान्न तृतीयोऽपीत्याह -

**ॐ अपि स्मर्यते ॐ (३-४- ३०) ॐ**

(सू.) 'अतीतागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाऽचारं श्रौतं स्मार्तं
विलङ्घयेत् (परित्यजेत्)(विसर्जयेत्) ॥'

(ब्र.सू.भा.उ.हरिवंशवचनम्, पृ. २८१)

इति [१]स्मर्यतेऽपीत्यर्थः ।

स्मृत्युपोद्बलकां श्रुतिं चाऽह -

**ॐ [२]शब्दश्चातोऽकामचा(का)रे ॐ (३-४-३१)**

(सू.) कामचरणाभावे 'न कामचरितं चरेत्'[३] इति [४]**शब्दश्च** कौण्डिन्य-

---

१. 'ब्राह्मणो न हन्तव्यः'(श्रुतिः) इति निषेधकप्रमाणस्य ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ (३-४-१८) इत्यत्रोक्तत्वात् पुनरत्र कथने पुनरुक्तिरिति न शङ्क्यम् । पूर्वत्रोदाहृतं निषेधकप्रमाणं श्रुतिरूपमत्रोदाहृतं तु स्मृतिरूपमिति भेदात् । अतो न पौनरुक्त्यम् । (भावदीपः. पृ. ३१७)

२.'शब्दश्चातोऽकामकारे' इति ह.पाठः। (पृ. १७९)

३. 'स य एतदेवं विदेवं मन्वान एवं पश्यन्न कामचरितं चरेन्न कामं भक्षयीत न काममनुवर्तेत' इति (ब्र.सू.भा.उ.कौण्डिन्यश्रुतिः, पृ. २८२)

४. नन्वत्र श्रुतिरूपनिषेधकप्रमाणोदाहरणे पुनः पुनरुक्तिरिति चेन्न । यथा वियदधिकरणे 'अस्ति तु' (ब्र.सू.२.३.२) 'गौण्यसम्भवात्'(ब्र.सू.२.३.३) इत्युक्तस्यैव 'शब्देभ्यः' इत्यनेन प्रपञ्चितं तथाऽत्रापि प्रागुक्तमेव 'स य एतदेवं विदेवं मन्वान एवं पश्यन् कामचरितं चरेत्' (ब्र.सू.भा.उ.कौण्डिन्यश्रुतिः) इति श्रुत्यन्तरोक्त्या प्रपञ्चितमित्यदोषः । पूर्वोक्तनिषेधश्रुतौ ज्ञानिपरत्वस्यास्फुटत्वाद् अत्र 'एवंवित्' इत्यादिना स्फुटत्वाय प्रपञ्चनमिति तत्त्वप्रदीपे व्यक्तम् । इति (भावदीपः, पृ. ३१७)

श्रुतिश्चास्ति । चतुर्थं निराकर्तुमसत्प्रवृत्तिनिराकरणे बाधकमाह- **अतः** ।। 'तथाऽपि तु' (ब्र.सू. ३.४.२७) इति प्राचीनसूत्रे सूचित-मसत्प्रवृत्तेरल्पफलत्वं तदिहातःशब्देन परामृश्यते । तथा च **अतः** अपूर्णफलप्राप्तेर्बाधकत्वान्न बाधकाभावकल्पो युक्त इत्यर्थः ।

नन्वस्तु निषिद्धाचरणे फलह्रासादिबाधकसद्भावात् तत्परित्यागः। तर्हि ह्रासकारणत्यागे ज्ञानादेव सम्पूर्णफलसिद्धेर्न सत्कर्म कार्यमित्यत आह -

**ॐ विहितत्वाच्चाऽश्रमकर्मापि ॐ (३-४-३२)**

(सू.) **अपि**शब्दो वर्णधर्मसमुच्चायकः । न केवलं निषिद्धाकरणेन पूर्यते । अपि च **वर्णाश्रमोचितं कर्म** च कर्तव्यम् । कुतः ? **विहितत्वात्**। 'पश्यन्नपीममात्मानं कुर्यात् कर्माविचारयन् ।'[१] इति कौषारवश्रुतौ विहितत्वादित्यर्थः ।

ननु विहितमपि कर्म निष्फलत्वात् कथं कर्तव्यमित्यतः वर्णाश्रमोचितकर्मणः आनन्दवृद्धौ ज्ञानसहकारित्वेन सफलत्वमाह-

**ॐ सहकारित्वेन च ॐ (३-४-३३)**

(सू.) 'यथा राज्ञः'[२] इति कमठश्रुतौ सम्पूर्णफलसिद्धौ कर्मणः ज्ञान**सहकारित्वेनो**क्तत्वादित्यर्थः । यथा मन्त्रिणं विनाऽपि कार्यकरण-समर्थस्य राज्ञः फलातिशयहेतुत्वेन मन्त्री सहकारी एवं सदाचारं विनाऽपि

---

१. 'पश्यन्नपीममात्मानं कुर्यात् कर्माविचारयन् । यदात्मनः सुनियतमानन्दोत्कर्ष-माप्नुयात् ।।' इति (ब्र.सू.भा.उ.कौषारवश्रुतिः, पृ. २८३)

२. 'यथा राज्ञः सहकार्येव मन्त्री तथाऽप्यृते तं क्षितिपः कार्यमृच्छेत् । एवं ज्ञानं कर्म विनाऽपि कार्यं सहायभूतं न विचारः कुतश्चित् ।।' इति (ब्र.सू.भा.उ. कमठ-श्रुतिः, पृ. २८३,२८४)

लिङ्गभङ्गाख्यमोक्षदानसमर्थस्यापि ज्ञानस्य फलातिशयहेतुत्वेन सहकारिणः सदाचारस्याऽवश्यकत्वमित्युक्तं भवति ॥ ४ ॥

॥ इति स्तुत्यधिकरणम् ॥ ४ ॥

## ॥ ५ ॥ अथ उभयलिङ्गाधिकरणम् ॥

### (अपरोक्षज्ञानस्याधिकारिमात्रप्राप्यत्वकथनम्)

अत्रापरोक्षज्ञानस्याधिकारिमात्रप्राप्यत्वं समर्थ्यते ।

**ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ (३-३-३४)**

(सू.) **सर्वथाऽपि** गुरूपसत्त्याद्यनेकोत्साहेऽपि **त एव** योग्या एव ज्ञानं प्राप्नुवन्ति । नायोग्याः । प्रत्युत विपरीतज्ञानमाप्नुवन्तीत्यर्थः । कुतः? **उभयलिङ्गात्** ॥ 'य आत्माऽपहतपाप्मा'[1] इति श्रुतिरूपेणेन्द्रविरोचनयोरेकप्रकारेण चतुर्मुखोपदेशसाम्येऽपीन्द्र एव सम्यग् ज्ञानमाप । विरोचनस्तु विपरीतज्ञानमापेत्युभयविधलिङ्गादित्यर्थः ।

ननु महता प्रयत्नेन विश्वामित्रस्य विप्रत्वदर्शनादसुराणामपि योग्यताभिभवेन देवत्वप्राप्तिः किं न स्यादित्यतो ब्रूते -

**ॐ अनभिभवं च दर्शयति ॐ (३-४-३५)**

(सू.) स्वभावस्येति शेषः । 'दैवीमेव सम्पत्तिं देवा अभिगच्छन्ति । आसुरीमेव चाऽसुराः नैतयोरभिभवः कदाचित्'[2] इति श्रुतिः स्वभावस्य

---

१. 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति (छा.उ. ८-७-३)

२. 'दैवीमेव सम्पत्तिं देवा अभिगच्छन्ति । आसुरीमेव चाऽसुराः नैतयोरभिभवः कदाचित् स्वभाव एव ह्यवतिष्ठते' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. २८८)

**अनभिभवं च दर्शयति** । योग्यतादेः स्वभावत्वाद् विप्रत्वादेर-स्वभावत्वादित्यर्थः ।

नन्वतिदृढासुरस्वभावाभिभवासम्भवेऽपि अतथाभूतमध्यममनुष्य-स्वभावाभिभवसम्भवादनधिकारिप्राप्यमेव ज्ञानमित्याशङ्कायां तत्स्वभावस्याप्यनभिभवप्रयोजकं दार्ढ्यमाह -

**ॐ अन्तरा चापि तु तद्दृष्टेः ॐ** (३-४-३६)

(सू.) **च**शब्द एवार्थः । प्रकरणात् सम्यग्ज्ञानविपरीतज्ञानयोरित्यस्य लाभः । योग्यतया मानवानामिति लभ्यते । अपिपदात् पूर्व-सूत्रोक्तोऽनभिभवोऽनुकृष्यते । तथा च मानवानां सम्यग्ज्ञानविपरीत-ज्ञानयो**रन्तरा** स्थितिश्च स्थितिरेव, मिश्रज्ञानित्वमेवेति यावत् । **अपि** मिश्रस्वभावानभिभव एव मिश्रबुद्धित्वमेव, न शुद्धज्ञानादिप्राप्तिः । कुतः? **तु तद्दृष्टेः** । तदिति तन्त्रम् । तु विशेषेण तेषां मानवानां तस्मिन् मिश्रज्ञाने तस्य दार्ढ्यस्य दृष्टेरित्यर्थः ।

ननु सम्यग्ज्ञानयोग्यत्वादीनां त्रयाणां देवादिस्वभावत्वे भवेदभि-भवाभावः । तदेव कुत इत्यतः स्मृतिरूपं प्रमाणं वक्ति -

**ॐ अपि स्मर्यते ॐ** (३-४-३७)

(सू.) 'असुरा आसुरेणैव'[१] **स्मृते**श्चेत्यर्थः । एतत्सूत्रस्मारित-

१. 'असुरा आसुरेणैव स्वभावेन च कर्मणा । ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ।। देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् । सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ।। नानयोरन्यथाभावः कदाचित् क्वापि विद्यते । मानुषा मिश्रमतयो विमिश्रगतयोऽपि च ।।' इति (ब्र.सू.भा.उ.स्कान्दवचनम्, पृ. २८९, २९०)

सम्यग्ज्ञानतत्फलयोरधिकारिमात्रप्राप्यत्वे ईश्वरानुग्रहविषयत्वरूपं हेत्वन्तरमाह -

**ॐ विशेषानुग्रहं च ॐ (३-४-३८)**

(सू.) 'श्रुण्वे वीर उग्रमुग्रं दमायन्'[१] इति श्रुतिर्देवेष्वेव परमेश्वरस्य **विशेषानुग्रहं च** दर्शयति अतश्च तद्धेतुज्ञानमपि तेषामेवेत्यर्थः ।

दैत्यानामासुरस्वभावानभिभवे प्रामाणिकासुरभागज्यायस्त्वरूपां युक्तिमाह -

**ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॐ (३-४-३९)**

(सू.) **अत** इति अनभिभवं चेत्युक्तस्वभावनभिभवस्य 'विशेषानुग्रहं च' (ब्र.सू. ३.४.३८) इत्यत्र प्रकृतदेवभागस्य च परामर्शकः । तुशब्द एवार्थः । **अतस्तु** स्वभावनभिभवादेव अतः देवभागाद् **इतरज्ज्यायः** असुरभागो बहुलः । कुतः ? **लिङ्गात्** 'तस्मान्न जनतां' (बृ. ३.३.१०) इत्युक्तजनताप्रवेशनिषेधाख्यलिङ्गाच्च । 'ततः कनीयसा एव देवा ज्यायसा असुराः' (बृ.उ. ३-३-१) इति श्रुतेश्चेत्यर्थः ।

स्वोक्तार्थे प्रमाणसिद्धजैमिन्याचार्यसम्मतिमाह -

**ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमाऽतद्रूपाभावेभ्यः ॐ (३-४-४०)**

(सू.) तच्छब्दोऽतस्त्वितरदिति प्रकृतदैवासुरभागपरामर्शः । **भूत**शब्दः स्वभावरूपजातिपरः । **तु**शब्द एवार्थः । **अभाव**शब्दो भावस्याप्युपलक्षकः । तथा च **तद्भूतस्य तु** तद्भावः देवजातेरेव देवत्वमसुर-

१. 'श्रुण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमति नेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥' इति (ऋ. ६.४७.१३, पृ. २९१)

जातेरेवासुरत्वमिति बादरायणोक्तप्रमेयं **जैमिनेरपि** सम्मतम् । न व्यासस्यैवेत्यपेरर्थः । कुतः ? **नियमाऽतद्रूपाभावेभ्यः** । 'नासुरा दैवीं न देवा आसुरीम्' इति **नियमश्रुतेः** । 'नासुराणां दैवं रूपं न देवानामासुरं'[१] **इत्यतद्रूपत्वश्रुतेः** । 'तं भूतिरित्युपासाञ्चक्रिरे'[२] इति देवासुराणां **भूत्यभूतिश्रुतेश्चे**त्यर्थः ॥ ५ ॥

॥ इत्युभयलिङ्गाधिकरणम् ॥ ५ ॥

## ॥ ६ ॥ अथाऽधिकारिकाधिकरणम् ॥

### (देवादिपदानाकाङ्क्षिभिरेव ज्ञानं प्राप्यत इति निरूपणम्)

अत्रापरोक्षज्ञानस्य देवादिपदाकाङ्क्षाशून्याधिकारिमात्रप्राप्यत्वं प्रतिपाद्यते ।

**ॐ न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॐ**

(३-४-४१)

(सू.) **च**शब्दः ज्ञानार्थिनां देवादिपदाकाङ्क्षाशून्यतालक्षणेत्थम्भाव-सूचकः । नाधिकारिकमपि तदयोगादिति सम्बन्धः । **आधिकारिकमपि** ब्रह्माद्याधिकारिकं पदमपि नान्यैः प्राप्यम् । किमु परमात्मैश्वर्यादिकं , कुतः ? **तदयोगात्** । तस्याः तदाकाङ्क्षाया एवायोगात् । तदपि कुतः? **पतनानुमानात्** । ब्रह्मादिपदाकाङ्क्षावान् पतति अयोग्यारोह-प्रवृत्तिमत्त्वात् । अयोग्यारोहप्रयत्नयुक्तवदित्यनुमानादित्यर्थः ।

---

१. 'नासुराणां दैवं रूपं न देवानामासुरं न चोभयं मनुष्याणां यो यद्रूपः स तद्रूपो निसर्गो ह्येष भवति' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. २९३,२९४)

२. 'तं भूतिरित्युपासाञ्चक्रिरे ते बभूवुस्तस्माद्धा अप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्य भूरित्यसुरास्ते ह पराबभूवुः' इतिं (ऐ.आ. २.१.८, पृ.२९४)

(त.दी.) यस्य यस्मिन् पदेऽधिकारः श्रुत्यादिसिद्धः तद् ब्रह्मादिदेवपदम् आधिकारिकम्। विमतो देवादिभिः पात्यते, अशक्यतत्पदेच्छुत्वात् राजपदेच्छुवदिति वा पतनानुमानादित्यर्थः । आद्ये इच्छाया यत्नविशेषत्वोपगमान्नासिद्धिः ।

देवपदमिति वाच्ये आधिकारिकमित्युक्तिः तत्तदधिकारिभिः प्राप्यं तदन्यैर्नाऽऽकाङ्क्ष्यमिति सूचयितुम्। तेन योग्यानामपि तत्तदाकाङ्क्षावतां ज्ञानानवाप्तिः अनुमानबाधादिदोषश्च स्यादिति शङ्कानवकाशः। (पृ.सं.२९४,२९५)

एवं देवादिपदस्यानाकाङ्क्ष्यत्वेऽनुमानरूपं प्रमाणमभिधाय कैमुत्येनापि समर्थयति -

**ॐ उपपूर्वमपीत्येके भावशमनवत् तदुक्तम् ॐ (३-४-४२)**

(सू.) **उप**शब्दः समीपवर्तिवाची। पूर्वसूत्राद् देवतावाचकाधिकारिकपदस्यार्थवशादनुवृत्तिः। **पूर्व**शब्दः प्रभृत्यर्थकः। **अपि**शब्दः कैमुत्यार्थः। तथा च **भावशमनवत्** ऋषिपदवद् **उपदेव-पदमपि** देवानामुप वर्तमानानां गन्धर्वादीनां पदमपि नाऽऽकाङ्क्ष्यं किमु देवपदम्। कुतः ? **तदुक्तम्**। **तत्** अनाकाङ्क्ष्यत्वं 'अथ यथर्षीन् प्रजापतीन् नाऽऽकाङ्क्षेद्देवं न गन्धर्वान् न विद्याधरान् न सिद्धान्' (ब्र.सू.भा.उ. श्रुतिः, पृ. २९९) इति श्रुतावुक्तमित्यर्थः । अहं कश्चिद् ऋषिः स्यामित्यविशेषाकाङ्क्षायां न विरोधः। वशिष्ठः स्यां विश्वामित्रः स्यामिति विशेषाकाङ्क्षायामस्त्येव दोष इति देवादिपदेभ्यो मुन्यादिपदाकाङ्क्षायां विशेषज्ञापनायैक इत्युक्तम् ।

(त.दी.) गन्धर्वानिति वा गन्धर्वादिपदमिति वा वाच्ये उपेत्याद्युक्तिः तत्समीपवर्तिनामपि पदं नाऽऽकाङ्क्ष्यं किमु तेषामित्यपिपदसूचितकैमुत्यव्यक्त्यर्था । ऋषिवदिति वाच्ये भावेत्याद्युक्तिः 'भावे चित्ते चेष्टायां च शमनाद् भावशमना

ऋषयः' इति तत्त्वप्रदीपोक्त्या ऋषिस्वरूपोक्त्यर्था। तेन ऋषित्वजातेरभावाद् वसिष्ठादिः स्याम्' इतीच्छाया अयोगेऽपि 'ऋषिः स्याम्' इति सामान्येच्छा न विरुद्धेति सूचितमिति केचित् । अत एव देवादिपदेभ्यो मुन्यादिपदाकाङ्क्षायां विशेषसूचनायैक इत्युक्तिः। एके विशेषविवक्षवः। ऋषिपदं यथाऽनाकाङ्क्ष्यं तथै-तदपीत्याहुरित्युक्त्या ऋषिसामान्यविवक्षवस्त्वाकाङ्क्ष्यमित्याहुरिति लाभात्। उपदेवादिपदं तु सर्वथाऽनाकाङक्ष्यमिति । विमतिसाम्येऽपि मुनिपदस्य दृष्टान्तत्वं श्रुत्यनुसारात्। (पृ.सं.२९७,२९८,२९९)

ननु तर्हि शुभत्वाविशेषाद् [१]देवतादिपदवद् ज्ञानभक्त्यादिकमपि नाऽकाङ्क्ष्यं स्यादित्यतो वक्ति -

ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ (३-४-४३)

(सू.) **बहिस्तु** देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र ज्ञानभक्त्यादिशुभविषये विशेषोऽस्ति । स कः? **उभयथाऽपि** आकाङ्क्षानाकाङ्क्षयोरपि न पतनम्। आकाङ्क्ष्यमेवेति हृदयम्। कुतः ? **उभयथा स्मृतेः**

'देवर्षिगन्धर्वाणां पदाकाङ्क्षी[२] पतेद् ध्रुवम्।
अन्यत्र पद(शुभ)माकाङ्क्षन् न पतेदविरोधतः ।।'[३] इति।

देवादिपदाकाङ्क्षिणः पतनं तदितरशुभाकाङ्क्षिणः न पतन-मित्युभयथाऽपि स्मृतेः । **आचाराच्च**। 'नानात्वमेव कामानां'[४] इत्यत्र

१.'देवतापदादिवत्' इति क. पाठः।

२. 'पदाकाङ्क्षः' इति क.पाठः।

३. (ब्र.सू.भा.उ.स्मृतिः, पृ. ३०२)

४. 'नानात्वमेव कामानां नाकामः क्व च दृश्यते। अतोऽविरुद्धकामः स्यादकामस्तेन भण्यते' इति (ब्र.सू.भा.उ.वचनम्, पृ. ३०२)

'अतोऽविरुद्धकामः स्यात्' (ब्र.सू.भा.उ.वचनम्) इत्यविरुद्ध-कामेनाऽचाराभिधायकवाक्याच्चेत्यर्थः ॥ ६ ॥

**॥ इत्याधिकारिकाधिकरणम् ॥ ६ ॥**

**(त.दी.)** विहायेति वाक्ये सर्वकामप्रहाणोक्तेः कथं भक्त्यादिकाम इत्यत आचाराच्चेत्युक्तिः। चः स्मृतिसमुच्चायक इति भाष्यादौ भाति। तत्त्वप्रदीपे तु चकारात् 'ऋषभं मा समानानां' (श्रुतिः) इति श्रुतेश्चेत्युक्तम्। ( **पृ.सं.३०१**)

## ॥ ७ ॥ अथ फलश्रुत्यधिकरणम् ॥

**(ज्ञानस्वामिनां देवानां ज्ञानदातुराचार्यस्यापि ज्ञानं फलदमिति कथनम्)**

अत्रापरोक्षज्ञानस्य स्वनियामकदेवानां मुख्यतया ज्ञानदातुराचार्य-स्यापि फलदत्वं समर्थ्यते।

अत्र द्वे दर्शने। स्वामिनः फलश्रुतेरित्यारभ्य सूत्रत्रयं सिद्धान्ताभिधायकमिति तत्त्वप्रदीपकृत्पण्डिताचार्यस्य मतम्। आद्यसूत्रं पूर्वपक्षसूत्रम्। आर्त्विज्यमित्यारभ्य सूत्रद्वयं सिद्धान्ताभिधायकमिति टीकाकृतो मतम्। इदमेव तत्त्वं सङ्गृह्योपदिशन्ति सत्यनाथस्वामिनो मन्मन्त्रगुरवः -

'उक्तं मतद्वयं सूत्रभाष्यकारविनिश्चितम्।
जानन्तौ बोधसिद्ध्यर्थं शिष्याणामाहतुः पृथक्।
टीकाकारावतस्तत्र न निषेधः कथञ्चन॥' (अभिनवचन्द्रिका,पृ.१७०)

इति।

देवानामेव फलं न प्रजानामिति पूर्वपक्षयति -

**ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ** (३-४-४४)

(सू.) 'ब्रह्मविदाप्नोति' (तै.२-१) इति श्रुतिसिद्धं भगवत्प्राप्त्यादि-

ज्ञानफलमिन्द्रियादिप्रेरकत्वेन ज्ञानस्वामिनां देवानामेव भवति न प्रजानाम् । कुतः ? **स्वामिनः फलश्रुतेः** । 'यदु किञ्चेमाः प्रजाः शुभमाचरन्ति'[१] इत्यत्र 'स्वामी हि फलमश्नुते । नास्वामी कर्म कुर्वाणः' (ब्र.सू.भा.उ.माध्यन्दिनायनश्रुतिः) इति प्रेरकत्वादिज्ञानस्वामिनामेव फलं न प्रजानामिति फलश्रुते**रित्यात्रेयो** मन्यत इत्यर्थः ।

**(त.दी.)** देवानामिति वाच्ये स्वामीत्युक्तिः तेषामेवेन्द्रियादिप्रेरकत्वेन ज्ञानस्वामित्वादिति हेतुसूच-नाय। श्रुत्यनुरोधेनैकवचनोक्तिः । विमतिसूचनाय मुनिपदम्। **(पृ.सं.३०३,३०४)**

एवमात्रेयमतावलम्बिना पूर्वपक्षिते प्रजानामपि ज्ञानफलमस्तीत्यौडुलोमिमतेन सिद्धान्तयति-

**ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ** (३-४-४५)

**(सू.)** देवैः क्रियमाणस्य ज्ञानयज्ञस्य **आर्त्विज्यम्**[२] अधिकारिणा क्रियते । अतस्तस्यापि ज्ञानफलम् । नच ज्योतिष्टोमादिषु ऋत्विजां यज्ञफलादर्शनाद् आर्त्विज्येऽपि न मुमुक्षोर्ज्ञानफलभावः । यज्ञमात्रे ऋत्विजां फलादर्शनेऽपि सत्रयागे तद्दर्शनेनासम्भावनाभावात् । 'तमेवं विद्वान्' (तै.आ. ३.१२) इति श्रुतिबलेन मुमुक्षोरपि ज्ञानफलनिश्चयसम्भवात् । किञ्च, **तस्मै हि परिक्रियते** तस्मै मुमुक्षवे फलसिद्ध्यर्थं तत्करणानि व्यापारयद्भिर्देवैः ज्ञानयज्ञस्य क्रियमाणत्वात् । तस्यापि

---

१. 'यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किञ्चेमाः प्रजाः विजानते देवा एव तद्विजानते देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः' इति (ब्र.सू.भा.उ.माध्यन्दिनायनश्रुतिः, पृ. ३०३,३०४)

२.'आर्त्विज्यमिति लुप्तोपमा । ऋत्विजामिदमार्त्विज्यम् । ऋत्विजां यज्ञफलमिवेत्यर्थः ।

ज्ञानफलं मोक्षो भवतीत्यौडुलोमिराचार्यो मन्यत इत्यर्थः । ऋत्विक्-सम्बन्धि आर्त्विज्यम्, अल्पमिति यावत् । सत्रयाजे ऋत्विजामिव प्रजानामपि फलमस्तीत्यपि योजनामाहुः ।

**(त.दी.)** आर्त्विज्यमित्युक्तिः सत्रेऽयजमानानां तत्त्वप्रदीपदिशा गृहपतीनामपि यथा फलं तथाऽस्वामित्वेऽपि प्रजानां फलमिति सूचयति । ऋत्विजामगृहीत-दक्षिणत्वेन कर्तृत्वादस्तु फलम् । इह कथमित्यतः तस्मा इत्याद्युक्तिः । (पृ.सं.३०५,३०६)

ननु यदि प्रजार्थं देवैर्ज्ञानयज्ञः क्रियते तर्हि प्रजानामेव फलं स्यात् । न देवानामित्यतो वक्ति-

**ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ**

**(३-४-४६)**

**(सू.)** प्रजानां **सहकार्यन्तरत्वेन** देवान् प्रति ज्ञानदाने सहकारित्वेन **विधानं पक्षेण तृतीयं** तृतीयः पक्षः। कथम् ? **तद्वतो विध्यादिवत्** । **तद्वतः** प्रजावतो राज्ञः शिष्यवतः गुरोश्च **विध्यादि** (पालयेच्च प्रजा राजा शिष्यानध्यापयेद् गुरुः' इति विधिः) **वत्** । **आदिपदात्** फलम् । यथा प्रजाशिष्याणां राजगुरुसहकारित्वेन विधानं फलं च तयोरेव मुख्यं तद्वदित्यर्थः। यथा खलु पालनस्य राज्ञा प्रजार्थं क्रियमाणत्वेऽपि न प्रजानामेव पालनं फलम्, किन्तु राज्ञ एव मुख्यम् । तासां सहकारि-मात्रत्वात् । यथाऽऽचार्येण शिष्यार्थमेव व्याख्यानस्य क्रियमाणत्वेऽपि देवानां मुख्यस्वामित्वेन मुख्यफलं प्रजानां सहकारिमात्रत्वेनाल्पं फलमित्युक्तं भवति ।। ७ ।।

**।। इति फलश्रुत्यधिकरणम् ।। ७ ।।**

**(त.दी.)**अन्तरशब्दः अनुग्राह्यत्वरूपविशेषपरः । तत्सहकारीकरणं च देवानां

तेष्वनुग्रहायेति सूचयति। यद्वा, आचार्यःसहकारी, प्रजास्तु सहकार्यन्तरमिति द्योतयितुम् अन्तरेत्युक्तिः।

देवानामेव फलमिति श्रुत्योक्तमाद्यं मतं पूर्णफलापेक्षया। प्रजानां फलमिति युक्त्योक्तं द्वितीयं मतमल्पफलापेक्षया। आचार्यप्रवेशेन प्रवक्तृत्वं प्रजासु स्थित्वा तदिन्द्रियप्रवर्तनेन ज्ञापनमिति द्वयं देवानां फलाधिक्ये मुख्यं कारणम्। प्रजानां सहकारिमात्रत्वादल्पमिति प्रागुक्तद्वयमुपपादयितुमिदं स्वमतत्वेनोरीकृत-मित्यविरोधः। एतच्च पुण्यविषयम्। प्रजाकृतपापफलं तु देवानां नैवास्ति, किन्त्वसुराणामेवेति ध्येयम्। (पृ.सं.३०८,३०९)

## ॥ ८ ॥ अथ कृत्स्नभावाधिकरणम् ॥

### (ज्ञानाधिकारिणां यतीनामितराश्रमिभ्योऽतिशयवर्णनम्)

अत्र ज्ञानाधिकारिणां यतीनामितरसर्वाश्रमिभ्योऽतिशयः समर्थ्यते।

गृहस्थानामुत्तमत्वसाधकतया परोपन्यस्तछन्दोगश्रुतेः सयुक्तिकं देवतापरत्वमाह -

### ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ (३-४-४७)

(सू.) **गृहिणोपसंहारस्तु** 'कुटुम्बे शुचौ देशे'[१] इति छन्दोगोपनिषदि गृहस्थस्यैव मोक्षमुक्त्वोपसंहारस्तु देवानां **कृत्स्नभावात्** पूर्णगृहिधर्मवत्त्वे सत्वात्, सम्पूर्णगृहस्थधर्मवत्त्वादिति यावत्। तत्परः, नतु मनुष्य-गृहस्थपरः। येन तद्बलेन गृहस्थस्य यतिनोऽप्युत्तमत्वं ज्ञायेतेत्यर्थः।

इदमुक्तं भवति। मनुष्येषु यतेरेव सर्वापेक्षयोत्तमत्वं न गृहिणः। गृहिमोक्षाद् यतिमोक्षस्य चिरकालसाध्यत्वात्। यद्यपि गृहिणां

---

१. 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इति (छा.उ. ८.१५.१, पृ. ३०९)

बहुकर्मस्वधिकारोऽस्ति । तथाऽपि न तैः सर्वाण्यनुष्ठीयन्ते । कतिपयानुष्ठानेनैवापरोक्षज्ञानसिद्धेः । न चैवं गृहिणोपसंहारविरोधः । तस्य देवताविषयत्वादिति ।

ननु देवानां यत्युत्तमत्वं कथमिति शङ्कायामपि कृत्स्नभावादित्युक्तम् । सम्पूर्णयतिधर्मस्यापि तेषु भावादित्यर्थः । अतो गृहिभ्यो यतीनामेवोत्तमत्वे तेभ्यो [१]देवानामुत्तमत्वमित्याशयः । 'कृत्स्ना ह्येते गृहिणो कृत्स्ना ह्येते यतयः'[२] इति श्रुतेः ।

**(त.दी.)** कृत्स्नेत्युक्त्या 'कृत्स्ना ह्येते गृहिणो देवाः' **(ब्र.सू.भा.उ. पौत्रायणश्रुतिः)** इति श्रुतिः सूचिता। देवपर इत्येव वाच्ये कृत्स्नभावादित्युक्तिः तेषां मुख्यगृहित्वेन तत्परत्वोपपादनाय, गृहिणो यतेस्ततोऽपि देवानामाधिक्यलाभाय च। तुः उपसंहारस्य गतिसूचको वा एवार्थःसन् अध्याहृतदेवपर इत्यनेनान्वेति वा । उपसंहार इत्युक्तिर्मुक्तौ गृहस्थस्याऽधिक्ये तात्पर्यमस्तीति पूर्वपक्षदार्ढ्यसूचनाय। **(पृ.सं.३११,३१२)**

देवानां यतिभ्य उत्तमत्वे सर्ववर्णाश्रमकर्मवत्त्वरूपं हेत्वन्तरमाह -

**ॐ मौनवदितरेषामप्युपदेशात् ॐ (३-४-४८)**

**(सू.)** "यथा ह्येते मुनयः एव सर्ववर्णाः सर्वाश्रमाः'[३] इति श्रुतौ **मौनवत्**

---

१. 'देवानामेवेत्याशयः' इति क.पाठः ।

२. 'कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यतयोऽत एतेषां न पुत्रा दायमुपयन्ति न चैते गृहान् विसृजन्त्यरागा अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तारः' इति (ब्र.सू.भा.उ.पौत्रायणश्रुतिः, पृ. ३१०)

३. 'देवा एव ब्रह्मचारिणो देवा एव गृहस्था देवा एव वनस्था यथा ह्येते मुनयः एव सर्ववर्णाः सर्वाश्रमाःसर्वं ह्येते कर्म कुर्वन्ति' इति (ब्र.सू.भा.उ. कौण्ठरव्यश्रुतिः, पृ. ३११)

मौनं मुनित्वं तद्वत् । यतित्वदृष्टान्तेनेतरेषां सर्ववर्णाश्रमधर्माणा-मप्यभिधानादित्यर्थः ॥ ८ ॥

॥ इति कृत्स्नभावाधिकरणम् ॥ ८ ॥

## ॥ ९ ॥ अथान्वयाधिकरणम् ॥

**(अपरोक्षज्ञानसङ्गतपरोक्षज्ञानस्यातिगोप्यत्वोक्तिः)**

अत्रापरोक्षज्ञानसङ्गतपरोक्षज्ञानस्यापि योग्येषु योग्यत्वं समर्थ्यते ।

**ॐ अनाविष्कुर्वन्नन्वयात् ॐ (३-४-४९)**

**(सू.) अनाविष्कुर्वन्** आविष्कारमकुर्वन् विद्याः उपदिशेत् । कुतः? **अन्वयात्** । आविष्कारेण सभाचत्वरादावुपविश्योपदेशेऽयोग्यानामपि [1]ज्ञानप्रसङ्गादित्यर्थः । नच तदिष्टम् । 'विद्या हवै ब्राह्मणमाजगाम'[2] इति तन्निषेधान्नेष्टापत्तिरित्यर्थः ॥ ९ ॥

॥ इत्यन्वयाधिकरणम् ॥ ९ ॥

**(त.दी.)** अन्वयादित्युक्तिः अन्वीयते साध्येन सम्बध्यत इति युक्तेर्व्याप्तिमत्त्वं वक्तुमिति। (पृ.सं.३१४)

## ॥ १० ॥ अथ ऐहिकाधिकरणम् ॥

**(असति प्रतिबन्धके साधनसम्पूर्तिजन्मन्येव ज्ञानोत्पत्तिरिति निरूपणम्)**

अत्र ज्ञानस्य प्रतिबन्धकाभावे साधनसम्पत्तिजन्मन्येवोदयः समर्थ्यते ।

---

१. 'ज्ञानप्रसङ्गात्' इत्येव क.पाठः ।

२. 'विद्या हवै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि । अनार्यकायानृजवे शठाय मा स्म ब्रूया ऋजवे ब्रूहि नित्यम् ।' इति (ब्र.सू.भा.उ., पृ. ३१४)

**ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ (३-४-५०)**

(सू.) **अप्रस्तुतप्रतिबन्धे** प्रारब्धकर्मप्रतिबन्धकाभावे दर्शन**मैहिकम्** इह जन्मन्येव श्रवणादीनां सम्पूर्तिजन्मन्येव भवति। प्रतिबन्धकसद्भावे तु जन्मान्तरे भवति। तथाच श्रवणादि-सम्पूर्तिजन्मन्येव भवतीति न नियमः। कुतः ? **तद्दर्शनात्**।

'श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्येहैव दृष्टिं परमस्य विन्देत्।
यद्यारब्धं कर्म निबन्धकं स्यात् प्रेत्यैव पश्येद् योगमेवान्ववेक्ष्य॥'
(ब्र.सू.भा.उ.सौपर्णश्रुतिः)

इति श्रुतौ तस्यार्थस्य दर्शनादित्यर्थः॥ १०॥

**॥ इत्यैहिकाधिकरणम्॥ १०॥**

**॥ ११॥ अथ मुक्तिफलाधिकरणम्॥**

**('ज्ञानं स्वोत्पत्तिजन्मानन्तरमेव मुक्तिसाधनम्' इति कथनम्)**

अत्र ज्ञानस्य स्वोत्पत्तिजन्मानन्तरमेव प्रतिबन्धकाभावे मुक्ति-साधनत्वमुच्यते।

केषाञ्चिदल्पाधिकारिणामात्मत्वमात्रोपासकानां ज्ञानोदयजन्मन्येव सर्वप्रारब्धक्षयसद्भावेन तद्देहपातानन्तरमेव मोक्षसम्भवात्। प्रतिबन्ध-काभावे मुक्तिसाधनत्वमित्यसम्भावितम्। 'ब्रह्मणः शतकल्पात्तु पूर्वमारब्धसङ्क्षयः' (अनु.व्या.) इत्याद्यनुव्याख्याने प्रारब्धकर्मणां इति बहुत्वेन प्रमितत्वादित्यपास्तम्। अनुव्याख्यानस्योत्तममध्यम-विषयत्वादिति ज्ञेयम्।

**ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ (३-४-५१)**

(सू.) **एवं** यथा ज्ञाने साधनसम्पूर्तिजन्मन्येवेति नियमो नास्ति किन्त्वनियमः एवं **मुक्तिफलेऽपि** यस्मिन् शरीरे ज्ञानमुत्पन्नं तच्छरीरपातानन्तरमेव मोक्ष इति नियमो नास्ति। किन्तु **अनियमः** प्रारब्धप्रतिबन्धकाभावे शरीरपातानन्तरं तत्सद्भावे जन्मान्तरं प्राप्य वेत्यनियमः। कुतोऽत्र प्रतिबन्धककल्पनमित्यतः- **तदवस्थावधृतेः**। 'ब्रह्मसंस्थोऽमृतत्वमेत्येव'[१] इति श्रुतौ तदवस्थस्य ब्रह्मसंस्थस्य ज्ञानिनः मोक्षावधारणादित्यर्थः। प्रतिबन्धककल्पनाभावे तच्छरीर-पातानन्तरमेव केषाञ्चिद् ज्ञानिनां मोक्षानुपलम्भेन[२] न ज्ञानान्मोक्षः। श्रुत्युक्तकार्य-कारणभावोऽनुपपन्नः स्यादतः प्रतिबन्धकसद्भावः कल्पनीय इत्या-शयः। अध्यायोक्तस्य सर्वस्य प्रामाणिकत्वसूचनाय **तदवस्थावधृतेः** इत्यस्य द्विरुक्तिः ॥ ११ ॥

॥ इति **मुक्तिफलाधिकरणम्** ॥ ११ ॥

(त.दी.) 'सर्वप्रमाणसिद्धत्वं वक्तुमाध्यायमूलतः।
अध्यायान्ते द्विरुक्तिः स्यात् पूर्वोक्तस्यावधारणात्॥

इत्युक्तेः। (ब्र.सू.भाष्यदीपिकोदाहृता) पृ.सं.३२०।

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे तृतीयाध्यायस्य चतुर्थचरणः समाप्तः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

---

१. 'धर्मी स्वर्गं विधमा निरयमेत्येव ब्रह्मसंस्थोऽमृतत्वमेत्येव' इति (ब्र.सू.भा.उ. श्रुतिः, पृ. ३१९)

२. 'ज्ञानान्मोक्ष' इति पाठेन भाव्यमिति भाति।

# ॥ अथ चतुर्थोऽध्यायः ॥

## प्रथमः पादः

### ॥ १ ॥ आवृत्त्यधिकरणम् ॥*

(अतःशब्दोक्तमोक्षस्वरूपकथनम्)

अत्राध्याये अतःशब्दोक्तमोक्षस्वरूपं निरूप्यते ।

(कर्मक्षयरूपमोक्षवर्णनम्)

कर्मक्षयोत्क्रान्तिमार्गभोगरूपमोक्षचतुष्टये प्राधान्यात् कर्मक्षयाख्य-फलं प्रथमपादे निरूप्यते । तत्रात्यन्तावश्यम्भाविसाधनं विचारयितु-मधिकरणसप्तकम् ।

(पूर्वपक्षसिद्धान्तौ)

अग्निष्टोमादिवदेकवारेणैव फलसिद्धेः 'आत्मा वा अरे द्रष्टव्यः' (बृ.उ. ४-४-५) इति श्रुत्युक्तानां श्रवणादीनामनावृत्तिरिति प्राप्ते, सिद्धान्तयति -

**ॐ आवृत्तिरसकृदुपदेशात् ॐ (४-१-१)**

**(सू.)** ज्ञानार्थं श्रवणादीना**मावृत्तिः** कार्येति शेषः । उद्दालकेन श्वेतकेतुं प्रति 'स आत्मा तत्त्वमसि' (छा.उ. ६-८-७) इत्य**सकृ**दनेकवारं नवकृत्वस्तत्त्व**स्योपदेशात्** । श्रवणस्य सकृदेवानुष्ठेयत्वेऽसकृदुपदेशो व्यर्थः स्यादिति हृदयम् ।अनेनोपदेशलिङ्गेन श्रवणावृत्तेः कर्तव्यता सिद्धा ।

(श्रवणादित्रितयकर्तव्यतासमर्थनम्)

त्रयाणामप्यावृत्तिं साधयति -

---

*. श्रवणाद्यावृत्तेरवश्यकर्तव्यताऽत्र साध्यते ।

## ॐ लिङ्गाच्च ॐ (४-१-२)

**(सू.)** 'स तपोऽतप्यत' (तै.उ.३-१-२) इत्यादौ श्रूयमाणत्वाच्छ्रवणादीनामावृत्तिरूप**लिङ्गदर्शनाच्च** तेषामावृत्तिः कार्येत्यर्थः । ननु यदि भृगुवरुणयोराचारदर्शनाद् यदि श्रवणाद्यावृत्तिस्तर्हीन्द्रेण शतवारमश्वमेधकरणात् तदावृत्तिः कार्येति प्राप्तम् । तथाऽपि न सर्वसाधारण्येन प्रवृत्ताश्वमेधविधिचोदितः इन्द्रः करोति, किं नाम? इन्द्रगणस्थानधिकृत्येन्द्रपदप्राप्तयेऽश्वमेधावृत्त्यभिधायकविधिचोदितः करोति । एवं च तदनुष्ठानं प्राणिनामश्वमेधाद्यावृत्तौ न लिङ्गम् । विध्यन्तरप्रयुक्तत्वात् तदनुष्ठानस्य । प्राणिनां च तद्विध्यनधिकारित्वात् । भृगोराचारस्तु 'श्रोतव्यः मन्तव्यः' (बृ.उ. ४-४-५) इति विधिप्रयुक्त इत्येतद्विधिबोधितश्रवणाद्यावृत्तौ तदाचारो लिङ्गमिति न किञ्चिदनुपपन्नम् ।

यद्यप्युपदेशोऽपि लिङ्गमेव, तथाऽपि पूर्वसूत्रोक्तोपदेशो गुरुव्यापारः। लिङ्गाच्चेति सूत्रोक्तावर्तनमपरोक्षज्ञानसाधकस्य पुरुषस्य व्यापार इत्यतिशयितमिति ज्ञापनाय विशिष्य लिङ्गाच्चेति द्रष्टव्यम् ॥ १ ॥

॥ इत्यावृत्त्यधिकरणम् ॥ १ ॥

## ॥ २ ॥ अथ आत्माधिकरणम् ॥

### (आत्मत्वोपासनस्य नित्यशः कर्तव्यत्ववर्णनम्)

प्राक् सामान्यत श्रवणाद्युपासनस्य कर्तव्यत्वं समर्थ्येह तद्विशेषस्याऽत्मत्वोपासनस्य नित्यशः कार्यत्वं निरूप्यते ।

### (पूर्वपक्षसिद्धान्तौ)

स्वामित्वस्यातिप्रसिद्धत्वान्नित्यमनुपास्यत्वमिति पूर्वपक्षे सत्याह[१]-

---

१. 'प्रत्याह' इति ख.पाठः । लिपिकृत्प्रमादोऽत्र सम्भाव्यते ।

## ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च (४-१-३)

(सू.) तुशब्दोऽवधारणे । **आत्मा** विष्णुरात्मा मम स्वामीत्येव **उपगच्छन्ति** उपासते जानन्ति च। उपदिशन्ति च। शिष्यान् इत्यावृत्त्या योज्यम् । तथा च विष्णुरात्मेत्युपदेशः उपासनं च नित्यशः कार्यम् । मोक्षसाधनाभिज्ञैस्तथाऽनुष्ठीयमानत्वात् । तत्कुत इति चेत् 'नान्यं विचिन्तय' (ब्र.सू.भा.उ.श्रुतिः) इत्यादिश्रुतेः 'आत्मेत्युपासनं कार्यं'[1] इति स्मृतेश्च। न च प्रसिद्धत्वादनुपास्यत्वम् । उपासनस्य फलहेतुतायाः प्रामाणिकत्वेन प्रसिद्धेरप्रयोजकत्वात् । नहि राजप्रतीतिरतिप्रसिद्ध इति राजप्रीत्यर्थिभिर्न वर्ण्यते । येनेह तथा स्यादिति भावः ।

### (सूत्रगतपदानां साफल्योक्तिः)

[2]विष्णुरात्मेत्येवोपास्य इत्यादिवाक्यसूचनाय च। ज्ञानार्थत्वस्यापि लाभाय उपगच्छन्तीत्युक्तिः । उभयोरावश्यकत्वद्योतनाय उपगच्छन्ति ग्राहयन्तीति चोक्तम् ।। २ ।।

**।। इत्यात्माधिकरणम् ।। २ ।।**

---

१. आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः । नानाक्लेशसमायुक्तोऽप्येतान्नैव विस्मरेत् ।।' इति (ब्र.सू.भा.उ.भविष्यत्पर्ववचनम्, प, ६)

२. अत्र मातृकायां किञ्चिल्लुप्तम् । सूत्रे स्वामीत्यनुक्तिः ' विष्णुरात्मा' इत्यर्थलाभाय 'आत्मानमेवाहं विजानीयां' इत्यादिवाक्यसूचनाय च ' इति पाठेन भाव्यमिति भाति। सूत्रस्थात्मशब्दस्याऽवृत्त्या एक आत्मशब्दः विष्णुपरोऽन्यः स्वाम्यर्थक इति कृत्वा 'विष्णुः स्वामी' इत्यर्थः सूत्रगतात्मशब्दाल्लभ्यते । यदि सूत्रे आत्मशब्दस्थाने स्वामिपदं स्यात् तदा 'विष्णुः स्वामी' इत्यर्थः सूत्रस्थपदैर्न लभ्येतेत्याशयः ।

## ।। ३ ।। अथ न प्रतीकाधिकरणम् ।।[1]

### (पूर्वपक्षसिद्धान्तौ)

फलविशेषाद् आत्मेत्युपासनमिव विष्णुप्रतीकयोरैक्योपासनस्यापि फलविशेषात् कर्तव्यत्वमिति पूर्वाधिकरणन्यायेन पूर्वपक्षे सत्याह -

**ॐ न प्रतीके नहि सः ॐ** (४-१-४)

(सू.) **प्रतीक** इति विषयसप्तमी । आत्मेति इति पदद्वयमनुवर्तते । 'नाम ब्रह्मेत्युपासीत' (छा.उ. ७-१-५) इत्यादौ श्रुते नामादि**प्रतीके** आत्मेत्युपास्तिः **न** कार्या । प्रतीकं नामादिब्रह्मेत्युपास्यं न । कुतः? **हि** यस्मात् **सः** प्रकृतो विष्णुः प्रतीकं **न** भवतीत्यर्थः ।

'पुरतो नरदेवस्य चण्डालो यदि पूज्यते ।
राजवत् किं न कोपः स्याद् राज्ञो लोकेऽभिपश्यति ।।'
(अनु.व्या.अ-४, श्लो-१७४१)

इत्युक्तरीत्यैक्यज्ञानेनानर्थदर्शनादिति भावः । कथं तर्हि कार्येत्यत्रापीदमेवोत्तरम् । प्रतीक इत्यधिकरणसप्तमी । नामादौ प्रतीके आत्मेत्युपासनं कार्यमित्यर्थः ।। ३ ।।

**।। इति न प्रतीकाधिकरणम् ।। ३ ।।**

## ।। ४ ।। अथ ब्रह्माधिकरणम् ।।

### (ब्रह्मत्वाख्यगुणपूर्णत्वोपास्तेरावश्यकत्वसमर्थनम्)

'न हि सः' (ब्र.सू. ४.१.४) इत्युक्ताभेदाभावे हेतुभूतव्यावर्तकधर्मोपासनस्याऽवश्यकत्वमिह निरूप्यते ।

---

१. अधिकरणेऽस्मिन् ब्रह्मज्ञानार्थिनो विष्णुप्रतीकैक्योपासनवर्जनस्याऽवश्यकत्वं निरूप्यते ।

ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ (४-१-५)

(सू.) पूर्वसूत्राद् आत्मेति पदं विभक्तिविपरिणामेन सप्तम्यन्तमनुवर्तते । **आत्मनि ब्रह्मदृष्टिः** ब्रह्मत्वोपासनम्, पूर्णत्वोपास्तिरिति यावत् । सर्वथा[1] कार्या । उपास्त्यन्तरादुत्कृष्टत्वादित्यर्थः । सर्वगुणपूर्णत्वरूपब्रह्मत्वदृष्टेरुत्कृष्टरूपतया तथोपास्तेरेवेतरोपासनादुत्कृष्टत्वादिति भावः । पूर्णदृष्टिरिति वाच्ये ब्रह्मदृष्टिपदोपादानं 'ब्रह्मदृष्ट्या सदोपास्यो विष्णुः'[2] इति स्मृतिसूचनाय ।

**(अधिकरणमिदं व्यर्थमिति शङ्का तत्परिहारश्च)**

ननु भूम्न इत्यधिकरणे पूर्णत्वोपास्तेः कार्यत्वोक्तेर्व्यर्थमधिकरणमिति चेत् तस्यावश्यकार्यत्वाय पुनरभिधानमित्यदोषः । एवमात्मेत्युपगच्छन्तीत्यत्रापि ज्ञेयम् । तत्रापि 'आनन्दादयः प्रधानस्य' (ब्र.सू. ३.३.१२) इत्यत्रोक्तस्याभिधानादिति ॥ ४ ॥

**॥ इति ब्रह्माधिकरणम् ॥ ४ ॥**

## ॥ ५ ॥ आदित्याधिकरणम् ॥

**(विष्ण्वङ्गाश्रितत्वेन देवतोपासनस्यावश्यकर्तव्यत्वसमर्थनम्)**

गुणान्तरेषु सत्सु विशेषहेत्वभावाद् भगवदङ्गाश्रितत्वेन विशिष्य

---

१. 'सर्वथा' इत्यारभ्य 'स्मृतिसूचनाय' इत्यन्तो भागः ख.मातृकायां न दृश्यते । (पृ.सं. २९८)

२. 'ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् । महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि ॥ सर्वतः प्रीतिजनकमतस्तत्सर्वमन्यथा । आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता । कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेत् ॥' इति (ब्र.सू.भा.उ. ब्रह्मतर्कवचनम्, पृ. ११,१२)

चिन्तनं देवैः सदा सर्वथा न कार्यमिति पूर्वाधिकरणन्यायेन पूर्वपक्षेऽङ्गाश्रितत्वेन देवोपासनस्याऽवश्यकर्तव्यत्वं साध्यते ।

**ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ (४-१-६)**

(सू.) **अङ्गे** प्रस्तुतब्रह्माङ्गे तत्र स्थितत्वेनाऽ**दित्यादिमतयः** आदित्याद्युपासनाः, स्वाश्रयत्वेन भगवदङ्गोपासनमिति यावत् । आदित्यादिदेवैः सदा सर्वथा कार्यैव । कुतः? **उपपत्तेः** । देवानामङ्गजत्वेन मुक्तौ तत्र लयस्यापेक्षितत्वात् । उपासनस्य फलसाम्येन कार्यत्वात् नित्यं रूपान्तरेण तत्र स्थित्याऽन्यथोपासनाभावादिति युक्तेः सद्भावादित्यर्थः । ब्रह्मदृष्ट्याः समुच्चयार्थश्चशब्दः। उपासनावज्ज्ञान-स्याप्यावश्यकत्वज्ञापनाय मतय इत्युक्तम् । अङ्गेष्विति वक्तव्येऽङ्ग इत्येकवचनमभेदसूचनाय। 'स्वोत्पत्त्यङ्गं च देवानां'[१] इति स्मृत्यनुरोधेन वा। मतय इति बहुवचनं तु यस्य यस्य यदङ्गे निवेशः तेन तेन तथोपासना कार्येत्यनेककर्तृकत्वद्योतनाय ।। ५ ।।

।। इत्यादित्याधिकरणम् ।। ५ ।।

## ।। ६ ।। अथ आसीनाधिकरणम् ।।

**(प्रागुक्तध्यानेऽङ्गरूपासनानियमसमर्थनम्)**

पूर्वोक्तध्यानेऽङ्गरूपासनादिनियमः समर्थ्यते ।

---

१. 'आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु । गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु ।। स्मर्तव्यं सततं तत्तु न कदाचित् परित्यजेत्। अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते ।। स्वोत्पत्त्यङ्गं हि देवानां विष्णोश्चिन्त्यं सदैव तु । तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः । तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः।।' इति (ब्र.सू.भा.उ. नारायणतन्त्रवचनम्, पृ.१४)

**ॐ आसीनः सम्भवात् ॐ (४-१-७)**

(सू.) **आसीनः** आसनमुपविश्यैव सदोपासनं कुर्यात् । कुतः ? आसीनस्यैव चित्तविक्षेपाभावेन **सम्भवात्** । अन्यस्य चित्तविक्षेपनियमेन असम्भवादित्यर्थः ।

आसनसदोपासनयोर्विरोधाद् आसनं नाऽवश्यकमित्यत आह -

**ॐ ध्यानाच्च ॐ (४-१-८)**

(सू.) भावप्रधानो निर्देशः । आसीनेन क्रियमाणस्य **ध्यानरूपत्वाद्** अविरोधश्चेत्यर्थः । उपासनं हि द्वेधा भवति स्मरणं ध्यानमिति । तत्र नित्यं कार्यस्य स्मरणस्य तदनपेक्षत्वेऽपि ध्यानस्याऽसनमन्तरेणा-सम्भवाद् ध्याने तदावश्यकमिति भावः ।

ननु प्रत्याहारादिनाऽपि चित्तविक्षेपपरिहारान्नाऽसनमावश्यकमित्यत आह -

**ॐ अचलत्वं चापेक्ष्य ॐ (४-१-९)**

(सू.) चित्तविक्षेपाभाव इति शेषः । न केवलं प्रत्याहारादिना, किन्तु शरीरा**चलत्वं चापेक्ष्य** चित्तविक्षेपाभावो भवेत् । तच्चाऽसने सत्येवेति आसीन एव ध्यायेदित्यर्थः ।

स्मृतेरप्युपासनस्याऽवश्यकत्वं साधयति -

**ॐ स्मरन्ति च ॐ (४-१-१०)**

(सू.) वासुदेवादयः 'उपविश्याऽसने युञ्ज्याद् योगं'[१] 'समं कायशिरो-

---

१. 'उपविश्याऽसने युञ्ज्याद् योगमात्मविशुद्धये ।' इति (भ.गी. ६-१२)

ग्रीवं'[१] इत्यादिना **स्मरन्तीत्यर्थः** । [२]स्मृतिबाहुल्यद्योतनाय बहु-वचनम् । 'पर्वताग्रे नदीतीरे' (ब्र.सू.भाष्यदीपिकोदाहृता स्मृतिः) 'ब्राह्मे मुहूर्ते चोत्थाय'[३] इति इत्यादेः देशकालादीनामप्यासनादिवन्नियतिः स्यादित्यत आह -

**ॐ यत्रैकाग्रता तत्राविशेषात् ॐ** (४-१-११)

(सू.) विभक्तिविपरिणामेन ध्यानस्येत्यनुवर्तते । **यत्र** देशकालादौ ध्यान**स्यैकाग्रता** स्यात् तत्र ध्यानं कार्यम् । देशादिनियतिः कुतः ? । कि मासनवद् ध्यानोपयोगितया तस्याऽवश्यकत्वमुत ज्ञानोपयोगि-तया । न द्वयमपि । **अविशेषात्** । नियतदेशादिना ध्याने ज्ञाने वा विशेषाभावादित्यर्थः । अविशेषादिति वचनेन 'तमेव देशं सेवेत'[४] इति स्मृतिः सूचिता भवति ।

॥ इत्यासीनाधिकरणम् ॥ ६ ॥

**॥ ७ ॥ अथ आप्रायणाधिकरणम् ॥**

**(ध्यानस्य मुक्तिपर्यन्तं कर्तव्यत्वसमर्थनम्)**

अत्र ध्यानस्य मुक्तिपर्यन्तं कर्तव्यत्वं समर्थ्यते ।

---

१. 'समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥' इति (भ.गी. ६-१३)

२. 'स्मृतिबाहुल्यसूचनाय' इति ख. पाठः ।

३. 'ब्राह्मे मुहूर्ते चोत्थाय वार्युपस्पृश्य माधवः । दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥' इति ब्र.सू. भा.दी.उ.भागवतवचनम्) 'ब्राह्मे मुहूर्ते उत्थाय धर्मार्थानुपचिन्तयेत्' इति (ब्र.सू.भा.दी.उ.मनुस्मृतिः, पृ.१८)

४. 'तमेव देशं सेवेत तं कालं तामवस्थितिम् । तानेव भोगान् भुञ्जीत मनो यत्र प्रसीदति ॥ नहि देशादिभिः कश्चिद् विशेषः समुदीरितः । मनः प्रसादनार्थं हि देशकालादिचिन्तना ॥' इति (ब्र.सू.भा.उ. वाराहवचनम्, पृ.१९)

**ॐ [१]आप्रायणात् तत्रापि हि दृष्टम् ॐ (४-१-१२)**

(सू.) आङ् मर्यादायाम्। प्रकृष्टमयनं गमनं प्रायणं विष्णुं प्रति गमनरूपो मोक्षः। **आप्रायणात्** मोक्षपर्यन्तं ध्यानमवश्यं कर्तव्यम्। कुतः ? **हि दृष्टम्**। हि यस्मात् 'स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत' (प्र. ५-१, पृ.२०) इति श्रुतिरस्ति। कैमुत्यन्यायेन साधयति- **तत्रापीति**। मुक्तावपि ध्यानं कुर्वते किमु ततः प्राक्। तदेव कुत इत्यतोऽपि **दृष्टं हि** इत्युक्तम्। हि 'मुक्ता अपि ह्येनमुपासते'[२] इति श्रुतिरस्तीत्यर्थः।

**('आप्रायणात्' इति कथने कारणोक्तिः)**

अल्पाक्षरत्वेन मोक्षादिति वक्तव्ये श्रुत्यनुसारेणाऽप्रायणादित्युक्तम् ॥ ७ ॥

॥ इत्याप्रायणाधिकरणम् ॥ ७ ॥

## ॥ ८ ॥ अथ तदधिगमाधिकरणम् ॥

**(अपरोक्षज्ञानेन कर्मक्षयलक्षणफलकथनम्)**

एवं प्रासङ्गिकं समाप्य प्रागापादिकर्मणां प्रतिबन्धकानां सत्वेन ज्ञानेन मोक्षस्यैवा-जननादाप्रायणं ध्यानस्य कर्तव्यत्वमुक्तमयुक्तमिति पूर्वपक्षे सति भगवज्ज्ञानेन कर्मक्षयलक्षणफलसिद्धिः समर्थ्यते।

**ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ (४-१-१३)**

---

१. 'आप्रयाणात्' इति ह.पाठः। पृ.सं.१९७

२. 'सर्वदैनमुपासीत यावद्विमुक्तिर्मुक्ता अपि ह्येनमुपासते' इति (ब्र.सू.भा.उ. सौपर्णश्रुतिः, पृ.२१)

(सू.) ब्रह्मदृष्टिरित्यत्र प्रकृतं ब्रह्म तदिति परामृश्यते । **ब्रह्मदर्शने** सति **उत्तरपूर्वाघयोरश्लेषविनाशौ**= उत्तराघस्याश्लेषः पूर्वाघस्य विनाशश्च भवतीत्यर्थः । 'नाभुक्तं क्षीयते कर्म' (ब्र.सू.भा.दी.उ.स्मृतिः) इति स्मृतेस्त्वकृतप्रायश्चित्तस्य वाऽज्ञविषयत्वस्य वा प्रारब्धविषयत्वस्य वा सम्भवादित्यर्थः । तत्र प्रायश्चित्तविधिबलात् तत्कल्पनेऽप्यत्र बाधकं नास्तीत्यत आह - **तद्व्यपदेशादिति** ॥ 'तद्यथा पुष्करपलाशे'[१] इति श्रुतावश्लेषस्य **व्यपदेशादित्यर्थः** ।

**('कर्मणोः' इत्यनुक्त्वा 'अघयोः' इति कथने कारणोक्तिः)**

ननु पुण्यस्याप्येवम्भावात् कर्मणोरिति वाच्यमिति चेत्, सत्यम् । तथाऽप्यघेत्युक्त्या पुण्ये विशेषः सूच्यते । तच्च वक्ष्यति ।

एवं ब्रह्मज्ञानिनो मुक्तिसिद्ध्यर्थं ज्ञानादेवाघस्याश्लेषविनाशावुक्त्वा तत्समानन्यायत्वाद् भगवद्द्वेषिपुण्यस्य मिथ्याज्ञानादेव विनाशाश्लेषौ वक्ति-

**ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ (४-१-१४)**

(सू.) **इतरस्येतत्तन्त्रम्** । **अश्लेष** इति विनाशस्याप्युपलक्षणम् । तुशब्दोऽनुत्थानाख्यविशेषवाची पातविशेषणम् ।**पात** इति सामीप्ये सप्तमी । **इतरस्य** ज्ञानीतरस्य द्वेषिणः **पाते** अनुत्थाने पाते प्रत्यासन्ने **इतरस्य** प्रस्तुताघादितरस्य च पुण्यस्याप्येवं ज्ञानिपापस्येव, उत्तरपूर्वाघयोः **अश्लेषविनाशौ** भवत इत्यर्थः ।

**(अश्लेष इति पुनर्वचने हेतुकथनम्)**

ईशद्वेषिणः पुण्येन तमसि किञ्चित्सुखलेशोऽपि नेति सर्वथैवाश्लेष

---

१. 'तद्यथा (यद्यथा) पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न लिप्यते' इति (छा.उ. ४-१४-३, पृ. २३)

इति सूचनायैवमित्युक्त्यैव विनाशस्येवाश्लेषस्यापि लाभेऽप्यश्लेष इति पुनर्वचनम् । ननु तमोभोगानन्तरं पुण्यभोगोऽस्तु किमश्लेषादिनेत्यतः **तु** इत्याह ।

यद्येवं ब्रह्मज्ञानिद्वेषिणोः ज्ञानाद्युदय एव मोक्षादिप्रसङ्ग इत्याशङ्क्याऽह -

**ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ** (४-१-१५)

**(सू.) अनारब्धकार्ये** भोक्तुमनुपक्रान्ते सुखदुःखरूपे कार्ये ययोस्तादृशे **एव पूर्वे** पूर्वोक्ते पुण्यपापे एव, नश्यत इत्यर्थः । प्रागुक्तविनाशाश्लेषावप्रारब्धविषयौ, अतो नोक्तदोष इति भावः । ज्ञानानन्तरं प्रारब्धसत्वं कुतः ? **तदवधेः**। श्रवणादिति शेषः। तदित्यावर्तनीयम् । श्रुतिस्थस्य परामर्शः । तस्य मोक्षस्य **तदवधेः** प्रारब्धकर्मावस्थानावधिकत्वस्य 'तस्य तावदेव चिरम्'[1] इति श्रवणादित्यर्थः । **तुश्चार्थे** । तेन [2]'यदनारब्धकार्यं स्याद्'[3] इत्यादिस्मृतिसमुच्चयः ।

**(त.दी.)**श्रुतौ प्रारब्धसत्त्वस्यास्फुटत्वात् स्मृत्युक्तिः । (पृ.सं.३४२)

ननु ज्ञानिकृतपापस्य ज्ञानेन विनाशाश्लेषयोरपि तत्कृतपूर्वोत्तरपुण्यस्य प्रतिबन्धकस्य सत्वात् कथं मोक्ष इत्यत तत्किं काम्यमुताकाम्यमिति विकल्प्याकाम्यस्य मोक्षानुप्रवेशत्वमाह-

---

१. 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते ' इति (छा.उ.६.१४.२, पृ. २६)

२. 'यदनारब्धपापं स्यात्' इति पाठेन भाव्यमिति भाति ।

३. 'यदनारब्धपापं स्यात् तद् विनश्यति निश्चयात् । पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः ।। द्विषतो वा भवेत् पुण्यनाशो नास्त्यत्र संशयः । तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् । आरब्धयोश्च नाशः स्याद् अल्पयोः पुण्यपापयोः ।।' इति (ब्र.सू.भा.उ. नारायणतन्त्रवचनम्, पृ. २६,२७)

ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ (४-१-१६)

(सू.) तुशब्दो ज्ञानिन एव न द्वेषिण इति विशेषार्थः । **तत्कार्यायेति** कर्मधारयस्ततपुरुषश्च । ज्ञानिनोऽग्निहोत्राद्यकाम्यं कर्म **तत्कार्यायैव** ज्ञानाख्यकार्यायैव । ज्ञानकार्यमोक्षातिशयानुभवायैव च, नतु नाशाश्लेषावाप्नोति, नापि बन्धकं ज्ञानात् पूर्वकृतं ज्ञानाय तदुत्तरं त्वतिशयायेत्यर्थः । कुतः ? **तद्दर्शनात्** । 'य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते'[१] इति श्रुतावुक्तार्थदर्शनादित्यर्थः ।

## (पुण्यं त्वित्यकथने कारणवर्णनम्)

नन्वल्पाक्षरत्वात् पुण्यं त्विति वाच्यम् । अग्निहोत्रादीति किमर्थमिति चेत् । इत्थम् । अग्नये विष्णवे होत्रं हविर्यस्मिन्नित्यकाम्यकर्मलाभायेति ।

(त.दी.) इतरस्येत्यस्य व्यवायादग्निहोत्रादीत्युक्तिः । पुण्यं त्विति वाच्ये एवमुक्तिः विशिष्य प्रदर्शनायेति केचित् । एवेत्यघवद्विनाशादिकं नेति वक्तुम् । 'भाक्तं वा' (ब्र.सू. ३.१.७) इत्यत्र मुक्तेः कर्मसाध्यत्वश्रुतिगत्युक्त्यर्थं पूर्वोत्तरपुण्यस्य मुक्त्युपयोग उक्तः । अत्र तु प्रतिबन्धकत्वशङ्कानिरासायेति भेदः । (पृ.सं. ३४४, ३४५)

तथाऽपि काम्यपुण्यस्य सत्वात् कथं मोक्ष इति द्वितीयपक्षे त्वाह -

ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ (४-१-१७)

(सू.) अश्लेषविनाशाविति अनारब्धाविति चानुवर्तते । **अतः**

---

१. 'स एनमविदितो न भुनक्ति यथा वेदो वा अननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत्सृजते' इति (बृ.उ. ३-४-१५, पृ. २८)

प्रकृतादकाम्याद् **अन्यत्** काम्यं पूर्वोत्तरपुण्यं चाप्रारब्धमनभीष्टं चेति शेषः । नाशाश्लेषावाप्नोति न केवलमघमित्यपेरर्थः । कुतः ? **इत्येकेषामुभयोरिति** ॥ एवं पूर्वोत्तरपुण्यपापयोस्त्यागेन एकेषां शाखिनां पाठोऽस्ति । 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्'[1] इति अत इत्यर्थः ।

**(त.दी.)** तत्त्वप्रदीपे तु अघस्यैव नाशे कथं 'सुहृदः साधुकृत्यां' (ब्र.सू.भा.उ. शाट्यायनश्रुतिः) इत्यवतार्य अतोऽन्यत् काम्यमप्रारब्धमनिष्टं च पुण्यं नश्यतीत्येवं भावाद्धि एकेषां शाखिनामयं पाठो न पुनरकाम्यपुण्यस्य नाशादिनेति इतिशब्दस्य हेत्वर्थत्वमुपेत्यार्थ उक्तः । **(पृ.सं. ३४७)**

ननु नाशशिरस्काल्पफलस्याकाम्यपुण्यस्य मोक्षप्रवेशित्वं कथमित्यत आह -

**ॐ यदेव विद्ययेति हि ॐ (४-१-१८)**

**(सू.) 'यदेव विद्यया** करोति'[2] **इति श्रुतिः हि** यस्माद् अस्ति अतो ज्ञानिकृतस्याकाम्यकर्मणोऽनन्तफलत्वात् मोक्षोपयोगित्वं युक्त-मित्यर्थः ।

**(श्रुतेरित्यनुक्त्वा 'यदेव विद्यया' इति कथने हेतूक्तिः)**

ननु श्रुतेरिति वाच्ये यदेव विद्ययेति प्रतीकग्रहणेन तदुक्तिः कुत इति चेत्; इत्थम् । अज्ञकृतकर्मणो नाशशिरस्कत्वाद् अल्पफलकत्वेऽपि

---

१. 'तस्य पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति (ब्र.सू.भा.उ.शाट्यायनश्रुतिः, पृ. २९)

२. 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति (छा.उ. १.१.१०, पृ.३१)

ज्ञानिकृतस्य न तथेति ज्ञापयितुमिति। एतत्सूत्रत्रयन्यायो द्वेषिपुण्यपापे[1] चानुसर्तव्यः। तत्पूर्वप्रारब्धमनिष्टं चेत् नश्यतीत्यादि ग्राह्यम्।

तथाऽपि न ब्रह्मज्ञानिद्वेषिणोः मुक्तत्वे सिद्ध्यतः। उभयोरपि प्रारब्धपुण्यपापसद्भावादित्यत आह -

**ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ (४-१-१९)**

(सू.) (तुशब्दः) ज्ञानिनः प्रारब्धभोगे 'उपमर्दं च' (ब्र.सू. ३.४.१६) इत्युक्तविशेषसूचकः। **इतरे** अनारब्धादन्ये प्रारब्धपुण्यपापे **भोगेन क्षपयित्वा अथ** प्रारब्धपुण्यपापक्षयाद् अनन्तरमेव न तु ज्ञानोत्पत्त्यनन्तरमिव विलम्बः। **सम्पत्स्यते** ब्रह्म वा तमो वा प्राप्नोतीत्यर्थ इति सम्प्रदायः।

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे चतुर्थाध्यायस्य प्रथमः पादः॥**

१. 'द्वेषिणां पुण्ये पापे च' इत्युक्ते समीचीनं स्यादिति भाति।

## ॥ अथ द्वितीयः पादः ॥

### (देहक्षय-ब्रह्मनाड्योत्क्रमणयोः निरूपणम्)

ज्ञानभोगाभ्यां क्षीणकर्मणां देहक्षयाख्यं फलमस्मिन् पाद उच्यते। तस्य देवतदन्यरूपाधिकारिभेदेन स्वोत्तमप्रवेशेन तत्र देहलय-ब्रह्मनाड्योत्क्रान्तिभेदेन द्वैविध्याद् आदौ देवानां स्वोत्तमदेवेषु लय उच्यते।

### (वाचो मनसि लयनिरूपणम्)

तत्र प्रथमनये वाचो मनसि लयः साध्यते।

**ॐ वाङ् मनसि दर्शनाच्छब्दाच्च ॐ (४-२-१)**

**(सू.) वाक्** वागभिमानिनी, वारुणी सुपर्णी (सौपर्णी) च **मनसि** शेषे सुपर्णे च, लीयत इति शेषः। कुतः? **दर्शनात्** मनसा सङ्कल्पितस्य वाचा व्याहरणात्। 'तस्य यावन्न वाङ्मनसि सम्पद्यते' (छा. ६.१५.१) इति **शब्दाच्चे**त्यर्थः। 'वाक् पूर्वरूपं मन उत्तररूपम्' इति व्याप्तिश्च[1] उक्तवाङ्मनसोः विष्णुनाम्नि पूर्वोत्तरवर्णदेवत्वे गुणप्रधानभावे च मुनिमत-विवादपरेति भावः।

### (वाङ्मनसीत्याद्यप्रसिद्धपदोपादाने कारणोक्तिः)

वारुणीशेषेत्यादितत्तद्देवतावाचिप्रसिद्धपदपरित्यागेन वाङ्मनसी-त्याद्यप्रसिद्धपदोपादानं तु यथा मुच्यमानानां देवानामुत्तमेषु लयस्तथा तदभिमन्यमानानां वागादिवृत्तीनामपि मृतिकाले लयो भवतीति प्रसङ्गात् सूचयितुम्।

---

१. 'वाक् पूर्वरूपं मन उत्तररूपं' 'मनः पूर्वरूपं वागुत्तररूपम्' इति व्यामिश्रोक्तिः इति पाठेन भाव्यमिति भाति।

अस्त्वेवं वाचो लयनिर्णयः । न सर्वदेवानां लयनिर्णय इत्यत आह-

**ॐ अत एव च सर्वाण्यनु ॐ (४-२-२)**

(सू.) **अत एव** 'अग्नौ सर्वे देवा विलीयन्ते'[१] इत्यादिशब्दादेव **सर्वाणि च** दैवतानि **अनु** स्वनियम्यनियामकभावानुसारेण, लीयन्त इति शेषः । सर्वाणीति नपुंसकलिङ्गप्रयोगस्तु 'अन्यानि दैवतानि यथानुकूलम्' (ब्र.सू.भा.उ. गौपवनश्रुतिः) इति श्रुत्यनुसारेण ॥ १ ॥

॥ इति वाङ्मनसाधिकरणम् ॥ १ ॥

**॥ २ ॥ अथ मनःप्राणाधिकरणम् ॥**

**(मनसः प्राणे लयसमर्थनम्)**

अत्र मनसः प्राणे लयः समर्थ्यते ।

**ॐ तन्मनः प्राण उत्तरात् ॐ (४-२-३)**

(सू.) **तत्** वाचो लयाधिकरणत्वेन प्रकृतं **मनः** मनोभिमानी शेषः सुपर्णश्च, वाणीद्वारा **प्राणे** चतुर्मुखे लीयत इति प्रागुदाहृतमनुषज्यते । कुतः ? **उत्तरात्** । शब्दादित्यनुवर्तते । पूर्वोक्ताद् वाङ्मनसीति शब्दाद् उत्तरात् शब्दादित्यर्थः ।

**(सूत्रे तदिति पदस्य वैयर्थ्यशङ्का तत्परिहारश्च)**

ननु मनः प्राण इत्येव पूर्तेस्तदिति व्यर्थमिति चेन्न । मनसो वागादिसर्वप्रवृत्तिहेतुत्वेन प्राणादनूनत्वान्न प्राणे लय इति शङ्कासूचनाय तदित्युक्तम् । तत्परिहारस्तु - प्रकृष्टचेष्टावाचकप्राणपदप्रयोगादेव

---

१. 'अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्द्रे इन्द्र उमायामुमा रुद्रे विलीयते । एवमन्यानि दैवतानि यथाऽनुकूलम्' इति (ब्र.सू.भा.उ. गौपवनश्रुतिः, पृ. ३५,३६)

सूचितः । तथा हि । 'मन उदक्रामत् मीलित इव प्राण उत्क्रान्तेऽपद्यत' (ऐ.उ.) इत्यादिप्राणादूनत्वादिति ॥ २ ॥

**॥ इति मनः प्राणाधिकरणम् ॥ २ ॥**

## ॥ ३ ॥ अथ अध्यक्षाधिकरणम् ॥

**(प्राणशब्दोक्तचतुर्मुखस्य परमात्मनि लयसमर्थनम्)**

अत्र प्राणस्य परमात्मनि लयः समर्थ्यते ।

**ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ** (४-२-४)

**(सू.) सः** हिरण्यगर्भः **अध्यक्षे** स्वामिनि परमात्मनि लीयते । कुतः? **तदुपगमादिभ्यः** तदुपगमोऽध्यक्षप्राप्तिः । **आदिपदेनाध्यक्षानुप्राणनानु**-प्रवेशादि तेन च तत्प्राप्तिप्रतिपादकश्रुतिस्मृती गृह्येते । 'प्राणः परमुपगच्छति प्राणः परमनुप्राणिति'[1] 'प्राणः परस्यां देवतायां' (ब्र.सू. भा.उ.श्रुतिः) 'मुक्ताः सन्तोऽग्निमाविश्य'[2] इत्यादिश्रुतिस्मृतिभ्य इत्यर्थः। अध्यक्ष इत्युक्तिस्तु प्राणस्येशाधीनत्वाद् युक्तस्तस्य तत्र लय (इति) युक्तिप्रदर्शनाय ।

**('चक्षुरादिवत्तु' इति सूत्रेण गतार्थताशङ्का, तत्परिहारश्च)**

ननु 'चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः' (ब्र.सू. २.४.११) इति सूत्रेण प्राणस्येशाधीनत्वस्याभिहितत्वेनेदं सूत्रं व्यर्थमिति चेत् । सत्यम् ।

---

१. 'सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति प्राणं देवा अनुप्राणन्ति प्राणः परमनुप्राणिति तस्मादाहुः प्राणस्य प्राण इति' इति (ब्र.सू.भा.उ.श्रुतिः, पृ.३८)

२. 'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते । अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु ॥ आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान् । न ह्यानन्दो निजस्तेषां परैर्लभ्यः कथञ्चन । किमु विष्णोः परानन्दो न ते विष्णाविति श्रुतेः ॥' इति (ब्र.सू.भा.उ. श्रुतिः, पृ. ३८,३९)

प्राणस्वातन्त्र्यश्रुतिबाहुल्यात् तस्येशाधीनत्वायोगमाशङ्क्य निरव-काशेशवशत्वश्रुतिबाहुल्येन तदधीनत्वोक्त्यर्थमिदं सूत्रमित्यदोषः । स्वातन्त्र्यश्रुतयस्तु 'सर्वे प्राणमुपगच्छन्ति' (ब्र.सू.भा.उ. श्रुतिः, पृ. ३८) इत्युक्त्या सर्वस्य प्राणोपगमादिना सावकाशा इति हृदयम् । प्राणस्य तेजसि मार्गमात्रत्वस्य 'प्राणस्य तेजसि लयः'[१] इति स्मृतावेवोक्तेः लयाभावात् न 'प्राणस्तेजसि' (छा.६. १५.१) इति श्रुतिविरोध इति ज्ञेयम् ।। ३ ।।

।। इत्यध्यक्षाधिकरणम् ।। ३ ।।

## ।। ४ ।। अथ भूताधिकरणम् ।।

### (प्राग् विशिष्योक्तान्यदेवानां भूतेषु लयकथनम्)

प्राग्विशिष्योक्तानामन्यदेवानां सामान्यतो भूतेषु लयोऽत्र समर्थ्यते ।

### ॐ भूतेषु तच्छ्रुतेः ॐ (४-२-५)

(सू.) पूर्वोक्तेभ्येऽन्ये देवाः पञ्चसु **भूतेषु** भूताभिमानिषु लीयन्ते नत्वेकस्मिन्नग्राविति बहुवचनार्थः । कुतः ?

**तच्छ्रुतेः** तस्य भूतेषु देवानां लयस्य 'भूतेषु देवा विलीयन्ते'[२] इति श्रवणादित्यर्थः । 'अग्नौ देवा विलीयन्ते' (ब्र.सू.भा.उ.गौपवनश्रुतिः) इति श्रुतिस्तु सावकाशा[३] भविष्यतीति हृदयम् ।

।। इति भूताधिकरणम् ।। ४ ।।

---

१. 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम् । सर्वेशितुश्च सर्वादिस्तस्यान्यत्र लयः कथम्' इति (ब्र.सू.भा.उ.स्मृतिः, पृ. ३९)

२. 'भूतेषु देवा विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्येकल एव मध्ये स्थाता ' इति (ब्र.सू.भा.उ. बृहच्छ्रुतिः, पृ. ४०)

३. 'सावकाशयिष्यते' इति क. पाठः ।

## ॥ ५ ॥ अथ नैकस्मिन्नधिकरणम् ॥

### (देवानां सर्वभूतेषु लयसमर्थनम्)

अत्र देवानां सर्वेषु भूतेषु विशेषतो लयः समर्थ्यते ।

**ॐ नैकस्मिन् दर्शयतो हि ॐ (४-२-६)**

(सू.) वचनविपरिणामेन भूते इत्यनुवर्तते । अग्नावेव सर्वदेवानां लयाङ्गीकारेऽपि अग्नेर्वायौ वायोश्चाऽकाशे लयेऽग्नौ लीनानां भूतेषु लयसम्भवेन भूतेष्विति प्रागुक्तबहुवचनश्रुत्युपपत्तेः । **एकस्मिन्** अग्नौ भूते देवा विलीयन्त इति **न** भवति। कुतः ? **हि** यस्मात् 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनौ अग्नावग्नयः'[१] इति 'ऋभवः[२] पृथिव्याम्'[३] इति च श्रुती प्रत्येकं भूतेषु लयं **दर्शयत** इत्यर्थः । 'अग्नौ सर्वे देवा विलीयन्ते'[४] इति श्रुतिस्त्वग्नावग्नय इति निर्दिष्टसमस्ताग्निपुत्रमात्रपरेति भावः ॥५॥

॥ इति नैकस्मिन्नधिकरणम् ॥ ५ ॥

## ॥ ६ ॥ अथ समनाधिकरणम् ॥

### (श्रियः विष्णौ लयो नास्ति)

अत्र प्रकृतेर्विष्णौ लयाभावः साध्यते ।

---

१. 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनौ अग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते' इति (ब्र.सू.भा.उ.महोपनिषत्, पृ.४१)

२. 'मृत्यवः पृथिव्याम्' इति क्वचित् पाठः। तदा मारकत्वान्निमित्ताद् ऋभवः (देवाः) एव मृत्युशब्देनोच्यन्त इति ज्ञेयम् ।

३. 'ऋभवः (मृत्यवः) पृथिव्याम् वरुण आपोऽग्नयस्तेजसि मरुतो मारुत आकाशे विनायका विलीयन्ते' इति (ब्र.सू.भा.उ. चतुर्वेदशिखा श्रुतिः)

४. 'अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्द्रे इन्द्र उमायामुमा रुद्रे विलीयते। एवमन्यानि दैवतानि यथाऽनुकूलम्' इति (ब्र.सू.भा.उ. गौपवनश्रुतिः, पृ. ३५,३६)

**ॐ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॐ** (४-२-७)

**(सू.)** प्रथमचशब्दान्नञोऽनुकर्षः । द्वितीयोऽवधारणे । श्रीर्विष्णौ न लीयते । कुतः ? **अनुपोष्य च** उपासनादिक्लेशमकृत्वा, अनुपास्येति यावत् । अनुपास्यैवामृतत्वं, नित्यमुक्तत्वादिति यावत् । नहि नित्यमुक्ताया लयः सम्भवतीति भावः । तदेव कुतः ? **असृत्युपक्रमात्** कदाऽपि संसारोपक्रमाभावात् । तदपि कुतः? **समना** देशकालाभ्यां व्याप्त्या समो ना परमपुरुषो हरिर्यस्याः सा समना । परमपुरुषवत् सर्वगतत्वान्नित्यत्वाच्च । नहि संसारित्वे तदुपपत्तिरिति भावः । लयश्रुतिस्त्वतिसामीप्यमाहेति भावः ।

**(असृतेरित्यनुक्त्वा उपक्रमेत्युक्तौ कारणकथनम्)**

असृतेरित्येव पूर्तौ उपक्रमेत्युक्तिः कदाऽपि संसारो नास्तीति वक्तुम्[1] । '[2]द्वौ वाव सृत्यनुपक्रमौ'[3] (इति) सूचनार्थं चेति बोध्यम् ।

**(त.दी.)** असृत्युपक्रमादित्युक्त्या 'द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च' (ब्र.सू.भा.उ.बृहच्छ्रुतिः) इति श्रुतिः सूचिता । अनुपोष्येत्यकारस्योत्वं छान्दसम् । यद्वा- उपपूर्वस्य वसतेः सम्प्रसारणे रूपमेतत् । उपवासादिक्लेशमकृत्वा अनुपास्येति यावत् । कामादित्यत्राबन्धोक्तावपीशेन सर्वसाम्यापत्तेरबन्धो न युक्त इति तदाक्षेपादीशाधीनत्वयुक्त्या श्रुत्या च लयशङ्कायामयमारम्भः । **(पृ.सं.३६६.३६७)**

नित्यमुक्तत्वाङ्गीकारे भगवता सर्वसाम्यमापतितमित्यत आह -

---

१. 'सूचयितुम्' इति ख.पाठः । पृ.सं. ३११

२.'द्वौ वाऽसृत्युपक्रमौ' इति क्वचित् ।

३. 'द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चैतौ ज्ञात्वा विमुच्यते' इति (ब्र.सू.भा.उ.बृहच्छ्रुतिवचनम्, पृ. ४५)

ॐ [१]तदापीतेः संसारव्यपदेशात् ॐ (४-२-८)

(सू.) **तस्यां प्रकृतौ आ समन्तादपीतेर्लयस्य संसारव्यपदेशात्** । 'विलीनो हि प्रकृतौ संसारमेति, विलीनः परमे ह्यमृतत्वमेति'[२] इति श्रुतावित्युपलक्षणया योज्यम् । मोचकत्वामोचकत्ववतोः सर्वसाम्यायोगादिति भावः । यथोक्तं तत्त्वप्रदीपे- आ समन्ताद् अपीतेरिति अविज्ञातत्वं प्रवेशस्य उक्तम्- 'अविज्ञातं प्रविष्टं यद् अपीतम्' इति वचनस्य सावकाशत्वशङ्का स्यादिति 'तदापीतेः'[३] इत्युक्तम् । स्वस्याप्यविज्ञात एव तदा प्रकृतौ प्रवेश इत्यर्थ इति ।

हेत्वन्तरेण साम्यं प्रतिषेधति -

ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ (४-२-९)

(सू.) तदिति विभज्यानुवर्तते । तस्य च पञ्चम्यन्तत्वेन विपरिणामश्च । तस्याः प्रकृतेरपि तद् ब्रह्म **सूक्ष्मं प्रमाणतश्च** ज्ञानानन्दादिपरिमाणेन, अधिकमिति शेषः । कुतः ? 'सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः'[४] इत्यादिश्रुतौ **तथा दर्शनात्** इत्यर्थः । अतोऽपि[५] न सर्वसाम्यमिति भावः ।

---

१. 'तदपीतेः' इति प्रचलितपाठः, पृ.सं. ४५

२. 'समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्तौ असमावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति, विलीनः परमे ह्यमृतत्वमेति' इति (ब्र.सू.भा.उ. सौपर्णश्रुतिः, पृ.४६)

३. अनेन, ग्रन्थकृता 'तदपीतेः' इति पाठं विहाय 'तदापीतेः' इति सूत्रपाठः स्वीकृत इत्यवधेयम् ।

४. 'सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः । ज्ञानानन्दौ तथैश्वर्य गुणाश्चान्येऽधिकाः प्रभोः ॥' इति (ब्र.सू.भा.उ. तुरश्रुतिः, पृ. ४७)

५. 'तथाऽपि' इति ख. मातृकापाठः प्रामादिक इति भाति ।

तर्हि नित्यमुक्तत्वादिसाम्यमपि न स्याद् ब्रह्मादिवदित्यत आह -

**ॐ नोपमर्देनातः ॐ (४-२-१०)**

**(सू.) अतः** एवं साम्यतदभावयोः साधितत्वात् स्वातन्त्र्यादीशगुणानामसाधारण्या**नुपमर्देन** प्रकृतेः पुरुषेण नित्यमुक्तत्वादिना साम्यमित्यर्थः ।

**('नोपमर्देन' इत्यस्य साधुत्वोपपादनम्)**

नसमासत्वात् नोपमर्देनेति साधु । अन्यथा 'नलोपो नञः' (पा.सू. ६-३-७३) इति नञो लोपे 'तस्मान्नुडचि' (पा.सू. ६-३-७४) इति नुडागमेऽनुपमर्देनेति स्यादिति ज्ञेयम् ।

इतश्च किञ्चित्साम्यमित्याह -

**ॐ अस्यैव चोपपत्तेरूष्मा ॐ (४-२-११)**

**(सू.) ऊष्मेति** तत्पदोपेतश्रुतिरुच्यते । 'द्विधा हीदमवदृश्यते । ऊष्मावदनूष्मावच्च'[१] इत्यादिना ईश्वरस्योष्मावत्त्वं प्रकृतेरूष्मावत्त्वमनूष्मावत्त्वं च वदन्ती श्रुतिरपि **अस्यैव** किञ्चित्साम्यरूपार्थस्यैव उपपत्तेः इत्यर्थे भवति । उपपादिका भवतीति तात्पर्यमित्यर्थः । अवाप्य स्थितयोः किञ्चित्साम्यमिति भावः । ऊष्मावत् परेन्द्रियाभिभवशक्तिमदिति श्रुत्यर्थो ज्ञेयः ।

किञ्चित्साम्यमाक्षिप्य समादधाति -

---

१. 'द्विधा हीदमवदृश्यते ऊष्मावदनूष्मावच्च । तत्रोष्मावत्परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न शृण्वन्ति न विजानन्ति । अथानूष्मावत् प्रकृतिश्च प्राकृतं च यन्न जिघ्रन्ति जिघ्रन्ति च यन्न पश्यन्ति पश्यन्ति च यन्न शृण्वन्ति शृण्वन्ति च यन्न जानन्ति जानन्ति च ' इति (ब्र.सू.भा.उ.सौपर्णश्रुतिः, पृ. ४९)

## ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ (४-२-१२)

(सू.) अस्येत्यनुवर्तते । 'सर्वे ह्येतेऽणवः जायन्ते म्रियन्ते च'[१] इत्यादिश्रुतावन्येषु नित्यसर्वगतत्वाभावस्य ईशे तद्भावस्योक्त्याऽस्य देशकालव्याप्त्यादिनाऽपि साम्यप्रतिषेधान्न पुरुषप्रकृत्योर्देशादि-व्याप्त्यादिनाऽपि साम्य**मिति चेन्न । शारीरात्** जीवात् साम्यस्यैवेशेऽस्यां श्रुतौ **प्रतिषेधात्** । प्रकृतेः प्रतिषेधाभावादित्यर्थः ।

### ('शारीरात्' इति वचने कारणवर्णनम्)

जीवादित्यनुक्त्वा शारीरादित्युक्तिस्तस्य शारीरत्वेन नित्यसर्व-गतत्वायोग इति सूचयितुम् ।

कुतः सामान्यश्रुतेः शारीरसाम्याभावरूपविशेषपरत्वमित्यत आह-

## ॐ स्पष्टो ह्येकेषाम् ॐ (४-२-१३)

(सू.) **एकेषां** माध्यन्दिनानां 'अथासमाः ब्रह्मेन्द्रो रुद्रः'[२] इति श्रुतौ जीवानामेवासमत्वोक्तिपूर्वकं प्रकृतेः समासमत्ववादः **स्पष्टो हि** यस्मादस्तीत्यर्थः । (तस्मात्) विशेषश्रुत्या सामान्यश्रुतेः बाधोपपत्तिरिति भावः ।

---

१. 'असमो वा एष परो न हि कश्चिदेवं दृश्यते सर्वे ह्येतेऽणवः जायन्ते म्रियन्ते च छिद्रा ह्येते भवन्ति अथ परो न जायते न म्रियते पूर्णश्चैष भवति ।' इति (ब्र.सू.भा.उ.चतुर्वेदशिखाश्रुतिः, पृ. ५०)

२. 'अथातः समाश्चासमाश्चाभिधीयन्ते समासमाश्चाथ समानि ब्रह्मणो रूपाणि यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्चैकं ह्येवैतद्भवत्यथासमा ब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्ये के च देवा गन्धर्वा मनुष्याः पितरोऽसुरा यत्किञ्चेदं चरमचरं चाथ समाऽसमा प्रकृतिर्वाव समाऽसमा सैषा हि नित्याऽजरा तद्वशा च' इति (ब्र.सू.भा.उ. माध्यन्दिनायनानां श्रुतिः, पृ. ५१,५२)

न केवलं विशेषश्रुत्या, अपि तु स्मृत्या चेत्याह -

**ॐ स्मर्यते च ॐ (४-२-१४)**

(सू.) 'ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा'[१] इति **स्मर्यते**, असमत्वं समासमत्वं चेत्यर्थः ॥ ६ ॥

**॥ इति समनाधिकरणम् ॥ ६ ॥**

## ॥ ७ ॥ अथ पराधिकरणम् ॥

### (चतुर्मुखेतरदेवानां भगवति लयः)

अत्र चतुर्मुखेतरदेवानां भगवति लयः समर्थ्यते ।

**ॐ तानि परे तथा ह्याह ॐ (४-२-१५)**

(सू.) **तानि** 'भूतेषु लीयन्ते' इत्युक्तसर्वदैवतानि श्रुत्यन्तरोक्त-द्वारान्तरप्रवेशपूर्वकं विरिञ्चद्वारा रमाप्रवेशद्वारा **आत्मनि** लीयन्ते, नतु विरिञ्चादिस्वबिम्ब एव । कुतः ? **हि** यस्मात् 'सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्ति'[२] इति श्रुतिः **तथाऽऽह**[३] इत्यर्थः ॥ ७ ॥

**॥ इति पराधिकरणम् ॥ ७ ॥**

## ॥ ८ ॥ अथ अविभागाधिकरणम् ॥

### (मुक्तानां भगवदधीनत्वकथनम्)

अत्र मुक्तानां भगवदधीनत्वं समर्थ्यते ।

---

१. 'मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः । ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा ॥' इति (ब्र.सू.भा.उ.वाराहवचनम्, पृ. ५२)

२. 'सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्ये' इति (ब्र.सू.भा.उ. कौषारवश्रुतिः, पृ. ५३)

३. 'तथाऽऽह अत इत्यर्थः' इत्युक्ते समीचीनं स्यादिति भाति ।

(पूर्वपक्ष-सिद्धान्तौ)

मुक्तानां स्वतन्त्रत्वात् तदधीनत्वरूपप्रतिबिम्बत्वमयुक्तमिति प्रतिबिम्बत्वेन भगवति लयोऽयुक्त इत्याक्षेपे सत्याह -

**ॐ अविभागो वचनात् ॐ** (४-२-१६)

(सू.) प्रकृतदेवादिमुक्तानाम् (सत्यकामादेर्भगवदिच्छातः) **अविभागः** तादात्म्यं, तेन विषयतादात्म्यं लक्ष्यते । इच्छया एकविषयत्वं, तदिच्छानुसारित्वमिति यावत् । न तु स्वातन्त्र्यम् । कुतः? **वचनात्** । 'कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः' (तै.आ.३-१५-४) इति वचनादित्यर्थः ॥ ८ ॥

॥ इत्यविभागाधिकरणम् ॥ ८ ॥

**॥ ९ ॥ अथ तदोकोऽधिकरणम् ॥**

**(मनुष्याणां मुक्त्यर्थं देहादुत्क्रमणनिरूपणम्)**

देवानां मोक्षमुक्त्वाऽत्र मनुष्याणां मोक्षार्थं देहोत्क्रान्तिः समर्थ्यते ।

**ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ** (४-२-१७)

(सू.) पर इति प्रकृतं ब्रह्म **तदिति** परामृश्यते । **तदोकसः** भगवदोकसो हृदयस्य **अग्रे ज्वलनं** प्रभा प्रादुर्भवति । तावताऽज्ञलोकतोऽविशेष इत्यत उक्तम्- **तदिति** ॥ **तेन प्रकाशेन प्रकाशितनाडीद्वारः** सन् देहान्निर्गच्छतीति शेषः । अज्ञस्य नैवमिति ततो विशेष इति भावः । ज्ञानिनः प्रारब्धसद्भावात् कथमयं विशेषो युज्यत इत्यत उक्तम् -

**विद्येति** ॥ ईशापरोक्षशक्त्येत्यर्थः । 'स्वोदयात् फलदं ज्ञानम्'[1] इति वचनेन ज्ञानस्य स्वोदयमारभ्य फलदत्वादित्याशयः ।

यदि ज्ञानसामर्थ्यादिव एवमुत्क्रमणं भवति तर्हि ज्ञानिनः प्रथममरणमेवं किं न स्यादित्यत उक्तम्- **तच्छेषगत्यनुस्मृतियोगाच्चेति** ॥ तस्या विद्यायाः शेष इतिकर्तव्यता हृदयमारभ्य ब्रह्मप्राप्तिपर्यन्ता या गतिः तस्याः अनुस्मृतेः साहित्यात्, न विद्यासामर्थ्यमात्रादित्यर्थः । गत्यनुस्मृतिश्च कार्यावसानसमय एव न मरणान्तरे । 'ज्ञानिनां कर्मयुक्तानां'[2] इति स्मृतिवचनादिति भावः ।

किं ज्ञानसामर्थ्येनैवोक्तरूपमुत्क्रमणं भवति ? नेत्याह- **हार्दानुगृहीतेति** ॥ हृत्स्थेन विद्याप्रसन्नेन हरिणाऽनुगृहीतः सन् निर्यातीत्यर्थः । कया नाड्येत्यत आह- **शतेति** ॥ **शताधिकया** सुषुम्नाख्ययेत्यर्थः । **तदा**[3] उत्क्रान्तिकाल इति तत्त्वप्रदीपे ।

ननु यदि प्रकाशितनाडीद्वारो निष्क्रामति तर्ह्यज्ञानिवन्नाड्यन्तस्तमसैव गमनं स्यात् । यद्यन्तरप्यस्ति प्रकाशः, तर्हि द्वारपदवैयर्थ्यमित्याशङ्कायामाह -

**ॐ रश्म्यनुसारी ॐ** (४-२-१८)

---

१. 'प्रारब्धकर्मशेषस्तु विरजातरणावधिः । स्वोदयात् फलदं ज्ञानमादेहं कर्म वारवे: ॥' इति (न्यायविवरणोदाहृता श्रुतिः, पृ. २१०)

२. 'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा । विष्णुमाया तदा तेषां मनो बाह्यं करोति हि ॥' इति (गी.भा.उ.गारुडवचनम्)

३. एतत्पक्षे 'वृद्धिरेचि' (पा.सू. ६.१.८८) इति सूत्रेण वृद्धौ तदा + ओकः= तदौक इति स्यादिति न शङ्क्यम् । 'ओमाङोश्च' (पा.सू. ६.१.९५) चकाराद् अन्यत्रापीति सुधोक्तेस्तदोक इति साधु इत्यवगन्तव्यम् ।

(सू.)[१]नाड्यन्तराततसौररश्म्यनुसारी सन् ज्ञानी निष्क्रामतीत्यर्थः। अतो नाड्यन्तस्तमसा न गच्छति। नाड्यन्तराततप्रकाशस्य सौरत्वाद् द्वारप्रकाशस्य वैष्णवत्वात् न द्वारपदवैयर्थ्यमिति भावः।

**(एतदुपरि आक्षेपः समाधानं च)**

उक्तमाक्षिप्य समाधत्ते -

**ॐ निशि नेति चेन्न सम्बन्धात् ॐ (४-२-१९)**

(सू.) **रात्रौ** पर्यवसितकर्मणामुत्क्रान्तिर्**न** स्यात्। तदा रश्म्यभावादिति **चेन्न। सम्बन्धात्**। रश्मीनामित्यनुवर्तते। बाह्यादित्याभावेऽप्यन्तस्थादित्यरश्मीनां सदा नाडीसम्बन्धादित्यर्थः।

यावद्देहभाविनाडीरश्मिसम्बन्धे मानाभावादित्यत आह -

**ॐ यावद्देहभावित्वाद् दर्शयति च ॐ (४-२-२०)**

(सू.) विभक्तिविपरिणामेन सम्बन्धस्येत्यनुवर्तते। नाडीरश्मिसम्बन्धस्य **यावद्देहभावित्वाङ्गीकारात्**। न चासिद्धमिदं 'संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरं'[२] इति श्रुतिर्**दर्शयति** यस्मादित्यर्थः। **चो** यस्मादित्यर्थे।

**('यावद्देहभावित्वात्' इति कथने कारणवर्णनम्)**

यावद्देहभावित्वं दर्शयतीति वाच्ये भावित्वादिति वचनं

---

१. 'आसहस्रं वाऽदित्यस्य रश्मय आसु नाडीष्वातताास्तत्र श्वेतः सुषुम्नो ब्रह्मयानस्सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छति' इति पौत्रायणश्रुत्युक्तनाड्यन्तराततसौत्ररश्म्यनुसारी सन् इत्यर्थः।

२. 'संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यन्त्येतैरुत्क्रामत्येतैः प्रवर्तते' इति (ब्र.सू.भा.उ.माध्यन्दिनायनश्रुतिः, पृ. ६०,६१)

नाडीरश्मिसम्बन्धः सदातनः किं वा देहपातपूर्वकालीनः । नाऽद्यः । नाडीनां सदाऽभावात् । नान्त्यः । कदाचिद् ज्ञानिनस्तमसोत्क्रान्ति-प्रसङ्गादिति न शङ्क्यम् । यावद्देहभावित्वाङ्गीकारात् । तस्य श्रुति-सिद्धत्वादिति सूचयितुमिति द्रष्टव्यम् ।

ननु व्यर्थोऽयं रात्रावुत्क्रमणप्रतिपादनायासः । 'दक्षिणे मरणाद् याति स्वर्गं ब्रह्मोत्तरायणे' (ब्र.सू.भा.उ. स्मृतिः, पृ.सं. ६१) इत्युक्तमोक्षार्थं ज्ञानिनो दक्षिणायणोत्क्रान्त्ययोगवद् रात्रावपि तदभावोपपत्तेरित्यत आह -

**ॐ अतश्चायनेऽपि हि दक्षिणे ॐ (४-२-२१)**

**(सू.) च**शब्दात् साध्यं समुच्चीयते । **अपि** 'दक्षिणे मरणात्' (ब्र.सू.भा.उ. स्मृतिः, पृ.सं.६१) इति स्मृतिसत्त्वेऽपि **हि** यस्माद् **दक्षिणेऽयने** ज्ञानिन उत्क्रान्तिर्युक्ता । अतः तदयोगदृष्टान्तेन रात्रावपि तदभावो न वाच्यः। कुतः? सौररश्मिसहस्रस्य नाडीसम्बन्धसत्त्वादित्यर्थः । स्मृतौ दक्षिणोत्तरायणशब्देन देहे व्याप्तसौररश्मीनामेवाभिधानम् । न कालस्येति भावः । 'शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः । तावन्त एव निर्दिष्टा उत्तरायणरश्मयः ॥'[१] इति समुच्चायको वाऽपिशब्दः ॥ ९ ॥

**॥ इति तदोकोऽधिकरणम् ॥ ९ ॥**

---

१. ' शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः । तावन्त एव निर्दिष्टा उत्तरायण-रश्मयः ॥ ते सर्वे देहसम्बद्धा सर्वदा सर्वदेहिनाम् । महर्लोकादिगन्तार उत्तरायणरश्मिभिः ॥ निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः । उत्तरं दक्षिणमिति त एव तु निगद्यते । नतु कालविशेषोऽस्ति ज्ञानिनां नियमात् फलम् ॥ ददाति कालेऽनुगुणे फलं किञ्चिद् विशिष्यते । अत्युत्तमानां केषाञ्चिन्न विशेषोऽस्ति कालतः ॥' इति (ब्र.सू.भा.उ. नारायणाध्यात्मवचनम्, पृ. ६१,६२)

## ॥ १० ॥ अथ योग्यधिकरणम् ॥

(विद्यागत्यनुस्मरणस्याऽवश्यकत्वसमर्थनम्)

अत्र विद्यागत्यनुस्मरणस्याऽवश्यकत्वं समर्थ्यते ।

**ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ (४-२-२२)**

(सू.) **एते** ब्रह्मचन्द्रगती [१]**योगिनः प्रति स्मर्येते** 'अग्निर्ज्योतिरहः-शुक्लः' (भ.गी. ८-२४) 'धूमो रात्रिस्तथा कृष्णः' (भ.गी. ८-२५) इत्यादिस्मृत्योः उच्येते, ज्ञानादिसाध्यतया स्मर्येते इति यावत् । एवं ब्रह्मगतेर्विद्यासाध्यत्वमुक्त्वा गत्यनुस्मृतिसाध्यत्वमाह- **स्मार्ते चेति** ॥ स्मृतिसाध्यत्वात् **स्मार्ते** गत्यनुस्मृतिसाध्ये एव **स्मर्येते** इति सम्बन्धः। नतु कालादिकृते इत्यर्थः । 'अग्निर्ज्योतिः'(भ.गी. ८-२४) इति स्मृतौ ब्रह्मविद इति विशेषणात् । [२]'गत्यनुस्मरणाद् ब्रह्म चन्द्रं वा गच्छति ध्रुवम्'[३] इति वचनात् । ([४]'स इतो गतो द्वितीयां गतिं वायुमागच्छति' इति विद्यागत्यनुस्मृतिब्रह्मगत्योरित्याशयः ।)?

॥ इति योग्यधिकरणम् ॥ १० ॥

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकासंस्थसूत्रार्थसङ्ग्रहे चतुर्थाध्यायस्य द्वितीयःपादः ॥**

---

१. योगशब्दस्योपायार्थत्वाद् 'योगिनः' इत्युक्तिर्ब्रह्मचन्द्रगत्योर्ज्ञानकर्मणी एवोपायौ, न तु तत्कालस्मृतिरिति ज्ञापयितुमिति तत्त्वप्रदीपकृतः ।

२. 'गत्यनुस्मरणाद् ब्रह्म चन्द्रं वा गच्छति ध्रुवम्' इति वचनाच्च विद्या-गत्यनुस्मृतिसाध्यत्वं ब्रह्मचन्द्रगत्योरित्याशयः' इति पाठेन भाव्यमिति भाति ।

३. 'गत्यनुस्मरणाद् ब्रह्म चन्द्रं वा गच्छति ध्रुवम् । अननुस्मरतः काले स्मरणं प्राप्य वै गतिः ॥' इति (ब्र.सू.भा.उ.अध्यात्मवचनम्, पृ. ६५,६६)

४. वाक्यमिदमकाण्डताण्डवायितमिति भावति ।

## ॥ अथ तृतीयः पादः ॥

### ॥ १ ॥ अर्चिराद्यधिकरणम् ॥

**(ब्रह्मनाड्योत्क्रान्तानां मार्ग-गम्ययोः निरूपणम्)**

ब्रह्मनाड्योत्क्रान्तानां ज्ञानिनां यो ब्रह्मप्राप्तौ मार्गो यच्च तेन पथा गतानां देहलयवतां च गम्यं तदुभयमस्मिन् पादे कथ्यते ।

**(ब्रह्मप्राप्तिमार्गेऽर्चिषः प्राथम्योक्तिः)**

तत्राऽद्ये [१]ब्रह्मप्राप्तिमार्गस्यार्चिषः प्राथम्यमुच्यते ।

**॥ ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ (४-३-१)**

(सू.) ज्ञानी 'तेऽर्चिषमभिसम्भवन्ति'[२] इत्युक्त्याऽ**र्चिरादिना** पथा गच्छति । कुतः ? **तत्प्रथितेः** तस्योक्तार्थस्य 'तेऽर्चिषमभिसम्भवन्ति' (छा. ५.१०.१) इति श्रुतौ 'द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां'[३] इति स्मृतौ प्रसिद्धेरित्यर्थः । 'स वायुमागच्छति'[४] इत्यस्य गतिं वक्ष्याम इति हृदयम् ।

**॥ इत्यर्चिराद्यधिकरणम् ॥ १ ॥**

---

१. 'ब्रह्मप्राप्तिमार्गेऽर्चिषः' इत्युक्ते समीचीनं स्यादिति भाति ।

२. 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्' इति (छा. ५.१०.१)

३. 'द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् । धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात् ॥ अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः । अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् ॥' इति । एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान् ॥' इति (ब्र.सू.भा.उ.ब्रह्मतर्कवचनम्)

४. 'यदा ह वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति' इति (बृ.उ. ७.१०.१)

## ॥ २ ॥ अथ वायुशब्दाधिकरणम् ॥

### (वायोरर्चिरनन्तरप्राप्यत्वकथनम्)

वायोः द्वितीयप्राप्यत्वं समर्थ्यते ।

### ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ (४-३-२)

### (सूत्रार्थः)

'सुपां सुपो भवन्ति' (वार्तिकम्) इति वचनात् पञ्चमीद्विवचनस्य पञ्चम्येकवचनादेशः । सामान्यविशेषात्मकाभ्यां 'स[१]वायुमभिगच्छति' (बृ.उ. ७-१०-१) इति 'स इतो द्वितीयां गतिं वायुमागच्छति'[२] इति **वायुशब्दोपेतश्रुतिभ्यां** वायुरेव द्वितीयप्राप्य इत्यभिनवचन्द्रिकातो योजना द्रष्टव्या । यथा 'मा हिंस्यात्' (श्रुतिः) इति निषेधस्य यागीयपशुहिंसानिषेधपरत्वासम्भवेन बाह्यनिषेधपरत्वं तथा 'स वायुमागच्छति' (बृ.उ. ७-१०-१) इति सामान्यश्रुतेर्मुख्यप्राथम्य-बाधेऽमुख्यप्राथम्यपरत्वादिति भावः ॥ २ ॥

॥ इति वायुशब्दाधिकरणम् ॥ २ ॥

## ॥ ३ ॥ अथ तटिदधिकरणम् ॥

### (तटिल्लोकस्य संवत्सरलोकादनन्तरप्राप्यत्वकथनम्)

अत्र तटिल्लोकस्य संवत्सरलोकानन्तरं प्राप्यत्वं समर्थ्यते ।

### ॐ तटितोऽधिवरुणः सम्बन्धात् ॐ (४-३-३)

---

१. 'स वायुमागच्छति' इति पाठेन भाव्यमिति भाति ।

२. 'स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह्न आपूर्यमाणपक्षम्' इति (ब्र.सू.भा.उ.श्रुतिः, पृ. ६९)

(सू.) **तटितः** तटिल्लोकात् तद् **अधि** उपरि, तटिल्लोकप्राप्त्यनन्तरमिति यावत्। वरुणः प्राप्यः। कुतः ? **सम्बन्धात्** '[१]तटितो (तटिता) ह्यूह्यते वरुणलोकः'[२] इति तस्य तटितोऽधि उपरि अभिधानात् सम्बन्ध-श्रवणादित्यर्थः ॥ ३ ॥

॥ इति तटिदधिकरणम् ॥ ३ ॥

**॥ ४ ॥ अथ आतिवाहिकाधिकरणम् ॥**

**(द्वितीयप्राप्यवायोरातिवाहिकत्वसमर्थनम्)**

अत्र द्वितीयप्राप्यस्य वायोरातिवाहिकत्वं समर्थ्यते ।

**ॐ आतिवाहिकस्तल्लिङ्गात् ॐ (४-३-४)**

(सू.) 'स वायुमागच्छति' (बृ.उ. ७.१०.१) इति प्रथमप्राप्यतयोच्यमानो वायुः **आतिवाहिकः**[३] **तस्मादेव पूर्वगमनरूपाल्लिङ्गाद्** ज्ञापकादि-त्यर्थः । पूर्वगमनमात्रस्यार्चिरादिगतत्वेनाऽतिवाहिकत्वासाधकत्वेऽपि वायुत्वानिश्चयसहकृतस्य तत्साधकत्वमुपपन्नमेव। तद्यथा त्रिवर्णेतरत्व-मात्रस्यान्त्यजादिमतत्वेन शूद्रत्वासाधकत्वेऽपि वर्णनिश्चयसहकृतस्य साधकत्वमुपपद्यते एवमिति[४] भावः ।

ननु नायं पूर्वपक्षो निवर्तते । मुख्यस्य प्रथमप्राप्तत्वानङ्गीकारे

---

१. 'तटिता' इति पाठेन भाव्यमिति भाति।

२. 'तत्र तटितो वरुणं गच्छति। तटिता ह्यूह्यते वरुणलोकस्तटिदुपरि मुक्तामयो राजते तत्रासौ वरुणो राजा सत्यानृते विविश्चति' इति (ब्र.सू.भा.उ. श्रुतिः, पृ.७१)

३. अतिशयितं विष्णुं वहतीति व्युत्पत्त्याऽतिवहः मुख्यवायुः,तस्य पुत्रः आतिवाहिकः ।

४. 'एवेति' इति ख. पाठः।

तदप्राप्तिप्रसङ्गात् । 'द्यौर्वाव विद्युत्पतिं वायुमुपगम्य'[१] इति पुनरपि वायुप्राप्तिः श्रूयते । स मुख्यो भवतीति न पूर्वपक्षानुवृत्तिरिति चेत् । तर्हि किं पूर्वोक्त आतिवाहिक उत परः । तथा च परत्वोक्तोऽपि क इति संशयानुवृत्तिर्दोष इत्यत आह -

**ॐ उभयव्यामोहात् तत्सिद्धेः ॐ (४-३-५)**

**(सू.)** पञ्चमी सप्तम्यर्थे । **उभयस्मिन्** वायुशब्दे आतिवाहिको मुख्यो वेति **व्यामोहे** सन्देहेऽपि **तत्सिद्धेः** पूर्वोक्तो आतिवाहिकः पश्चादुक्तो मुख्य इत्यस्यार्थस्य सिद्धेरित्यर्थः । पश्चात्तनस्य दिवस्पतित्वलिङ्गा-दिति भावः ।

**॥ इत्यातिवाहिकाधिकरणम् ॥ ४ ॥**

**(त.दी.)** उत्क्रान्तस्तु शरीरात् स्वात् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽतिवाहिकः ॥
ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ॥
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥'

इति (ब्र.सू.भा.उ.ब्रह्मतर्कवचनम्) स्मृत्योक्तार्थः सर्वो ध्येयः । (पृ. ३९९,४००)

**॥ ५ ॥ अथ वैद्युताधिकरणम् ॥ ५ ॥***

**ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ (४-३-६)**

---

११६७. 'द्यौर्वाव विद्युत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति' इति (ब्र.सू. भा.उ.श्रुतिः, पृ. ७३)

*. ब्रह्मप्राप्तिमार्गे मुख्यवायोरन्तिमत्वमत्र साध्यते ।

(सू.) तत इत्यनन्तरमन्यः प्राप्योऽस्तीति न शङ्क्यमिति शेषः । तत्र तत्र श्रुत्यादौ मार्गे तारतम्यक्रमं विहाय प्रकारान्तरेण प्राप्तेरुच्यमानत्वात् **ततो** वायोः परतो ब्रह्मणोऽन्योऽपि प्राप्योऽस्तीति न शङ्क्यम् । कुतः? **वैद्युतेन तच्छ्रुतेः** । विद्युतोऽयं वैद्युतः, तेन वैद्युतेन वायुना **तस्य** ब्रह्म गतस्य 'स एनान् ब्रह्म गमयति' (छा.उ. ४-१५-६) इति **श्रवणात्** इत्यर्थः ।

अन्यस्यान्तिमत्वे तस्यैव ब्रह्मप्रापकत्वं स्यात् । तच्च नास्तीति भावः।

**(सूत्रे वैद्युतपदप्रयोगे कारणोक्तिः)**

'विद्युत्पतिर्वायुरेव नयेद् ब्रह्म न चापरः'[१] इति स्मृतिसूचनाद् वैद्युतेनेति यौगिकपदं प्रयुक्तमिति बोध्यम् ।। ५ ।।

**।। इति वैद्युताधिकरणम् ।। ५ ।।**

## ।। ६ ।। अथ कार्याधिकरणम् ।।

**(गम्यनिरूपणम्)**

एवं मार्गं विचार्य तेन मार्गेण गच्छतां गम्यं निरूप्यतेऽस्मिन्नये ।

**ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ (४-३-७)**

(सू.) ब्रह्मेत्यनुवर्तते । **कार्यम्** उत्पत्तिमद्ब्रह्म चतुर्मुखाख्यमेव ब्रह्म वायुर्नयतीति **बादरिर्मन्यते** । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात् कथमयमर्थ इत्यत उक्तम् - **अस्येति** ।। 'तथाऽपि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यते' इत्यादिना चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सन्ततत्वात् । चतुर्मुखस्य मुक्तेः प्राक् **अस्य** चतुर्मुखस्यैव **गत्युपपत्तेरित्यर्थः** ।

---

१. 'विद्युत्पतिर्वायुरेव नयेद् ब्रह्म न चापरः । कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम् ।।' इति (ब्र.सू.भा.उ.बृहत्तन्त्रवचनम्, पृ. ७६)

न केवलं ब्रह्मत्वात् परब्रह्मप्राप्त्ययोगरूपयुक्त्या ब्रह्मपदस्यामुख्यार्थत्वं किन्तु विशेषश्रुतिबलाच्चेत्याह -

**ॐ विशेषितत्वाच्च ॐ** (४-३-८)

**(सू.)** 'यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखम्'[१] इति कौषारवश्रुतौ चतुर्मुखत्वेन ब्रह्मणो **विशेषितत्वात्** कार्यमेव ब्रह्मशब्दार्थ इत्यर्थः ।

ननु 'ब्रह्मविदाप्नोति परं' (तै.उ. २-१) इति श्रुतौ परब्रह्मप्राप्तेरेव ज्ञानिनः श्रुतत्वात् कथं कार्यप्राप्तिरित्यत आह -

**ॐ सामीप्यात्तु तद्व्यपदेशः ॐ** (४-३-९)

**(सू.)** तुशब्दोऽवधारणे । ज्ञानिनः **तद्व्यपदेशः** परप्राप्तिव्यपदेशः **सामीप्यात्** परप्राप्तेः कालतः सामीप्यादेव हेतोः, नतु कार्यस्याप्राप्यत्वात् न वा परस्य प्रथमप्राप्यत्वादित्यर्थः ।

**(त.दी.)** 'तद्व्यपदेशस्तु' इत्यन्वितः सन् 'ब्रह्मवित्' इति श्रुतिगतिसूचनार्थो वा तुशब्दः । **(पृ.सं.४०५)**

ननु सामीप्यात् परप्राप्तिरित्यस्य कोऽर्थः? प्रलयादर्वाक्, प्रलये वा? नाऽद्यः । [२]बद्धत्वरूपोक्तबाधकत्वसाम्यात् । नान्त्यः। प्रमाणाभावादित्यत आह -

**ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ** (४-३-१०)

**(सू.) कार्याणामत्यये** नाशरूपप्रलये **तदध्यक्षेण** महदादिकार्याणां

---

१. 'यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखं' इति (ब्र.सू.भा.उ.कौषारवश्रुतिः, पृ. ७८)

२. 'बद्धत्वरूपोक्तयुक्तिसाम्यात्' इति क. पाठः ।

स्वामिना चतुर्मुखेण **सह अतः** चतुर्मुखात् **परं** ब्रह्म ज्ञानी गच्छति । कुतः ? 'ते ह ब्रह्माणमभिसम्पद्य यदैतद् विलीयते अथ सह ब्रह्मणा परमभिगच्छन्ति' (ब्र.सू.भा.उ.सौपर्णश्रुतिः, पृ.७९) इति श्रुतौ तथा **अभिधानादित्यर्थः** ।

**(त.दी.)** कार्येत्याद्युक्तिः लयस्वरूपोक्त्यर्था। तदध्यक्षेणेत्युक्तिः ईशनियोगात् तस्य कार्याधिकृतत्वेन तदपगमे तस्यापीशप्राप्तिर्युक्तेति सूचयितुम् । (पृ.सं.४०६)

स्मृत्याऽप्येतमर्थं समर्थयति -

**ॐ स्मृतेश्च ॐ** (४-३-११)

**(सू.)** 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते परात्मानः प्रविशन्ति परं पदम् ॥'
(ब्र.सू.भा.उ. स्मृतिः, पृ.८०)

इति **स्मृतेश्चोक्त** एवार्थो ज्ञायत इत्यर्थः ।

पक्षान्तरं दर्शयति -

**ॐ परं जैमिनिर्मुख्यत्वात् ॐ** (४-३-१२)

**(सू.)** 'स एनान् ब्रह्म गमयति' (छा.उ. ४-१५-६) इति श्रुतौ **परं** ब्रह्म वायुर्गमयतीत्यर्थो न कार्यमिति **जैमिनिर्मन्यते** । कुतः ? ब्रह्मशब्दस्य तत्र **मुख्यत्वादित्यर्थः** ।

ननु मुख्यत्वेऽपि तद्ग्रहणानुपपत्तेः प्रागुक्तत्वादमुख्यकल्पनेत्यत आह-

**ॐ दर्शनाच्च ॐ** (४-३-१३)

**(सू.)** परस्येति विपरिणामेनानुवर्तते । श्रवणादिसाधनैरपरोक्षतया

परस्यैव ब्रह्मणो **दर्शनाच्च**। अन्यस्य तदभावादुपपन्न एव मुख्यार्थस्वीकार इत्यर्थः ।

हेत्वन्तरमाह -

**ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॐ** (४-३-१४)

(सू.) **कार्ये** ब्रह्मणि **प्रतिपत्तिः** उपासना, प्राप्नवानीति **अभिसन्धिः** इच्छा च **नास्ति**। अतश्च परमेव प्राप्यं न कार्यमित्यर्थः ।

एवं जैमिनिबादरिमतयोर्विरुद्धवत् प्रतीयमानत्वात् कार्यपरगति-विषयश्रुतिस्मृतीनां विरोधं परिहरन् उभयत्र गन्तॄणां सहेतुकविभाग-ज्ञापनाय स्वसिद्धान्तमाह -

**ॐ अप्रतीकालम्बनान् नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ॐ** (४-३-१५)

(सू.) प्रतीके देह एव ब्रह्म पश्यन्तः **प्रतीकालम्बनाः**। तदन्ये **अप्रतीकालम्बनाः**। व्याप्ततया ब्रह्म पश्यन्त इत्यर्थः । **तान्** परं **नयतीति** नतु सर्वानिति 'स एनान् ब्रह्म' (छा.उ. ५-१०-२) इति श्रुत्यर्थ इति **बादरायणो** मन्यते । कुतः ? **उभयथा च दोषात्**। कांश्चित् कार्यं, कांश्चित् परमित्यनङ्गीकृत्य सर्वान् कार्यमेव नयति न परं, परमेव नयति न कार्यमित्यङ्गीकारे दोषसद्भावात्। आद्ये ब्रह्मशब्दस्य मुख्यार्थत्वं तद्दर्शनमित्यादि, परप्राप्तिपक्षे साधकमयुक्तं[1] स्यात्। अन्त्ये 'ब्रह्माणं चतुर्मुखम्' (ब्र.सू.भा.उ. कौशारवश्रुतिः) इति विशेषितत्वमित्यादि कार्यप्राप्तिपक्षे[2] साधकमयुक्तं स्यादिति ।

---

१. 'परप्राप्तिपक्षे यत् साधकमुक्तं तदयुक्तं स्यात्' इत्युक्ते समीचीनं स्यात्।

२. 'कार्यप्राप्तिपक्षे यत् साधकमुक्तं तदयुक्तं स्यात्' इत्युक्ते समीचीनं स्यात्।

'यत् प्राप्तुमभिवाञ्छति'[१] इति वचनादिच्छावशेनैव कार्यपरप्राप्त्योः कार्याकार्यब्रह्मप्राप्त्योः सम्भवाद् अप्रतीकालम्बनत्वादिविशेषाङ्गीकारो व्यर्थ इत्यत उक्तम् - **तत्क्रतुश्चेति** ।। श्रुतिग्रहणमिदम् । 'स यथाकामो भवति स तत्क्रतुर्भवति यत्कर्म कुरुते तदभिसम्पद्यते' (बृ.उ. ६-४-५) इति श्रुतौ तत्प्राप्तीच्छूनामिच्छानुसारेण तत्प्राप्तिप्रतिषेधात् । नेच्छानुसारेण तत्प्राप्तिः, किन्तु केनचित्क्रमेणैवेत्यर्थः । अत्र श्रुतौ यत्प्राप्तीच्छा तद्भावोपासनापरोक्षैरेव तत्प्राप्तेरुक्तत्वादिति हृदयम् ।

**(कांश्चिदित्यनुक्त्वाऽप्रतीकेति कथने कारणोक्तिः)**

कांश्चिदिति वाच्येऽप्रतीकेत्याद्युक्तिः क्रमेऽपि न सौकर्यक्रमेणोभय-प्राप्तिरिति सूचयितुम् ।

यदुक्तं नेच्छानुसारेण प्राप्तिरपि तु प्रतीकालम्बनत्वादिक्रमेणैवेति केचिद् अप्रतीकालम्बनाः केचित् प्रतीकालम्बना इत्यादिविभागे प्रमाणाभावादित्यत आह -

**ॐ विशेषं च दर्शयति ॐ** (४-३-१६)

(सू.) 'देवा वाव सर्वप्रकाशाः ऋषयोऽन्तःप्रकाशा मनुष्या एव बहिः-प्रकाशाः'[२] इति श्रुतिः अप्रतीकालम्बनत्वादि**विशेषं दर्शयती**त्यर्थः ।

**।। इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकागतसूत्रार्थसङ्ग्रहे चतुर्थाध्यायस्य तृतीयः पादः ।।**

---

१. 'यदुपास्ते पुमान् जीवन् यत् प्राप्तुमभिवाञ्छति । यच्च पश्यति तृप्तःसन् तत्प्राप्नोति मृतेरनु ।।' इति (ब्र.सू.भा.उ. पाद्मवचनम्)

२. 'अन्तःप्रकाशा बहिःप्रकाशाः सर्वप्रकाशाः देवा वाव सर्वप्रकाशाः ऋषयोऽन्तः-प्रकाशा मनुष्या एव बहिःप्रकाशाः' इति

(ब्र.सू.भा.उ.चतुर्वेदशिखाश्रुतिः, पृ. ८५)

## ।। अथ चतुर्थाध्यायस्य चतुर्थः पादः ।।

### (भोगनिरूपणम्)

चतुर्विधफले त्रिविधमुक्त्वा चतुर्मुखेन सह ब्रह्म प्राप्तानां यस्तत्र भोगः सोऽत्र पादे कथ्यते ।

### ।। १ ।। सम्पद्याधिकरणम् ।।

**ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ (४-४-१)**

(सू.) परमित्यनुवर्तते । ज्ञानी परंब्रह्म **सम्पद्य** प्राप्य **तदविहायैव स्वेन** रूपेणावस्थितस्सन्, भोगान् भुङ्क्त इति शेषः । 'एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति' (छा. ८-४-२) इति विरोध इत्यत उक्तम्- **शब्दादिति** ।। 'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेन सेतुना [१]मोदते'[२] इति श्रुतेरित्यर्थः । तच्छ्रुत्यनुसारेण प्राचीनश्रुतेरेतं सेतुं गन्तुमन्यत् तीर्त्वेत्यर्थान्तरं वाच्यमिति भावः । 'सम्पद्य' इत्यनेन 'आत्मानमभिसम्पद्यैतेनाऽत्मना यथाकामं सर्वान् कामान् अनुभवति'[३] इति श्रुतिः सूच्यते । 'स्वेन' इति वदता 'ज्योतिरुपसम्पद्य स्वेन रूपेण'[४] इति श्रुतिः सूचिता ।। १ ।।

### ।। इति सम्पद्याधिकरणम् ।। १ ।।

---

१. 'मोदमानः' इति क्वचित् पाठः ।

२. 'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेन सेतुना मोदते प्रमोदत आनन्दी भवति' इति (ब्र.सू.भा.उ. मौद्गल्यश्रुतिः, पृ. ८७)

३. 'स य एवंविदेवंमन्वान एवं पश्यन्नात्मानमभिसम्पद्यैतेनाऽत्मना यथाकामं सर्वान् कामान् अनुभवति' इति (ब्र.सू.भा.उ. सौपर्णश्रुतिः, पृ. ८६)

४. 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा. ८ -३-४)

(त.दी.) परानतिक्रमे ह्यमुक्तत्वं स्यात्, 'एतं सेतुं तीर्त्वा' (छा.८-४-२) इति तदतिक्रम एव मुक्तत्वोक्तेरिति शङ्कां व्युदसितुं स्वेनेत्युक्तम् । स्वरूपाविर्भावस्यैव मुक्तित्वादिति । शब्दादित्युक्तिः श्रुतिविरोधनिरासार्था । (पृ.सं.४१८)

## ॥ २ ॥ मुक्ताधिकरणम् ॥

### (ब्रह्मानतिक्रमेणैव भोगान् भुञ्जानस्य मुक्तत्वसाधनम्)

अत्र ब्रह्म प्राप्य तदविहायैव भोक्तुर्मुक्तत्वं साध्यते ।

### ॐ मुक्तः प्रतिज्ञानात् ॐ (४-४-२)

(सू.) 'स तत्र पर्येति' (छा.उ. ८.१२.३) इत्यत्र मुक्त एवोच्यते । नतु क्रियाप्रतीत्या संसारी । मुक्तत्वं [१]विनैवंभोगानुपपत्तेरिति भावः । ननु ब्रह्मप्राप्त्या तदुपपत्तिः किं न स्यादित्यत उक्तम्- **प्रतिज्ञानादिति** ॥ 'अहरहरेनमनुप्रविशति उपसङ्क्रमे च'[२] इति ब्रह्मप्राप्तानामपि सुप्तानामयुक्ततया दिव्यभोगाद्युक्तेश्चेत्यर्थः ॥ २ ॥

॥ इति मुक्ताधिकरणम् ॥ २ ॥

## ॥ ३ ॥ अथ आत्माधिकरणम् ॥

### ॐ आत्मा प्रकरणात् ॐ (४-४-३)

### (मुक्तप्राप्यज्योतिषो ब्रह्मत्वसाधनम्)

अत्र मुक्तप्राप्यस्य ज्योतिषो ब्रह्मत्वं प्रतिपाद्यते[३] ।

---

१. 'विनैव तद्भोगानुपपत्तेरिति भावः' इति क. पाठः ।

२. अहरहमेनमनुप्रविशत्युपसङ्क्रमे च न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवत्यथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवति' इति (ब्र.सू.भा.उ. बृहच्छ्रुतिः, पृ. ८८)

३. 'साध्यते' इति ख.पाठः ।

(सू.) 'परं ज्योतिरुपसम्पद्य' (छा.उ. ८-३-४) इति श्रुतं मुक्तप्राप्यं ज्योतिः **आत्मा** परमात्मैव। न तु 'सूर्यमगन्म ज्योतिः', 'स तेजसि सूर्ये सम्पन्नः'[1] इत्यादिश्रुत्या सूर्यः। कुतः ? 'य आत्मा अपहतपाप्मा' (छा.उ.८.७.३) इति **परमात्मप्रकरणात्** इत्यर्थः ॥ ३ ॥

॥ इत्यात्माधिकरणम् ॥ ३ ॥

## ॥ ४ ॥ अथाविभागाधिकरणम् ॥

### (सायुज्यभाजां भगवद्भुक्तभोगवत्त्वसाधनम्)

अत्र सायुज्यभाजां भगवद्भुक्तभोगभोक्तृत्वं साध्यते।

### ॐ अविभागेन दृष्टत्वात् ॐ ॥(४-४-४)

(सू.) **अविभागेन** परमात्मभोगाविभागेन सायुज्यभाजो भोगान् भुञ्जते। तद्भोग्यानेव कांश्चिद् भुञ्जते। न पार्थक्येनेति यावत्। कुतः ? **दृष्टत्वात्**। 'यानेवाहं शृणोमि यान् पश्यामि'[2] इत्यादिश्रुतौ तथा दृष्टत्वादित्यर्थः।

### (श्रुतेरित्यवचने कारणोक्तिः)

ननु श्रुतेरिति वाच्यम्। दृष्टत्वादिति कुत इति चेद्, इत्थम्। मन्त्रिप्रभृतिषु राजभोग्यैश्वर्यादिकिञ्चिद्भोक्तृत्वस्य लोके दर्शनादिति सूचनाय दृष्टत्वादित्याह ॥ ४ ॥

॥ इत्यविभागाधिकरणम् ॥ ४ ॥

---

१. 'स तेजसि सूर्ये सम्पन्नो यथा पादोरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः' इति (प्रश्न. ५.५)

२. 'यानेवाहं शृणोमि यान् पश्यामि यान् जिघ्रामि तानेवैतं शरीरं विमुच्यानुभवन्ति।' इति (ब्र.सू.भा.उ. चतुर्वेदशिखाश्रुतिः, पृ. ९३)

## ।। ५ ।। अथ ब्राह्माधिकरणम् ।।

## (देहाभावप्रयुक्ताभोक्तृत्वं निरस्य मुक्तस्य भोक्तृत्वसमर्थनम्)

अत्र मुक्तस्य भोगभोक्तृत्वं समर्थ्यते ।

**ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ (४-४-५)**

**(सू.)** मुक्तस्य स्वदेहाभावेऽपीशप्रविष्टस्य **ब्राह्मेण** ब्रह्मसम्बन्धिना देहेन ग्रहवद् भोगोऽस्तीति **जैमिनिर्मन्यते** । कुतः ? 'ब्रह्मणा पश्यति ब्रह्मणा शृणोति'[१] इति श्रुतौ **तथोपन्यासात्** । **आदि**पदात् 'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति'[२] इत्यादि**स्मृतेः** ।

'गच्छामि विष्णु-पादाभ्यां विष्णुदृष्ट्या च दर्शनम् ।
इत्यादिपूर्वस्मरणान्मुक्तस्यैतद्भविष्यति ।।'

(ब्र.सू.भा.उ. बृहत्तन्त्रवचनम्, पृ.९६३)

इति स्मृत्युक्तयुक्तेश्चेत्यर्थः । स्वयं देहविहीनस्य कथमन्यदेहेन भोग इत्यतो युक्तिरियमुपन्यस्तेति ज्ञेयम् ।

इदानीं देहमभ्युपगम्य भोगं साधयति -

**ॐ चिचिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॐ (४-४-६)**

**(सूत्रार्थः) चितिमात्रेण** देहेन मुक्तो भोगान् भुङ्क्ते । देहित्वे मुक्तत्वाभाव इत्यत उक्तम् - **चितिमात्रेणेति** ।। चिन्मात्रदेहस्य **तदात्मकत्वात्**

---

१. 'स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनुभवति' इति (ब्र.सू.भा.उ. माध्यन्दिनायनश्रुतिः, पृ. ९२)

२. आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति । गच्छेच्च हरिपा(दाभ्यां)देन मुक्तस्यैषा स्थितिर्भवेत् ।।' इति (ब्र.सू.भा.उ.स्मृतिः, पृ. ९२)

मुक्तस्वरूपत्वात् । प्राकृतस्यैव संसारापादकत्वेन स्वरूपस्याकृत्रिमत्वादित्यर्थः । तदात्मकत्वं तु 'चिन्मात्र एष भवति'[१] इति श्रुतिसिद्धमिति भावः ।

देहभावाभावयोर्विरोधादेतौ परिहारावनुपपन्नावित्यत आह -

**ॐ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॐ**

**(४-४-७)**

(सू.) **एवमपि** चिन्मात्रदेहेन भोगान् भुञ्जत इत्येवंप्रकारेणापि 'स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रीभवति अथ तेनैव रूपेणाभिपश्यति'[२] इति श्रुतौ **उपन्यासात् पूर्वभावात् पूर्वस्य** जैमिन्युक्तस्य देहाभावस्यापि **भावात्** तत्रोक्तश्रुत्या सत्वावगमाद् द्वयोरपि प्रामाणिकत्वादिति यावत् । **अविरोधं** जैमिन्यौडुलोमिमतयोर्मर्त्यामर्त्यदेहाभावभावाभ्युपगमेना**विरोधं बादरायणो** मन्यत इत्यर्थः ।

'मर्त्यदेहं परित्यज्य चितिमात्रात्मदेहिनः ।
चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ॥'[३]

---

१. 'सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षते' इति (ब्र.सू.भा.उ.उद्दालकश्रुतिः, पृ. ९३,९४)

२. 'स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रीभवति अथ तेनैव रूपेणाभिपश्यत्यभिश्रृणोत्यभिमनुतेऽभिविजानाति तामाहुर्मुक्तिः' इति (ब्र.सू.भा.उ. सौपर्णश्रुतिः, पृ. ९४)

३. 'मर्त्यदेहं परित्यज्य चितिमात्रात्मदेहिनः । चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ॥ तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् । कुर्वन्ति भुञ्जते भोगान् तदन्तर्बहिरेव वा ॥ यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः' इति (ब्र.सू.भा.उ. नारायणाध्यात्मवचनम्, पृ. ९५)

इत्यादिस्मृत्या विरोधपरिहारो ज्ञातव्यः । तदनुग्राह्यानुग्राहकभावादिना ब्राह्मदेहसहितेन चिन्मात्रकस्वदेहेन भोग इति विरोधपरिहारप्रकारः ॥ ५ ॥

**॥ इति ब्राह्माधिकरणम् ॥ ५ ॥**

(त.दी.) औडुलोमिमते प्राङ्मानानुक्तेरिहोपन्यासादित्युक्तिः। (पृ.सं.४२८)

## ॥ ६ ॥ अथ सङ्कल्पाधिकरणम् ॥

### (मुक्तभोगस्य केवलसङ्कल्पसाध्यत्वसमर्थनम्)

अत्र मुक्तभोगस्य सङ्कल्पमात्रसाध्यत्वं समर्थ्यते ।

**ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ (४-४-८)**

(सू.) मुक्तानां **सङ्कल्पादेव** भोगसिद्धिः । कुतः ? 'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति'[१] इति **तस्य श्रवणात्** इत्यर्थः । चशब्दो विपक्ष-निवृत्त्यर्थतया व्याख्यास्यत इति टीकोक्तिः ।

### (चशब्दस्य प्रतिषेधपरत्वं किमर्थमिति शङ्का तत्परिहारश्च)

ननु सङ्कल्पादेवेत्यवधारणादेव न तेषां भोगादिषु प्रयत्नापेक्षतेति पूर्वपक्षप्रतिषेधस्य जातत्वाच्चशब्दस्य प्रतिषेधपरत्वं किमर्थमुच्यत इति चेन्न । एवशब्देन तेषां भोगादिषु प्रयत्नापेक्षेति पूर्वपक्षं प्रतिषिध्य चशब्देन पूर्वपक्षफलभूतं यत् संसारसमानधर्मत्वेन मुक्तेरपुरुषार्थत्वं तद् व्यावर्त्यत इति नान्यतरवैयर्थ्यमिति **गुरुपादकृतटीकार्थे** स्फुटम् । तत्त्वप्रदीपोक्त-रीत्याऽनिष्टभोगोपरमरूपानुक्तसमुच्चयार्थो वा चशब्दः ॥ ६ ॥

**॥ इति सङ्कल्पाधिकरणम् ॥ ६॥**

---

१. 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति (छा. ८-२-१)

## ॥ ७ ॥ अथ अनन्याधिपत्यधिकरणम् ॥

(स्वावरनियम्यत्वराहित्येन मुक्तानां भोगसाधनम्)

मुक्तानामत्र स्वाधमनियम्यत्वराहित्येन भोगः साध्यते ।

**ॐ अत एव चानन्याधिपतिः ॐ (४-४-९)**

(सू.) **अत एव**= सत्यसङ्कल्पत्वादेव क्लृप्तस्वोत्तमेभ्योऽ**न्याधिपति-रहित** इत्यर्थः । चशब्दो विपक्षाद् व्यावृत्त्यर्थ इति टीकोक्तिः पूर्ववदेव व्याख्येया । 'परमोऽधिपतिस्तेषां विष्णुरेव न संशयः'[१] इत्यादि-प्रमाणसमुच्चयार्थो वा चशब्दः ॥ ७ ॥

॥ इत्यनन्याधिपत्यधिकरणम् ॥ ७ ॥

(त.दी.) चस्तु राजगृहं प्रविष्टस्य प्रतिहारपालादिनियतत्ववत् मुक्तस्यापीशगृहं प्रविष्टस्यावरनियम्यता स्यादिति शङ्कानिवृत्त्यर्था टीका । अनधिपतिरित्युक्तौ स्वोत्तमानां पतित्वं वारितं स्यादित्यतोऽनन्याधिपतिरित्युक्तम् । (पृ.सं. ४३०,४३१)

## ॥ ८ ॥ अथ अभावाधिकरणम् ॥

(मुक्तस्य भोगानुपपत्तिनिरासः)

अत्रेश्वरं प्राप्तानां भोगानुपपत्तिर्निवार्यते ।

**ॐ अभावं बादरिराह ह्येवम् ॐ (४-४-१०)**

(सू.) मुक्तानां चिन्मात्रदेहादन्य**देहाभावं बादरि**र्मन्यते । कुतः ?

---

१. 'परमोऽधिपतिस्तेषां विष्णुरेव न संशयः । ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः ॥ ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् । आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् । एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशयः ॥' इति (ब्र.सू.भा.उ. वाराहवचनम्, पृ. ९८)

'अशरीरो वाव तदा भवति'[१] इति श्रुतिः **एवमाह हि** यस्मादित्यर्थः ।

मुक्तानां देहसद्भावमप्याह -

**ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ (४-४-११)**

(सू.) मुक्तानां भोगार्थं कदाचित् चिन्मात्रान्यस्य प्राकृतदेहस्य[२] सद्भावात् (**भावं** ) सत्तां **जैमिनिर्मन्यते** ।

कुतः ? 'चिता वा'[३] इति श्रुतौ **विकल्पाम्नानात्** विकल्पेनोभयशरीरेण भोगाभिधानादित्यर्थः ।

नन्वेतन्मतद्वयस्य परस्परविरुद्धत्वात् स्वमतं किमित्यत आह -

**ॐ द्वादशाहवद् उभयविधं बादरायणोऽतः ॐ (४-४-१२)**

(सू.) **उभयविधं** मुक्तानां देहभावाभावाख्यं पूर्वोक्तमुभयविधं **बादरायणः** स्वमतं मन्यते । कुतः? **अतः** मतद्वयोक्तस्य [४]प्रामाणिकत्वात् । विरुद्धमुभयं कथं स्वमतमित्यत उक्तम्- **द्वादशाहवदिति** ।। यथा खलु द्वादशाहयागस्य क्रतुत्वं सत्रत्वं चाविरुद्धं, एकयजमानत्वे क्रतुत्वस्यानेकयजमानत्वे सत्रत्वस्य च सम्भवात् । तथा मुक्तस्य सशरीरत्वमशरीरत्वं च प्रामाणिकत्वादविरुद्धमित्यर्थः ।

अत्र क्रतुरित्यहीन उच्यते । अहीनत्वं चाहर्गणसाध्यक्रतुत्वं यथा

---

१. 'अशरीरो वाव तदा भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतो याभ्यां ह्येष उन्मथ्यते' इति (ब्र.सू.भा.उ.कौण्ठरव्यश्रुतिः, पृ. ९९)

२. 'कर्माजन्यस्य शुद्धसत्त्वात्मकप्राकृतदेहस्य' इत्यर्थः ।

३. 'स वा एष एवंवित्परमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथाऽनन्दी ह्येवैष भवति नानानन्दं कश्चिदुपस्पृशति' इति (ब्र.सू.भा.उ.औद्दालकश्रुतिः, पृ. १००)

४. 'प्रमाणत्वात्' इति ख.पाठः ।

'द्वादशाहम् ऋद्धिकामा उपेयुः' इति उपेयचोदने 'य एवं विद्वांसः सत्रमुपयन्ति' इति चोपेयचोदने द्वादशाहस्य सत्रत्वं बहुकर्तृकत्वाद् गम्यते। एवं तस्यैव द्वादशाहेन 'प्रजाकामं याजयेत्' इति यजतिचोदनेन एककर्तृकत्वात् 'द्विरात्रेण यजति' इत्यादिनेवाहीनत्वं गम्यत इति तदुभयं द्वादशाहस्याविरुद्धमिति **अभिनवचन्द्रिकात** उभयात्मकत्वं बोध्यम्। अत एवाप्पय्यदीक्षितप्रभृतीनां कण्ठकोलाहला उभयात्मकत्वपराकरणार्थाः प्रत्युक्ताः।

(त.दी.) अत्र भाष्ये क्रतुशब्दोऽहर्गणाख्याहीनपर इति गुरुपादाः। तदुक्तं तत्त्वप्रदीपे - क्रतुरित्यहीनो विवक्ष्यते। अहीनैकाहेष्वस्य श्रेष्ठत्वादत्र क्रतुशब्दः प्रयुक्तः। तथा च श्रुतिः- 'श्रेष्ठयज्ञो वा एष यत् द्वादशाहः' इत्यादि। तेन कस्यचिन्मीमांसाविरोधापलापानवकाशः। (पृ.सं.४३४)

ननु भवतु देहभावाभावयोरविरोधः, तथाऽपि देहाभावे कथं भोग इत्यत आह -

**ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ (४-४-१३)**

(सू.) **तन्वभावे** मुक्तानां बाह्यदेहाभावेऽपि **उपपत्तेः**। भोगस्येति शेषः। कथम् ? **सन्ध्यवत्**। स्वप्नावस्थायां बाह्यदेहाभिमानाभावेऽपि यथा भोगस्तद्वदित्यर्थः। अभिमानस्याभावात् साम्यमिति भावः।

[1]देहसद्भावे तु सुतरां भोगोपपत्तिरित्याह -

**ॐ भावे जाग्रद्वत् ॐ (४-४-१४)**

(सू.) यथा **जाग्रदवस्थायां देहसद्भावे भोगसम्भवस्तथा** मुक्तावपि देहसद्भावे भोगोपपत्तिरित्यर्थः।

देहसद्भावे दुःखभोगोऽप्यापद्यत इत्यत आह -

---

१. 'देहसद्भावेऽपि सुतरां' इति ख.मातृकागतः पाठः।

ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ　(४-४-१५)

(सू.) **आवेशः** शुद्धसत्वात्मकज्योतिर्मयबाह्यदेहप्रवेशः **प्रदीपवत्** प्रदीपस्य दीपिकावेशः, यथा प्रदीपो दीपिकाविष्टः सन् तत्स्थं तैलाद्येव भुङ्क्ते न तत्स्थं कार्ष्ण्यादि तथा मुक्तः जडदेहं प्रविष्टोऽपि न दुःखं भुङ्क्ते किन्तु सुखमेव। कुतः ? 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' (बृ.उ. ६-३-२२) इति श्रुतिः **तथा** मुक्ते दुःखाभावं **दर्शयति, हि** यस्मादित्यर्थः ।

'तीर्णो हि' (बृ.उ. ६-३-२२) इति वाक्यं मुक्तपरं कुतः ? 'स्वर्गे लोके न भयं किञ्च नास्ति' (क.उ. १-१२) इति वाक्यात् स्वर्गस्थपरं किं न स्यादित्यत आह -

ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ　(४-४-१६)

(सू.) 'तीर्णो हि' (बृ.उ. ६-३-२२) इति वाक्यं **स्वाप्ययो**[1] मुक्तिः **सम्पत्तिः** सुप्तिः[2] तदुभया**पेक्षं** तदुभयपरं, न स्वर्गविषयम्। कुतः ? **हि** यस्मात् 'अत्र पिताऽपिता वा भवत्यनन्वागतं पुण्येन' (बृ.उ. ६.३.२२) इत्यादिनाऽपितृत्वासङ्गत्वादिलिङ्गश्रवणात् । अस्य वाक्यस्योभयविषयकत्वम् **आविष्कृतं** स्फुटं प्रतीयमानमित्यर्थः ।

**('उभयापेक्षम्' इत्यनुक्त्वा 'अन्यतरापेक्षम्' इति वचने कारणम्)**

[3]ननु सूत्रेऽन्यतरशब्दो अनेकविवक्षया तद्वचनमित्युक्तत्वात् सुप्ति-

---

१. तन्त्रदीपिकायां च स्वाप्ययो सुप्तिः सम्पत्तिर्मुक्तिरिति व्याख्यातम्।

२. तयोर्मध्ये अन्यतरापेक्षम् उभयापेक्षम् उभयपरमित्युक्ते समीचीनं स्यादिति भाति। अत्र अन्यतरशब्द उभयपरः ।

३. ननु सूत्रेऽन्यतरशब्देन ('तीर्णो हि' इति वाक्यस्य) एकार्थत्वस्यैवोक्तत्वात् (अन्यतरपदं) सुप्तिमोक्षोभयविषयकमिति न युक्तम् इति पाठोऽत्र सम्भाव्यते।

मोक्षोभयविषयकमिति न युक्तम्। अन्यथा स्वाप्ययसम्पत्त्योरित्येतावता पूर्णे [१]तदन्यतरपदवैयर्थ्यापत्तेरिति चेन्न । इदमेवाऽऽशङ्क्य बृहद्भाष्ये षष्ठाध्यायेऽभिहितम्- 'उभयापेक्षमित्युक्ते [२]मोक्षे सुप्तिरिति मन्दाशङ्का स्याद् अतो मोक्षे सुप्तिरेव नास्तीति ज्ञापयितुमन्यतरापेक्षम्' (बृ.भा. अ.६, पृ.३३०) इत्युक्तमिति । तस्येत्थं योजना । स्वाप्ययसम्पत्त्योरित्युक्ते[३] इत्यर्थः । यदि स्वाप्ययसम्पत्त्यपेक्षमित्युक्ते तदा मोक्षे या सम्पत्तिः सुप्तिः तदपेक्षं तद्विषयमिति प्रतीतिः स्यात्। [४]तथा च मोक्षेऽपि सुप्तिरस्तीत्याशङ्का स्यात्। अज्ञाननिवृत्तिरूपे मोक्षेऽज्ञानकार्यसुषुप्तिशङ्का प्रेक्षावतां यद्यपि नोदेति[५] । किन्तु मन्दस्य स्याद् अतोऽन्यतरपदमुभयापेक्षमित्यर्थः[६] । यद्वा,[७] अन्यतरपदस्य स्वाप्ययसम्पत्त्यन्योन्यत्वे[८] तात्पर्यम् । स्वाप्ययसम्पत्त्यपेक्षमित्युक्ते स्वाप्यये मोक्षे या सम्पत्तिः तदपेक्षमिति प्रतीतिः स्यात् । अतोऽन्यतरेत्युक्तम् । उभयापेक्षमित्यर्थः ।

### (प्रकारान्तरेण अन्यतरपदस्य सार्थक्यम्)

ननु सम्बन्धे षष्ठीमङ्गीकृत्य स्वाप्ययसम्पत्त्योरित्येव कुतो न कृतम्? तर्ह्येकोऽर्थो मुख्योऽपरोऽमुख्य इति प्रतीतिः स्यात् ।

---

१. 'अन्यतरपदवैयर्थ्यापत्तेः' इति पाठेन भाव्यमिति भाति ।

२. 'मोक्षस्थसुप्तिः' इति क.पाठः ।

३. 'स्वाप्ययसम्पत्यपेक्षमित्युक्ते इत्यर्थः' इति क.पाठः ।

४.'तथाऽपि' इति क.पाठः ।

५. 'नोदयति' इति क.पाठः ।

६. 'अतोऽन्यतरपदमुभयपरमित्यर्थः' इत्युक्ते समीचीनं स्यात् ।

७. 'अत्र पूर्वस्मात् पक्षात् को भेदः ? अत्र कोऽर्थः इति न ज्ञायते ।

८. 'स्वाप्यसम्पत्ति अन्यान्यत्वे' इति क.पाठः ।

तन्निरासायान्यतरेति । अपेक्षापदेन रुचिरुच्यते । तथा चोभयोरपि मुख्यार्थत्वेन तयोर्मध्ये योऽर्थो यस्य यदा रोचते स अर्थस्तेन तदा व्याख्यायत इन्यन्यतरपदेन सूच्यते । अत एव भाष्ये 'सुप्तौ मोक्षे वा' इति वाशब्दः प्रयुक्त इत्यादिद्रष्टव्यं **कर्मनिर्णयानुसारेण** ।[1]

ननु स्वाप्ययसम्पत्त्योरन्यतरापेक्षमित्युक्त्या मोक्षे सुप्तिरस्तीति शङ्कानिवृत्तिरेव भवति । द्वन्द्वसमासप्रदर्शनेन तत्पुरुषभ्रान्तिनिवारणात्। नतु मोक्षे सुप्तिर्नास्तीति। ज्ञापकानुक्तेः। अत एवोक्तं कर्मनिर्णये- 'मोक्षे सुप्तिरस्तीति शङ्कानिवृत्त्यर्थं वाऽन्यतरपदमिति हृदयम्' इति । अतः ज्ञापयितुमिति कथमुक्तमिति चेत्, सत्यम्। मोक्षे सुप्तिर्नास्तीति शङ्कानिवारणेनैव[2] तत्र सुप्तिर्नास्तीति ज्ञापयितुमिति भावः ।

ननु सम्बन्धे षष्ठीमङ्गीकृत्य स्वाप्ययसम्पत्त्योरपेक्षमित्येव कुतो न कृतम् । तावताऽप्युक्तशङ्कापरिहारादतोऽन्यतरप्रयोग[3] इति चेन्न । अनेकार्थस्य 'तीर्णो हि' (बृ. ६-३-२२) इति वाक्यस्यैकार्थतया

---

१. तत्र सूत्रं न प्रकृतानुगुणम् । अन्यरशब्देनैकार्थत्वस्योक्तत्वात् । अन्यथा स्वाप्ययसम्पत्त्यपेक्षमित्येतावता पूर्णत्वेनान्यतरपदवैयर्थ्यापत्तेरित्यत आह- **मोक्षेऽपीति** ॥ यदि स्वाप्ययसम्पत्त्यपेक्षमित्युच्यते तदा स्वाप्यये मोक्षे या सम्पत्तिः सुप्तिस्तदपेक्षं तद्विषयमिति प्रतीतिः स्यात् । तन्निवृत्त्यर्थं स्वाप्ययसम्पत्त्योर्मध्येऽन्यतरापेक्षमित्युक्तम् । न त्वेक एवार्थ इति प्रतिपादनार्थम् । तथा सति वस्तुनि विकल्पायोगात् स्वाप्ययापेक्षमिति वा सम्पत्त्यपेक्षमिति वा ब्रूयादित्येवशब्दार्थः । ननु सम्बन्धे षष्ठीमङ्गीकृत्य स्वाप्ययसम्पत्त्योरित्येव कुतो न कृतम् । उच्यते । अनेकार्थस्यैकार्थव्याख्यानेऽरुचिरेव व्याख्यातुः प्रमाणम् । न तु मुख्यामुख्यताविशेषोऽस्तीति सूचयितुमन्यतारापेक्षमित्युक्तम् । (कर्म.नि.टी, पृ. ९६)

२. 'मोक्षे सुप्तिसद्भावशङ्कानिवारणेनैव' इत्येव सुवचम् ।

३. 'कुतोऽन्यतरप्रयोगः' इति पाठेन भाव्यमिति भाति ।

व्याख्यानेऽरुचिरेव व्याख्यातुः प्रमाणम्। ननु[१] मुख्यामुख्यज्ञाने विशेषो नास्तीति सूचनायान्यतरशब्दसार्थक्यं स्यात्। अत एव सूत्रभाष्ये सूत्रनिर्देशानुसारेण 'मोक्षे सुप्तौ वा' इति मुख्यामुख्यभावसूचनार्थं[२] 'सुप्तौ मोक्षे वा' इति व्यत्यासेनोक्तिर्वाशब्दश्चेति सङ्क्षेपः ॥ ८ ॥

॥ इत्यभावाधिकरणम् ॥ ८ ॥

## ॥ ९ ॥ अथ जगद्व्यापाराधिकरणम् ॥

### (मुक्तस्य भोगेयत्तासमर्थनम्)

अत्र मुक्तस्य भोगेयत्ता साध्यते।

**ॐ जगद्व्यापारवर्जम् ॐ (४-४-१७)**

(सू.) सृष्ट्यादिव्यापारवर्जं कर्म[३] मुक्त आप्नोति। नतु, 'सर्वान् कामान् आप्त्वाऽमृतः'[४] इत्युक्तसर्वान् कामानपीत्यर्थः।

कुतो जीवपरत्वेऽपि श्रुत्यर्थसङ्कोच इत्यत आह -

**ॐ प्रकरणादसन्निहितत्वाच्च ॐ (४-४-१८)**

(सू.) शरीरभेदात् शिरोमध्यविदारणात् 'भिदिर् विदारणे' इति धातोः 'ऊर्ध्वमुत्क्रम्य' इति जीवप्रकरणात् श्रुत्युक्तो जीवः। जीवानां जगज्जननादिसामर्थ्येन **असन्निहितत्वात्** तद्रहितत्वादिति यावत्। 'सर्वान् कामान्' (ऐ.आ. २-५-४) इति श्रुत्यर्थसङ्कोचश्चेत्यर्थः। एतेन

---

१. 'नतु मुख्यामुख्यताविशेषोऽस्तीति सूचनेनाप्यन्यतरशब्दः सार्थकः' इति पाठः स्यदिति भाति।

२. 'मुख्यामुख्यत्वाभावसूचनार्थम्' इति पाठेन भाव्यमिति भाति।

३. 'कामम्' इति पाठेन भाव्यमिति भाति।

४. 'सर्वान् कामान् आप्त्वाऽमृतः समभवत्' इति (ऐ.आ.२-५-४, पृ. १०८)

असन्निहितत्वादित्येतावतैव पूर्तेः **प्रकरणादिति** समुच्चयायोग इति परास्तम् ।

मुक्तस्य जगदैश्वर्याभावमाक्षिप्य समादधाति -

**ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॐ**

**(४-४-१९)**

(सू.) 'ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति' (तै.उ.१.५, पृ. १११) इति **प्रत्यक्षं** स्पष्टं मुक्तस्य सर्वदेवपूज्यत्वो**पदेशात्**, मुक्तानां जगदैश्वर्य**मस्तीति चेन्न । आधिकारिकमण्डलस्थोक्तेः** अधिकारेषु मुक्ता आधिकारिकाः, स्वस्वपदं प्राप्ताः देवाः तेषां मण्डले नियामकतया स्थितस्य मुक्तविरिञ्चस्यैव तत्रोक्तेः । न सर्वमुक्तानां जगद्विषयैश्वर्यमित्यर्थः ।

**(देवमण्डलेत्यनुक्त्वा आधिकारिकमण्डलेति कथने कारणवर्णनम्)**

देवमण्डलेति वाच्येऽन्यदेवतानामपि मुक्तस्वावरनियमनाधिकारे निमित्तत्वमस्तीति सूचनायाऽधिकारिकपदम् ।

ननु ब्रह्मादिमुक्तानाममुक्तजगद्व्यापारोऽपि किं न स्यादित्यत आह-

**ॐ विकारावर्ति च तथा हि दर्शयति ॐ (४-४-२०)**

(सू.) चशब्देन प्रत्यक्षोपदेशान्नेति नकारोऽनुषज्यते । **विकारं** संसारमावर्तयतीति **विकारावर्ति** । (तद्विषयम्) व्यापरणं (व्यापारः) मुक्तानां **न** विद्यते **हि** यस्मात् 'इममावर्तं नाऽवर्तन्ते'[1] इति श्रुतिः **तथा दर्शयतीत्यर्थः** । मानवाः यत्राऽवर्तन्ते स आवर्तः संसारः तं नाऽवर्तन्ते नाऽवर्तयन्ति न प्रवर्तयन्तीति तदर्थः ।

---

१. 'इमं मानवमावर्तं नाऽवर्तन्ते' इति (छा.उ. ४.१५. ६)

**(सूत्रगतचकारेण नकारानुकर्षणे प्रयोजनोक्तिः)**

ननु किं चकारं प्रयुज्य तेन नकारानुकर्षणेन ? नकार एव किं न प्रयुज्यते ? न च सूत्रलाघवं भवति । चकारप्रयोगे वा नकारप्रयोगे वा साम्यात् । प्रत्युत चकारप्रयोगे प्रतिपत्तिगौरवमिति चेन्न । अनुवृत्त्यैव लभ्यमाननकारस्य प्रयोगायोगात् । नच चकारवैयर्थ्यम् । चकाराप्रयोगे (उत्तरसूत्रेषु) नकारानुवृत्तिर्विज्ञायेत सा मा विज्ञायीति चकारप्रयोगः। 'चानुकृष्टं न सर्वत्र'[१] इति नियमात् । चशब्दप्रयोगे उत्तरसूत्रेष्वनुवृत्त्यभावो विज्ञायते । यद्यप्युत्तरत्र नञोऽन्वयानुपपत्त्याऽप्यनुवृत्त्यभावो विज्ञातुं शक्यते । तथाऽप्यन्तरङ्गज्ञापकाभाव एव बहिरङ्गज्ञापकमन्वेषणीयम् । इह तु शिष्यहितैषिणा सूत्रकृताऽन्तरङ्गज्ञापकमुक्तम् ॥ ९ ॥

**॥ इति जगद्व्यापाराधिकरणम् ॥ ९ ॥**

## ॥ १० ॥ अथ स्थित्यधिकरणम् ॥*

**ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ ( ४-४- २१)**

(सू.) 'न हीयते न वर्धते'[२] इति श्रुतिः **स्थितिं** एकप्रकारेणावस्थान-माह । विद्वत्**प्रत्यक्षम्**, मुक्तो न वृद्धिमान् तत्कारणशून्यत्वात् इति **अनुमानं च एवं** एकप्रकारेण स्थितिं **दर्शयत** इत्यर्थः । ननु

---

१. अभिनवचन्द्रिकोदाहृतं वचनम् ।

*. 'मुक्तानां भोगादिना न वृद्धिह्रासौ' इत्यस्मिन्नधिकरणे निरूप्यते ।

२. 'स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सर्वदा भवति दर्शन्नेव ब्रह्म दर्शन्नेवात्मानं तस्यैवं दर्शयतो नापत्तिर्न विपत्तिः' इति (ब्र.सू.भा.उ. जाबालश्रुतिः, पृ. ११९)

परप्रत्यक्षस्याप्रत्यक्षत्वात् कथं तेनास्माकं सिद्धिरिति चेन्न । 'न ह्रासो न च वृद्धिर्वा'[१] इत्यादिवाक्येन तदवगमात् ।

मुक्तानां कदाचिद् भोगवृद्धेः कदाचित् तदभावस्य प्रमितत्वादुभयोरानन्दवृद्धिह्रासकारणत्वं स्यादित्यत आह -

**ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ (४-४-२२)**

(सू.) **भोगमात्रसाम्ये** भोगानां वृद्धौ ह्रासेऽपि मुक्तानामानन्दसाम्ये **लिङ्गाच्च** लिङ्गसद्भावाच्चेत्यर्थः । 'एतमानन्दमयमात्मानमनुविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं चरति यथाकामं पिबति यथाकामं रमते यथाकाममुपरमते' (तै.उ. २-८) इति श्रुतौ वृद्ध्याद्यभावमुक्त्वा भोगभावाभावयोरभिधानाद् भोगविशेषो नाऽनन्दवृद्ध्यादिहेतुरिति लिङ्गं गम्यत इति हृदयम् ।

ननु मा भूद् ह्रासः । वृद्धिस्तु भविष्यति । तस्य सत्यकामत्वेन कामिताशेषप्राप्त्या वृद्धिसम्भवात् । न च नासौ कामयते[२] इति युक्तम् । आनन्दवृद्धेरिष्टत्वेन कामनानङ्गीकारायोगादिति चेन्न । योग्यस्य प्राप्तत्वाद् अयोग्यकामनायाश्च 'न चायोग्यं विमुक्तोऽपि'[३] इति निषिद्धत्वेन कामनाङ्गीकारस्यायुक्तत्वात् । 'अवृद्धिह्रासरूपत्वं'[४] इति

---

१. 'न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित् । विद्वत्प्रत्यक्षसिद्धत्वात् कारणाभावतोऽनुमा ।। हरेरुपासना चात्र सदैव सुखरूपिणी । नतु साधनभूता सा सिद्धिरेवात्र सा यतः' इति (ब्र.सू.भा.उ. ब्रह्मवैवर्तवचनम्, पृ. १२०)

२. 'कामयतीति' इति क.पाठः ।

३. 'न चायोग्यं विमुक्तोऽपि प्राप्नुयान्न च कामयेत्' इति वाराहवचनम् ।

४. 'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् । कादाचित्कविशेषस्तु नैव तेषां निषिध्यते ।।' इति (ब्र.सू.भा.उ.कौर्मवचनम्, पृ. १२२)

वचनात् । कादाचित्को विशेषो विरिञ्चेतरेषामभ्युपगन्तव्यः । यथोक्त-मनुव्याख्याने- 'मुक्तानां तु तदन्येषां समुद्रतरलोपमा' (अनु.व्या.) इति द्रष्टव्यम् ।। १० ।।

॥ इति स्थित्यधिकरणम् ॥ १० ॥

## ॥ ११ ॥ अथ अनावृत्त्यधिकरणम् ॥

(एतदधिकरणप्रतिपाद्यविषयः)

'भोगमात्रसाम्यलिङ्गाच्च' (ब्र.सू.४.४.२२) इत्यन्तेन सर्वानुपपत्ति-परिहारेण समर्थितान् भोगान् भुञ्जानस्य मुक्तस्यापुनरावृत्तिरिह समर्थ्यते ।

**ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॐ (४-४-२३)**

(सू.) मुक्ताना**मनावृत्तिः** । कुतः ? 'न च पुनरावर्तते नच पुनरावर्तते' (छा.८-१५-१) इति **शब्दा**दित्यर्थः । किञ्च सत्यकामस्य मुक्तस्य न पुनरावृत्तिः । कामनाभावात् । अनन्तकालस्थत्वाच्च न परावृत्तिः । नचानन्तस्यापि कालस्यौत्पत्तिकक्षयसामर्थ्यात् समाप्त्यनन्तरं परावृत्तिरस्तीति चेन्न । अनन्तकालसमाप्तिमभिधायानन्तरमिति पुनस्तद्भावोक्तेर्व्याहतत्वादित्यास्तां विस्तरः ।

अध्यायचतुष्टयात्मकसमस्तब्रह्ममीमांसाशास्त्रावधारणार्थं सूत्रस्यैव द्विरुक्तिरित्यशेषमतिमङ्गलम् ।। ११ ।।

**वेदव्यासं पूर्णगुणं निर्दोषं साधुसद्गतिम् ।**
**प्रणमामि तथा पूर्णप्रज्ञं सज्ज्ञानवित्तये[1] ॥**

---

१.'सद्धात्रवित्तये' इति मातृकापाठः ।

वेदेशमुनिसत्पादसेवासम्प्राप्तवैभवान् ।
याद्वार्यान् वरसुधाटीकाकारानहं भजे ॥

यस्तूत्पाद्योपनेता मां श्रीनिवासार्यसद्गुरुः।
अन्नदं ज्ञानदं स्नेहात् तं वन्दे भीतिरक्षकम् ॥

तेषामेव प्रसादेन सूत्रार्थोऽयमनूदितः ।
तत्त्वप्रकाशिकासंस्थो धीशुद्ध्यै मम नान्यथा ॥

तेन प्रीतोऽसि चेन्नाथ जयतीर्थार्यसन्नुत ।
कुरु त्वं मध्वशास्त्रस्य प्रवक्तरावनुजौ मम[1] ॥

**॥ इति श्रीमच्छ्रीनिवासाचार्यपूज्यपादाराधकेन वेङ्कटपतिना विरचिते तत्त्वप्रकाशिकासंस्थसूत्रार्थसङ्ग्रहे चतुर्थाध्यायस्य चतुर्थपादः समाप्तः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

---

१. 'प्रवक्तारौ तुजौ मम' इति पाठेन भाव्यमिति भाति । 'तुक् तोकस्तनयश्च नन्दन इति प्राज्ञैरपत्यं स्मृतम् ।' इति हलायुधकोशरीत्या तुक्शब्दः पुत्रवाची ।

# परिशिष्टम्- १

## ॥ ब्रह्मसूत्रानुक्रमणिका ॥


| सूत्राणि | अ. | पा. | सू. |
|---|---|---|---|
| अ | | | |
| अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके | २ | ३ | ४३ |
| अकरणत्वाच्च न दोषस्तथा हि दर्शयति | २ | ४ | १२ |
| अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् | ३ | ३ | ३४ |
| अक्षरमम्बरान्तधृतेः | १ | ३ | १० |
| अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् | ४ | १ | १६ |
| अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् | ३ | १ | ४ |
| अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् | ३ | ३ | ५७ |
| अङ्गित्वानुपपत्तेः | २ | २ | ८ |
| अङ्गेषु यथाऽऽश्रयभावः | ३ | ३ | ६३ |
| अचलत्वं चापेक्ष्य | ४ | १ | ९ |
| अणवश्च | २ | ४ | ८ |
| अणुश्च | २ | ४ | १४ |
| अत एव च नित्यत्वम् | १ | ३ | २९ |
| अत एव च सर्वाण्यनु | ४ | २ | २ |
| अत एव चाग्नीन्धनाद्यनपेक्षा | ३ | ४ | २५ |
| अत एव चानन्याधिपतिः | ४ | ४ | ९ |
| अत एव चोपमा सूर्यकादिवत् | ३ | २ | १८ |
| अत एव न देवता भूतं च | १ | २ | २७ |
| अत एव प्राणः | १ | २ | २३ |
| अतः प्रबोधोऽस्मात् | ३ | २ | ८ |
| अतश्चायनेऽपि हि दक्षिणे | ४ | २ | २१ |

| सूत्राणि | अ.पा.सू. |
|---|---|
| अतस्त्वितरज्ज्यायो लिङ्गाच्च | ३ ४ ३९ |
| अतिदेशाच्च | ३ ३ ४७ |
| अतोऽनन्तेन तथा हि लिङ्गं | ३ २ २७ |
| अतोऽन्यदपीत्येकेषामुभयोः | ४ १ १७ |
| अत्ता चराचरग्रहणात् | १ २ ९ |
| अथातो ब्रह्मजिज्ञासा | १ १ १ |
| अदृश्यत्वादिगुणको धर्मोक्तेः | १ २ २१ |
| अदृष्टानियमात् | २ ३ ५१ |
| अधिकं तु भेदनिर्देशात् | २ १ २३ |
| अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् | ३ ४ ८ |
| अधिष्ठानानुपपत्तेश्च | २ २ ३९ |
| अध्ययनमात्रवतः | ३ ४ १२ |
| अनभिभवं च दर्शयति | ३ ४ ३५ |
| अनवस्थितेरसम्भवाच्च नेतरः | १ २ १७ |
| अनारब्धकार्ये एव तु पूर्वे तदवधेः | ४ १ १५ |
| अनाविष्कुर्वन्नन्वयात् | ३ ४ ४९ |
| अनावृत्तिः शब्दादनावृत्तिः शब्दात् | ४ ४ २३ |
| अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्यां | ३ ३ ३२ |
| अनुकृतेस्तस्य च | १ ३ २२ |
| अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् | २ ३ ४८ |
| अनुपपत्तेस्तु न शारीरः | १ २ ३ |
| अनुबन्धादिभ्यः | ३ ३ ५१ |
| अनुष्ठेयं बादरायणः साम्यश्रुतेः | ३ ४ १९ |
| अनुस्मृतेर्बादरिः | १ २ ३० |
| अनुस्मृतेश्च | २ २ २५ |

| सूत्राणि | अ.पा.सू. |
|---|---|
| अनेन सर्वगतत्वमायामयशब्दादिभ्यः | ३ २ ३८ |
| अन्तर उपपत्तेः | १ २ १३ |
| अन्तरा चापितु तद्दृष्टेः | ३ ४ ३६ |
| अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् | २ ३ १५ |
| अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् | १ २ १८ |
| अन्तवत्त्वमसर्वज्ञता वा | २ २ ४१ |
| अन्तस्तद्धर्मोपदेशात् | १ १ २० |
| अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् | २ २ ३६ |
| अन्यत्राभावाच्च न तृणादिवत् | २ २ ५ |
| अन्यथात्वं च शब्दादिति चेन्नाविशेषात् | ३ ३ ७ |
| अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् | २ २ ९ |
| अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् | ३ ३ ३७ |
| अन्यभावव्यावृत्तेश्च | १ ३ १२ |
| अन्याधिष्ठिते पूर्ववदभिलापात् | ३ १ २६ |
| अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके | १ ४ १९ |
| अन्यार्थश्च परामर्शः | १ ३ २० |
| अन्वयादिति चेत्स्यादवधारणात् | ३ ३ १८ |
| अपरिग्रहाच्चात्यन्तमनपेक्षा | २ २ १७ |
| अपि सप्त | ३ १ १६ |
| अपि स्मर्यते | १ ३ २३ |
| अपि स्मर्यते | २ ३ ४५ |
| अपि स्मर्यते | ३ ४ ३० |
| अपि स्मर्यते | ३ ४ ३७ |
| अपि चैवमेके | ३ २ १३ |
| अपि संराधने प्रत्यक्षानुमानाभ्यां | ३ २ २४ |

| सूत्राणि | अ.पा.सू. |
|---|---|
| अपीतौ तद्वत्प्रसङ्गादसमञ्जसं | २ १ ९ |
| अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च | ४ ३ १५ |
| अबाधाच्च | ३ ४ २९ |
| अम्बुवदग्रहणात्तु न तथात्वं | ३ २ १९ |
| अभावं बादरिराह ह्येवं | ४ ४ १० |
| अभिध्योपदेशाच्च | १ ४ २५ |
| अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां | २ २ ६ |
| अरूपवदेव हि तत्प्रधानत्वात् | ३ २ १४ |
| अर्चिरादिना तत्प्रथितेः | ४ ३ १ |
| अर्भकौकस्त्वात्तद्व्यपेदशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च | १ २ ७ |
| अल्पश्रुतेरिति चेत्तदुक्तं | १ ३ २१ |
| अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि | २ ३ २५ |
| अवस्थितेरिति काशकृत्स्नः | १ ४ २२ |
| अविभागेन दृष्टत्वात् | ४ ४ ४ |
| अविभागो वचनात् | ४ २ १ |
| अविरोधश्चन्दनवत् | २ ३ २४ |
| अशुद्धमिति चेन्न शब्दात् | ३ १ २७ |
| अश्मादिवच्च तदनुपपत्तिः | २ १ २४ |
| अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः | ३ १ ६ |
| असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा | २ २ २१ |
| असदिति चेन्न प्रतिषेधमात्रत्वात् | २ १ ८ |
| असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् | २ १ १८ |
| असन्ततेश्चाव्यतिकरः | २ ३ ४९ |
| असम्भवस्तु सतोऽनुपपत्तेः | २ ३ ९ |
| असार्वत्रिकी | ३ ४ १० |

| सूत्राणि | अ.पा.सू. |
|---|---|
| अस्ति तु | २ ३ २ |
| अस्मिन्नस्य च तद्योगं शास्ति | १ १ १९ |
| अस्यैव चोपपत्तेरूष्मा | ४ २ १९ |
| **आ** | |
| आकाशस्तल्लिङ्गात् | १ १ २२ |
| आकाशे चाविशेषात् | २ २ २४ |
| आकाशोऽर्थान्तरत्वादिव्यपदेशात् | १ ३ ४१ |
| आचारदर्शनात् | ३ ४ ३ |
| आतिवाहिकस्तल्लिङ्गात् | ४ ३ ४ |
| आत्मकृतेः परिणामात् | १ ४ २७ |
| आत्मगृहीतिरितरवदुत्तरात् | ३ ३ १७ |
| आत्मनि चैवं विचित्राश्च हि | २ १ २९ |
| आत्मशब्दाच्च | २ १ २९ |
| आत्मशब्दाच्च | ३ ३ १६ |
| आत्मा प्रकरणात् | ४ ४ ३ |
| आत्मेति तूपगच्छन्ति ग्राहयन्ति च | ४ १ ३ |
| आदरादलोपः | ३ ३ १५ |
| आनन्दमयोऽभ्यासात् | १ १ १२ |
| आनन्दादयः प्रधानस्य | ३ ३ १२ |
| आनर्थक्यमिति चेन्न तदपेक्षत्वात् | ३ १ ११ |
| आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-गृहीतेर्दर्शयति च | १ ४ १ |
| आपः | २ ३ ११ |
| आप्रायणात्तत्रापि हि दृष्टं | ४ १ १२ |
| आभास एव च | २ ३ ५० |

